( १६० ) संग्रहम्, ( १६१ ) सर्गो,

ॐ संग्रहाय नमः । ॐ सर्गाय नमः ।

भा०—( १ ) " अविदितविभवाय " इति तन्मन्त्रवर्णः. ॥ मन्त्रे ॥
( २ ) " अतिवाय्विन्द्रकर्मगाम् " इति. ❀
अथ भक्तैरयत्नेन संगृह्यते इति—
( संग्रहः ).
(१) "ग्रहवृदनिश्चिगमश्च" इति,अप्. ❀ ३।३।५८॥कौ०पृ०६५३
त्रिविक्रमक्रमणानुग्रहणादिपद्योत्पन्नौ तेभ्यस्सृज्यते इति—
( सर्गः ).

वि०वि०—( १ )"इदि परमैश्वर्ये" अतिपूर्वः.धा०भ्वादिः कौ०पृ०३८७
इदुपधादि.
( २ ) " ऋज्रेन्द्र०" उणा०पा०२ कौ०पृ० ६२०
इन्द्रादेश रन्प्रत्ययान्तो निपातः.
( ३ ) " नेट्० " इति,नेट्. ७।२।८॥ कौ०पृ० ५८१
अतिर्नुर्ब्रस्वसमासः दीर्घः. ❀
अथ,त्रिविक्रमणानुग्रहणादपन्नतया भक्तैरयत्नेन सम्यक् गृह्यत इति—
( संग्रहः ).
( १ ) " ग्रह उपादाने "संपूर्वः. धा०क्र्यादिः कौ०पृ० ४७८
( २ ) " अकर्तरि० " इत्यनुवृत्तौ, ३।३।१९॥कौ०पृ०६४७
( ३ )"ग्रहवृदनिश्चिगमश्च"इति कर्मण्यप्.३।३।५८॥कौ०पृ०६५३
नश्चो मोऽनुस्वारः. पाक्षिकः परसवर्णः. ❀
सृहत्तु निमृष्टात्मतया तेभ्यस्सृज्यत इति ( सर्गः ).

निरु०—१६० भक्तैरप्ययत्नेन संग्राह्यम् (संग्रह) स्स्मृतः ॥१२६॥
१६१ ब्रह्मादिभ्यस्सृज्यते यः ( सर्ग ) तं परिचक्षते ।

१ कर्माणम् ।

( १६२ ) धृतात्मा, { १६३ / ८६९ } नियमो,

ॐ धृतात्मने नमः । ॐ नियमाय नमः ।

गा०—(१) "निसृष्टात्मा सुहृत्सु च" इति. ॐ ग०पु० १७–३३।
एवमात्मदानेन धृता आत्मानोऽनेनेति—
(धृतात्मा). तत्त्वनिबलावलिप्तभूतयोऽपि नियम्यन्तेऽनेनेति—(नियमः).
( १ ) " यमः समुपनिविषु च " इति अप्. ॐ ३।३।६३॥
कौ०पृ०६५४
एवम्, अखिलमकण्टकानुकूलं यच्छतीति—

निर्व०—(१) "सृज, विसर्गे " धा० तुदादिः कौ०पृ०४३९.
( २ ) "अकर्तरि च कारके संज्ञायाम् " ३।३।१९॥ कौ०पृ०६४७
इति, कर्मणि घञ्. गुणः, रपरः.
( ३ ) " चजोः० " इति, कुत्वम्. अत्र गः. ७।३।५२॥ कौ०
पृ०५६०
इत्थम्, आत्मदानेन धृताः आत्मानः अनेनेति—
( धृतात्मा ). अनयोः समासे, आत्मशब्दो व्युत्पादितः.
( १ ) "धृञ्, धारणे" कर्मणि क्तः. धा० भ्वादिः कौ०पृ०४२३
अनिट्. दीर्घः. ततः नान्तलक्षणो दीर्घ इत्यादि. ॐ
तत्त्वातिबलावलिप्तभूतयो नियम्यन्ते अनेनेति—( नियमः ).
( १ ) " यम, उपरमे " निर्दिष्टः. धा० भ्वादिः कौ०पृ०४३०
( २ ) " अकर्तरि च कारके० " इत्यनुवृत्तौ, ३।३।१९॥ कौ०
पृ०६४७
(३) "यमस्समुपनिविषु च " इति नौ ३।३।६३॥ कौ०पृ०६५४
उपपदे, करणे अप्.

निरु०—१६२ येनात्मानो धृता नित्यं स (धृतात्मे)ति कीर्त्यते॥ १२७॥
१६३ नियम्यते जगद्येन ( नियमः ) स उदीरितः ।

{१६४ / ८७०} यमः, ॥ श्लो० ॥ १८ ॥ (१६५) वेद्यो,

---

ॐ यमाय नमः । ॐ वेद्याय नमः ।

---

भा०– (यमः). अच्. यथा.

(१) " यः पृथिवीमन्तरो यमयति " बृ०उ०५–७–३।

(२) "य आत्मानमन्तरो यमयति" इति, ॥ माध्यन्दिनशाखायाम् ॥ अतितत्त्वमन्तर्यामि ब्राह्मणे. यथा,

(३) " यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः " इति. ❀ मनुस्मृ०८–९२।

एवमाविर्भूय प्रकटितातीन्द्रियमहिमत्वात् सर्वैर्वेदितुं शक्यः–

(वेद्यः). ❀

वेदितृभवत्तञ्जिनीम् विद्यामधीते वेद वेति–

---

निर्व०– एवम्, अखिलमकण्टकानुकूलम् यच्छतीति–

(यमः). पूर्ववत् धातुः. पचाद्यच्. ❀

एवमाविर्भूय प्रकटितातीन्द्रियमहिमतया सर्वैरपि वेदितुं शक्य इति–

(वेद्यः).

(१) " विद, ज्ञाने " धा०अदादिः कौ०पृ०४४३

(२) " ऋहलोर्ण्यत् " इति, ३।१।१२४॥कौ०पृ०५६२

कर्मणि हलन्तात् ण्यत्.

(३) " शकिलिङ् च " ३।३।१७२॥कौ०पृ०५५२

इति धात् शक्यार्थेयं कृत्यः. गुणः. ❀

वेदितृभवत्तञ्जिनीं विद्यामधीते वेद वेति–

---

निर्व०–१६४ अकण्टकं चानुकूलं यच्छतीत्यखिलं (यमः)॥१२८॥

१६५ सर्वैश्च वेदितुं शक्यः सौलभ्यात् (वेद्य) ईरितः ।

( १६६ ) वैद्यम्, ( १६७ ) सदायोगी,

---

ॐ वैद्याय नमः । ॐ सदायोगिने नमः ।

---

भा०—( वैद्यः ).

( १ ) "तदधीते तद्वेद" इत्यण्, यथा, ४।२।५९॥कौ०पृ०२३६।

( २ ) "मेरुमन्दरमात्रोपि" ❀ दि०प०

एवमत्र सततजागरूकः— ( सदायोगी ). यथा,

( १ ) " य एषु सुप्तेषु जागर्ति " इति. ❀

---

निरु०—( वैद्यः ).

( १ ) " विद, ज्ञाने " धा० अदादिः कौ०पृ०४४३ १०

( २ ) " संज्ञायांसमजनिषदनिपतमनविदषुञ्शीङ्भृञिणः"

३।३।९९॥कौ०पृ०६५९

इति, स्त्रियां क्यपि, गुणाभावे, अनघापि, दीर्घेच, निष्पन्नात् विद्याशब्दात्.

( ३ ) " तदधीतेतद्वेद " इति. ४।२।५९॥कौ०पृ०२३६ ११

अधीते वेद वा इत्यर्थयोरण्. आदिवृद्धिः.

( ४ ) "यस्य०" इति. लोपः. ❀ ६।४।१४८॥कौ०पृ०५६

इत्यतश्च सततजागरूकत्वात्, सदा योगः अस्यास्तीति—(सदायोगी).

( १ ) "युजिर्, योगे" भावे घञ्. गुणः. धा० रुधादिः कौ०पृ०४७१

( २ ) "चजोः०" इति, कुत्वम्, ग०. ७।३।५२॥कौ०पृ०५६०।०

सतः वक्तन्तस्सर्वशब्दः. ततः,

---

निरु०—१६६ वेदितॄणां भवाख्यस्य गदस्य विनिवर्तनीम् ॥१२९॥

विद्यामधीते वेदेति यो ( वैद्यः ) समुदाहृतः ।

१६७ चिकित्सायां जागरूकः (सदायोगी) ति कथ्यते॥१३०॥

{७४७ / ९२७} (१६८) वीरहा,

---

ॐ वीरघ्ने नमः।

---

भा०—स्ववेदनविहन्तृन् हेतुकवीरान् हतवानिति—(वीरहा). क्विप्.
(१) "ब्रह्मभ्रूणवृत्रेषु०" इति नियमः ३।२।८७॥कौ०पृ०५८४
...निकः. एवम्, कामहा, क्रोधहा, मर्गहा, इत्येवमादयोपि.यथा.

---

...०—(३) "सर्वैकान्यकिंयत्तदः काले दा" इति, दाप्रत्ययः.
५।३।१५।कौ०पृ०३३६
(४) "सर्वस्यसोन्यतरस्यांदि" इति.५।३।६॥कौ०पृ०३३४
...निकस्सादेशः.
(५) "तद्धितश्चासर्वविभक्तिः" इति, १।१।३८॥कौ०पृ०८७
...व्ययसंज्ञा. इत्थं परिनिष्ठितसदाशब्दपूर्वात् योगशब्दात्
...र्थीय इनिः.
(६) "यस्य०" इति, लोपः. ६।४।१४८॥कौ०पृ०५६
(७) "सौच" इति, ६।४।१३॥ कौ०पृ०३४
...न्तलक्षणो दीर्घ इत्यादि.
...न्तपाठे अन्तरेण मत्वर्थीयम् बहुव्रीहिः. नच दीर्घः.❀
स्ववेदनविहन्तृन्, वीरान्— हेतुकवीरान् हतवानिति—( वीरहा ).
(१) "हन, हिंसागत्योः" धा०अदादिः कौ०पृ०४३५
(२) "ब्रह्मभ्रूणवृत्रेषुक्विप्" इति, ३।२।८७॥कौ०पृ०५८४
उपपदनियमस्य प्रायोभिप्रायत्वात् अन्यस्मिन्नप्युपपदे क्विप्. यद्वा,

---

निरु०—१६८ स्वध्यानभञ्जकान् वीरान् हन्ति यस्स तु ( वीरहा )।

{ ७३ / ७४१ } ( १६९ ) माधवो, ( १७० ) मधुः,

ॐ माधवाय नमः । ॐ मधवे नमः ।

भा०—( माधवः ). यथा,
( १ ) " मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवस्स्वामीति शब्दितः " इति,
( २ ) " मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम् । इतिवा. ❀
भा०उ० ६९–४ ।
लब्धविद्योयः स्वदमानत्वात्–( मधुः ).
( १ ) "मन.ज्ञाने" अस्मात् स्वाद्वर्थात्, धा० दिवादिः कौ० पृ० ४७६
( २ ) " फलिपाटिनमि० " इत्यादिना,उणा० पा० १ कौ० पृ० ६१०
उप्रत्ययः, धकारोन्तादेशश्च. यथा,

निर्व०—( माधवः ). एकत्र,
( १ ) " धूञ्,कम्पने " पचाद्यच्. धा० क्र्यादिः कौ० पृ० ४७६
गुणावादेशौ. साविनश्चायमन्यथा चापि भागेव.
( २ ) " माङ्,माने " धा० जुहो० कौ० पृ० ४५०
( ३ ) "अन्येष्वपि० "इति,डः,टिलोपः ३।२।१०१॥ कौ० पृ० ५८७,
स्त्रियामजाद्याप्, दीर्घः, अन्यत्र पृषोदरादिः. ❀
लब्धविद्यो यो मन्यते स्वदत इति–( मधुः ).
(१) "मन,ज्ञाने" आस्वादनकर्मेहायम्, धा० दिवादिः कौ० पृ० ४५६

निरु०—१६९ मा विद्या च हरेः प्रोक्ता तस्याः स्वामी धवः स्मृतः॥
१३१॥
तस्मान्माधवनामासौ ब्रह्मविद्याप्रदो मनुः ।
मौनाद्ध्यानाच्च योगाच्च ( माधवः ) परिकीर्तितः ॥ १३२ ॥
१७० भक्तेभ्यो लब्धविद्येभ्यो स्वदमानतया ( मधुः ) ।

## (१७२) महामायो,

### ॐ महामायाय नमः।

ना०—कथम्—

(महामायः). महती—अप्रपन्ननिखिलजनमोहिनी, निरस्करिणीवत् माया अस्येति. यथा,

(१) "गुणमायासमावृतः" इति, जि० ३।

नेयं मृषा मायेति वक्ष्यते. ❀

वि०—(६) "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति, २।४।२६॥कौ० पृ० १५६ परवल्लिङ्गतायां प्राप्तायाम्,

(७) "द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः" इति. तत्र-तिनिः. ❀ २।४।२६॥कौ०पृ० १५६

अथ,मित्थम्; यतः, महती—अप्रपन्नजनमोहिनी—माया—गुणमाया, यस्येति—(महामायः).

(१) "माङ्, माने" धा० जुहो० कौ०पृ० ४५०

(२) "मच्छासस्रियो यः" उणा० पा० ४कौ० पृ० ६३७

इति, यः. स्त्रियामतष्टाप्. दीर्घः.

(३) "मह, पूजायाम्" धा० भ्वादिः कौ० पृ० ४११

(४) "वर्तमानेपृषत्०" उणा० पा० २कौ० पृ० ६२२

इत्यादिना अतिः, शतृवद्भावश्च निपात्यते. उगित्वान्ङीप्.

(५) "स्त्रियाःपुंवद्भाषितपुंस्कादनूङ्समानाधिकरणेस्त्रियामपूरणीप्रियादिषु" ६।३।३४॥कौ० पृ० १६०

इति, पूर्वपदस्य पुंवद्भावः. महत आत्वम् दीर्घः. बहुव्रीहौ,

(६) "गोस्त्रियोरुपसर्जनस्य" इति, उपसर्जनह्रस्वः. ❀ १।२।४८॥कौ०पृ० १२९

निरु०—१७२ माया यस्याप्रपन्नानां सर्वेषामस्ति मोहनी।
(महामायः) स विज्ञेयो वस्वर्णोमनुरुज्ज्वलः॥१३४॥

**( १७४ ) महावलः, ॥ श्लो० ॥ १९ ॥ ( १७५ ) महावुद्धिर्,**

**ॐ महावलाय नमः । ॐ महावुद्धये नमः ।**

भा०— सहायापेक्षकर्त्रन्तरव्यावर्तकं महत् वलमस्येति— ( महावलः ). अनेन ह्ययम्, अपरिमितक्रियोपि अनाकलित-श्रमः, स्वे महिम्नि तिष्ठन्, अवधीरिताधारान्तरः, दुर्वारव्यापार-संततशक्तिसमुल्लासः, शरीरमिव सकलं विभर्ति.

( १ ) " वहुलयन् वहुलम् " इति च मौलाः. ॥ मौल० ॥

एतद्देशो जीवनसमीरणगिरिधरादौ. ❀

असर्वज्ञकारणमन्ययवच्छेदमाह. महत् ज्ञानमस्येति—( महावुद्धिः ). इदं चास्याशेषदेशकालस्वभावविप्रकृष्टाऽविप्रकृष्टविषयम्; सार्वज्ञ्यात् अविशयविपर्यासतया यथार्थम्; क्लेशकर्म—

निर्व०— सहायापेक्षकर्त्रन्तरव्यावर्तकं महत् वलम्—अपरिमित-क्रियत्वेपि, अनाकलितश्रमत्वलक्षणोर्जा, अस्येति— ( महावलः ).

(१) "वल, प्राणने" पचाद्यच्. अग्निधौ, धा० चुरादिः कौ० पृ० ४८२

( २ ) " पचादीनामुपसंख्यानम् नपुंसकत्वादिनिवृत्त्यर्थम् " ३।१। ५६॥ कौ० पृ० ६५३

इतिवा अच्. शेषं प्राग्वत्.

एतद्देशो जीवनसमीरणादौ. ❀

असर्वज्ञकारणव्यावर्तिका महती वुद्धिः— अविशयविपर्याससार्वज्ञ्य-लक्षणं ज्ञानम्, अस्येति—( महावुद्धिः ).

( १ ) " वुध, अवगमने " भावे, धा० दिवादिः कौ० पृ० ४२०

निरु०— १७४ कर्त्रन्तरानपेक्षो यस्मृष्टेस्स स्या ( न्महावलः ) ।
१७५ ( महावुद्धि ) महत् ज्ञानं स्वरूपं यस्य सोच्यते ॥ १३६ ॥

१ सर्वज्ञात । सार्वज्ञ्यमिति अवि ।

भा०— विपाकाशयाद्यपरामर्शात्, स्वाभाविकत्वात्, नित्यं च; चक्षुरादिकरणनिरपेक्षं च; तदपेक्षं च स्वातन्त्र्येण, पुण्डरीकाक्षत्वश्रुतिश्रवस्त्वादेः. नच रूपरसादिग्रहणे करणनियमः, सर्वेण सर्वकार्यशक्तेः; तथापि हि नियतेषु चक्षुषैव पश्यति शृणोति च, कथमिदं सर्वशक्तेर्दुःशकम्. यथोक्तम् जयाख्याम्,

( १ ) "सर्वतःश्रुतिमांल्लोके यथा ह्यचक्षुःश्रवोरगः" इति. ॥जयन्त०॥

करतलामलकवदखिलावलोकनवदपरोक्षं च, वैशद्यात्; अमोघं च सर्वविषयत्वात्. यथा,

( २ ) "विश्वतश्चक्षुरुत विश्वतो मुखः" तै०ना०६—१—१८।

( ३ ) "पश्यत्यचक्षुः स शृणोत्यकर्णः" श्वे०उ०३—१९।

( ४ ) "सर्वतोऽक्षिशिरोमुखम्" इत्यादि. तै०उ०।

आहुश्च नाथमुनिमिश्राः,

(५) "यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः" इति.॥न्यायतत्त्वे॥

यत्तु, कैश्चित् सर्वज्ञत्वमाहिरे,

( ६ ) "एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते। नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते" इति.

तत्. दोषादिकुविनिर्विषयत्, तत्कल्पनात्; अन्यथा शास्त्रविरोधाच्च.

( ७ ) "निर्दोषैर्दर्शकत्वं तस्य स्यादनिश्चता" इति,

शास्त्रीयसर्वज्ञत्वस्यानवगमात्; अतएव अन्यपरीक्षितं दुःस्थं वा; चक्षुःश्रवःप्रभृतिषु काकोलूकगृध्रादिषु मन्त्रसिद्धौषधतपःप्रभावादिसंस्कृतेषु च, करणानां ज्ञानकार्यव्यतिहारतन्नतापकर्षतारतम्यदर्शनात्, सार्वज्ञ्यशास्त्रस्यायोग्यार्थतापि दुर्वचा. गुणान्तरवैचित्र्येपि एषैव दिक्.

---

१ नित्यंचेव।

१७६ ) महावीर्यो,

ॐ महावीर्याय नमः ।

[illegible]ा०—अस्य लवो बद्धमुक्तनित्येषु चैतन्यम्. ❀

[illegible]भिमावसाप्यमानदुग्धादिकारणेभ्यो भेदकम्, सत्यपि हेतावविकारल-
[illegible]क्षणं महत् वीर्यमस्येति—
( [illegible]वीर्यः ). अगरुमृगमदकस्तूरिकाकुसुमामोदवत्.
[illegible] सन्निधिमात्रेण निर्मर्यादकार्यकारी ह्ययम्. यथा,
( [illegible] ) " यस्य सन्निधिमात्रेण गन्धः क्षोभाय जायते । मनसो नोपकर्तु-
[illegible] नु नथानौ परमेश्वरः" इति.
[illegible]: यागोऽभ्यन्तरेषु अक्षोभ्यत्वम्. ❀

[illegible]०—( २ ) "स्त्रियां क्तिन्" इति, क्तिन्. ३।३।९४॥ कौ० पृ० ६५८
[illegible]: निहतत्वात् नेट्.
( ३ ) " झयः०" इति धत्वम्. ८।२।४०॥ कौ० पृ० ३८५
[illegible] [illegible]म्. अन्यत्र प्रागवत्.
( ४ ) " स्त्रियाः पुंवत्०" ६।३।३४॥ कौ० पृ० १६०
इति पुंवद्भावो विशेषः. एतल्लवो बद्धमुक्तादौ. ❀
[illegible]दुर्गाणदुग्धादिकारणव्यावर्तकं महत् वीर्यम्— सत्यपि विकारहेतौ,
[illegible]विकारलक्षणमक्षोभ्यत्वमस्येति—( महावीर्यः ).
०( १ ) " वीर विक्रान्तौ" धा० चुरादिः कौ० पृ० ४९०
चुरादौ कथादिः. अदन्तः. णिच्.
( २ ) " अतोलोपः" इति, अल्लोपः. ६।४।४८॥ कौ० पृ० ३९७
( ३ ) " अचो यत्" ३।१।९७॥ कौ० पृ० ५५७
इति, यत्. णेर्लोपः. एतद्गुणो योगीश्वरादौ. ❀

२५ निरु०—१७६ हेतौ सति विकारित्वेप्यविकारित्वलक्षणम् ।
महद्धि वीर्यं यस्येति ( महावीर्य ) स्स च स्मृतः ॥१३७॥

## ( १७७ ) महाशक्तिर्, ( १७८ ) महाद्युतिः, ।

**ॐ महाशक्तये नमः । ॐ महाद्युतये नमः ।**

भा०—पशुपतिमतावगतोपादानशक्तिविकलनिमित्तमात्रव्यावर्तिका महती शक्तिरस्येति— ( महाशक्तिः ). सा हि साधनग्रामविनियोगलक्षणा, स्वशरीरैकदेशीकृतप्रकृतिपरिणामयोग्यतालक्षणा, सत्याऽसत्या वा, नासत्या सर्वत्र सर्वसंवादिनी. ऊर्णनाभिश्रुतेः कीटस्यापि निमित्तस्यैव उपादानशक्तिस्तत्कर्त्री. कथमिदं सर्वज्ञशक्तिस्तत्कर्त्री ?

अस्या विप्रुट्प्रधानदधिदुग्धादौ प्रतिक्षणपरिणामित्वम्. ❀ सहकार्यपेक्षकारणवैलक्षण्यकरं तदनपेक्षालक्षणं तेजो महदस्येति— ( महाद्युतिः ). यत्, बाह्यान्तरतमोविरोधित्वपरवर्गयोः.

निर्द०—उपादानशक्तिविकलनिमित्तमात्रव्यावर्तिका महती शक्तिः-साधनग्रामविनियोगस्वशरीरैकदेशीकृतप्रकृतिपरिणामयोग्यतालक्षणसामर्थ्यम्, अस्येति—
( महाशक्तिः ).
( १ ) "शक्लृ,शक्तौ" धा०स्वादिः कौ०पृ०४६२
भावे ❀ स्त्रियां क्तिन्. अनिट्.शक्नोति तु पदे शाकिव पुंस्कारो विशेषः.अस्या विप्रुट्प्रधानदुग्धादौ. ❀
सहकार्यपेक्षकारणव्यावर्तिका महती द्युतिः—तदनपेक्षालक्षणं तेजः, अस्येति—
( महाद्युतिः ).

निरु०—१७७ शक्तिश्च महती यस्य ( महाशक्ति ) स्स कीर्तितः।
१७८ तेजोऽनपेक्षरूपं स्वं महद्यस्य ( महाद्युतिः ) ॥ १३८ ॥

१ परिणामतोपोह्यतालक्षण । २ सर्वशक्तेस्तत्कर्त्री ।

## {१७९ / ६६२} अनिर्देश्यवपुः,

ॐ अनिर्देश्यवपुषे नमः।

भा०— क्रमेण रमणीयं भीषणं च भवति. अस्य विन्दुः, द्युमणिमाणिक्यादौ प्रकाशः. षट्सु चामीषु [१७३—१७८] महत्त्वविशेषणेन एते गुणाः, कस्यैव परावरं कार्यकलापं प्रवर्त्य, अशेषेणालब्धामिषाः महोदधाविव महौघाः भगवत्यनन्ते भान्तीति निवेद्यते. अतिप्रथितेयं प्रक्रिया,

(१) "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" श्वे० उ० ६—८।

(२) "तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः" वि० पु० ६—५—८५।

(३) "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" इत्यादौ. वि० पु० ६—५—७९।

भगवच्छास्त्राणि कार्त्स्न्येनैतदर्थानि.

एषु षट्स्वेव सौशील्यवात्सल्यादयः अगणितगुणाः, केनापि प्रयोजनेनान्तर्भाव्यन्ते. ॐ

एतत्षाड्गुण्यविग्रहत्वात्—(अनिर्देश्यवपुः).यथा.

नि०— (१) "वप्, बीजतन्तुसन्ताने" धा० भ्वादिः कौ० पृ० ४११

(२) "सर्वधातुभ्य इन्" इति. इन. उणा० पा० ४ कौ० पृ० ६३७

(३) "इणुषपात् कित्" इति. वि त. अपुणः. उणा० पा० ४ कौ० पृ० ६३७

अन्यत् सर्वं प्राग्वत. अस्य विन्दुः द्युमणिमाणिक्यादौ.

इत्थम्, षड्गुणा व्याख्याताः. एष्वेव इतरेषामन्तर्भावः. ॐ

एतत्षाड्गुण्यविग्रहत्वेनानुपमत्वात्, अनिर्देश्यम्—इदमीदृशमिति निर्देष्टुमशक्यम्, वपुः—शरीरम्, अस्येति—(अनिर्देश्यवपुः).

निरु०—१७९ ज्ञानादिषाड्गुण्यमयमुपमानविवर्जितम्।
वपुरस्यास्ति तेजिष्ठम् (अनिर्देश्यवपु) र्हि सः॥ १३९॥

१ लब्धात्मधाराः ततोस्मिन् लब्धपर्याप्तस्थानका महो। २ प्रयोजकेन।

{ २२ / २२२ } ( १८० श्रीमान्, )

ॐ श्रीमते नमः ।

ना०—तदनुरूपया दिव्यभूषणसंपदा नित्ययुक्तः,-( श्रीमान् ).

इत्थं विविधगुणरूपानुरूपाम्भोधिगम्भीरभावः,—

व्यु०—( १ ) " डुवप्, बीजसन्ताने " धा०भ्वादिः कौ०पृ० ४३२
( २ ) "जनेरूनिः" इति वर्तमाने.उणा०पा० २ कौ०पृ०६२४
( ३ ) " अतिपूर्वपियाजितनिधनितपिभ्यो नित्" उणा०पा०२कौ०
पृ० ६२४
० रूपिः उनिः नित्.
( १ ) " दिश,अतिसर्जने " निपूर्वः.धा०तुदादिः कौ०पृ० ४६४
( २ ) " ऋहलोर्ण्यत्" इति, ३।१।१२४॥ कौ०पृ० ५६२
( २ ) ... ण्यत्. गुणः. नञ्समासः. नलोपः. ❀
... श्रीः—दिव्यभूषणसंपद्, अस्य नित्यमस्तीति—
( श्रीमान् ).
( १ ) " श्रिञ्,सेवायाम् " धा०भ्वादिः कौ०पृ० ४२२
( २ ) " क्विब्वचि० "इत्यादिना,उणा०पा० २कौ०पृ० ६२१
... दीर्घश्च निपातनात् श्रीशब्दात्. नित्ययोगे,
( ३ ) " तदस्य० " इति मतुप्. ५।२।९४॥ कौ०पृ० ३२५
( ४ ) " अत्वसन्तस्य० " इति, ६।४।१४॥ कौ०पृ० ७८
अत्वन्तात् दीर्घः. उगित्त्वात् नुम्. ❀ हल्ङ्यादिलोपः, ❀ संयोगान्तस्य लोपः, तस्यासिद्धत्वात् नलोपो न. ❀ इत्थं विविधगुणरूपानुरूपाम्भोधिगाम्भीर्यात्,अमेयः-अपरिमेयः,आत्मा-स्वभावः,अस्येति-

निरु०—१८० दिव्यभूषणसंपद्भिर्युक्तश् ( श्रीमान् ) सदा स्मृतः।

## {१८१ / १०३} अमेयात्मा, (१८२) महाद्रिधृत्, ॥

### ॐ अमेयात्मने नमः। ॐ महाद्रिधृते नमः।

भा०—( अमेयात्मा ). ॐ

अथ तदनुगुणयथेष्टविहारचेष्टितः,—

( महाद्रिधृत् );—महान्तं मन्दरं मथने धृतवान्. ॐ

निर्व०—(अमेयात्मा ). व्युत्पादि हि अनेनैतन्नाम्नः ?

( १ ) "माङ्, माने" ॐ अचोयत्. धा० जुहो० कौ०पृ०४५०

( २ ) "ईद्यति" इति ईत्त्वम्. गुणः. नञ् ६।४।६५।।कौ०पृ०५५७

समासे नलोपः. दीर्घः. ततः नान्तलक्षणो दीर्घ इत्यादि. ॐ

अथ, तदनुगुणयथेष्टव्यवहारचेष्टितम् प्रदर्श्यते. स च

मथनसमये महान्तमद्रिम् — मन्दरम् धृतवानिति,—

( महाद्रिधृत् ).

( १ ) "धृञ्. धारणे" क्विप्. धा० भ्वादिः कौ०पृ०४२३

( २ ) "ह्रस्वस्य०" इति तुक्. ६।१।७१।।कौ०पृ०५५९

अगुणः. ( अद्रिधृक् ) इति पाठे,

( ३ ) "ञिधृषा, प्रागल्भ्ये" धा० स्वादिः. कौ०पृ०४६३

स्वादिः. इह धारणकर्मा चायम्. लक्षणया वा तदर्थलाभः.

क्विप्. शस्य जश्त्वेन डः. तस्य.

( ४ ) "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" ३।२।५९।। कौ० पृ०६७ इत्यत्र दधृगिति निपातनेन धृषेः क्विनो विधानात्.

( ५ ) "क्विन्प्रत्ययस्य कुः" इत्यत्र, ८।२।६२।।कौ०पृ०६८ बहुव्रीह्याश्रयणादन्यत्रापीति अत्र क्विप्यपि कुत्वम् गः.

निरु०—१८१ सिन्धुगम्भीरभावो यो(त्वमेयात्मा)स कीर्तितः।।१४०।।
१८२ महान्तं मन्दरं योहि धृतवान् स ( महाद्रिधृत् )।

श्लो० ॥ २० ॥ ( १८३ ) महेष्वासो,

ॐ महेष्वासाय नमः ।

भा०—तथा, महान्—मनोहारी, इषूणामासः-क्षेपः-सिन्धुबन्धदशकन्धरवधादौ यस्य, सः,—
( महेष्वासः ). ❀ ललितधरणीभरणशीलः—

निर्व०—ततः, तस्य वा चर्त्वम् कः. एवमेवान्यत्राप्येतादृशे प्रदेशेऽवसेयम्. शेषं प्राग्वत्.
( ६ ) " अद,भक्षणे" धा०अदादिः कौ० पृ०४३५
( ७ ) " अदिशदिभूशुभिभ्यःक्विन्" इति,क्विन्. उणा०पा०४कौ० पृ०६३५
निहतत्वाद् नेट्. व्युदपादि महाशब्दः? दीर्घः. ❀
सिन्धुबन्धदशकन्धरवधादौ, महान् मनोहारी, इषूणां—शराणाम्, आसः—असनं क्षेपः, अस्येति—
( महेष्वासः ).
( १ ) " असु,क्षेपणे" भावे घञ्. वृद्धिः. धा०दिवादिःकौ०पृ०४५१
( २ ) " ईष,गतिहिंसादानेषु" धा०भ्वादिः कौ०पृ०४०७
( ३ ) " भृमृशीङ्०" इत्यत उः. उणा०पा०१कौ०पृ०६०९
( ४ ) " उन्देरिच्चादेः " उणा०पा०१कौ०पृ०६१०
इत्यत इच्चादेरिति वर्तमाने,
( ५ ) " ईषेःकिच्च" उणा०पा०१कौ०पृ०६१०
इति,उः,कित्, आदेरिदादेशश्च. अगुणः. यण् वः.महाशब्दः प्राग्वत्.
❀ आद्गुणः. ❀
तदानीं, महीम्— ललितधरणीम् तच्छीलो बिभर्ति भरतीति वा,—

निरु०—१८३ (महेष्वास) स्स विज्ञयश्चण्डकोदण्डमण्डितः ॥ ३४१॥

{१८६, ४६२} सतांगतिः, । {१८७, ६४४} अनिरुद्धम्,

ॐ सतांगतये नमः । ॐ अनिरुद्धाय नमः ।

भा०—( सतांगतिः ).—स्वच्छन्दचेष्टितैरपि प्रणतप्रियंकरः. ❀ एवं निरूढनिरोधनिरवधिकजीवलोकजीवातुदिव्यचेष्टितः,—( अनिरुद्धः ).

(१) "अपरिमितचेष्टो भगवाननिरुद्धः" इति मौलाः ? ❀ ॥मौलसं०॥ अस्यानिरुद्धस्यावतारकन्दस्य हंसावतारः.

निर्व०—स्वच्छन्दचेष्टितैरपि, सतां—प्रणतानां, गतिः—प्रियंकरतया गम्य इति,—

( सतांगतिः ).

( १ ) "गम्लृ, गतौ" धा० भ्वादिः कौ० पृ० ४३०

कर्मणि ❀ स्त्रियां क्तिन्. अनिट्.

( २ ) "अनुदात्त०" इत्यादिना, ६।४।३७॥ कौ० पृ० ४३२

अनुनासिकलोपः इत्यादि.

( ३ ) "अस्, भुवि" धा० अदादिः कौ० पृ० ४४४

शतरि व्युत्पादितः सच्छब्दः. तत आम्. अनुस्वारादि. ❀

एवम्, निरवधिकजीवलोकजीवातुदिव्यचेष्टितया, निरुद्धः—प्रति-रुद्धः, नेति—

( अनिरुद्धः ).

( १ ) "रुधिर्, आवरणे" धा० रुधादिः कौ० पृ० ४७०

निपूर्वः. कर्मणि क्तः. अगुणः. अनिट्.

( २ ) "झषः०" इति, तस्य धः. ८।२।४० ॥ कौ० पृ० ३८९

निरु०—१८६ प्रणतानां प्रियकर ( स्सतांगति ) रिहोच्यते ।
१८७ अनन्तचेष्टायुक्तत्वा (दनिरुद्ध) उदाहृतः ॥ १४३ ॥

# ( १८८ ) सुरानन्दो, { १८९ / ८४३ } गोविन्दो,

ॐ सुरानन्दाय नमः । ॐ गोविन्दाय नमः ।

गा०—आनन्दकत्वेन सुरा आनन्दन्ति अस्मादिति—(सुरानन्दः).
तद्गवां—स्तुतिगिराम्, विन्दः—
( गोविन्दः ).
( १ ) "गवादिषु विन्देस्संज्ञायाम्" इति,श०. ३।१।१३८। कौ० पृ० ५६८
तैः सुरैः स्तूयमानोपकारः. ❀

निर्व०—( ३ ) "झलांजशूझशि" ८।४।५३॥ कौ०पृ०९,
इति,जश्त्वेन पूर्वस्य झस्य दः. तत्स्थाने नकारः.
अथ, अवतारकन्दस्य गल्यानिकस्य द्वितीयकार उच्यते. आनन्दक-
त्वेन सुरा आनन्दन्ति अस्मादिति—( सुरानन्दः ).
( १ ) "टुनदि,समृद्धौ" धा० भ्वादिः कौ०पृ० ३८७
आदिद्वितः. इदित्वात् नुमित्यादि.
(२)"अकर्तरि च०" इति,अपादाने घञ्. ३।३।१९॥ कौ०पृ०६५७
( ३ ) "षु,प्रसवैश्वर्ययोः" एक०. धा० अदादिः कौ०पृ०४४०
( ४ ) "सुसूधा०" उणा०पा० २ कौ०पृ० ६२०
इत्यादिना, क्रन्. अगुणः. अनिट्. दीर्घः. पर्यासमानः. ❀
तैस्स्तूयमानोपकारतया तेषां गाः-स्तुतिगिरः, विन्दति लभते इति—
( गोविन्दः ).

---

निरु०—१८८ ( सुरानन्द ) स्सुरान् सर्वानानन्दयति यस्सदा।
१८९ गवां स्तुतिगिरां विन्दो ( गोविन्द ) स्स उदाहृतः ॥ १४४

## (१९०) गोविदांपतिः, ॥

ॐ गोविदांपतये नमः ।

---

भा०—गावः-वेदगिरः, तद्विदां ज्ञानिनां ज्ञानयज्ञाराध्यत्वेन पाता—(गोविदांपतिः). यथा,

(१) "हंसमूर्तिमथात्मानं ज्ञानयज्ञगुरुं स्मरेत्" इति. ❀

---

निर्व०—(१) "विदॢ, लाभे" धा०तुदादिः कौ०पृ०४७०

(२) "गवादिषु विन्देः संज्ञायाम्" ३।१।१३८॥कौ०पृ०५६८

इति,व्युत्पादयिष्यमाणे च गोशब्दे उपपदे,शः. अनुपदमेव च व्युत्पादयिष्यते. एवमेव सर्वत्रैतादृशे प्रदेशे अवधातव्यम्.-श इत्.

(३) "शेमुचादीनाम्" ७।१।५९॥ कौ०पृ० ४७०

इति, नुम्, अनुस्वारपरसवर्णौ.

(४) "गम्लृ,गतौ" धा०भ्वादिः कौ०पृ० ४३०

(५) "गमेर्डोः" इति, डोः. टिलोपः. ❀ उणा० पा०२कौ० पृ० ६२२

तथा,गाः—वेदगिरः, विन्दन्ति—जानन्ति, तेषां गोविदां ज्ञानिनाम्, पतिः— ज्ञानयज्ञाराध्यतया पातीति—

(गोविदांपतिः).

(१) "पा,रक्षणे"धा०अदादिः कौ०पृ० ४४३

(२) "पातेर्डतिः"इति,डतिः. टिलोपः.उणा०पा०५कौ०पृ०६४२

(३) "विद,ज्ञाने"धा०अदादिः कौ०पृ० ४४३

क्विप्.अगुणः. व्युत्पादि हि गोशब्दः, ततः,समुदायादाम्. अनुस्वार-पाक्षिकपरसवर्णौ. ❀

---

निरु०—१९० गावो वेदगिरः प्रोक्ताः गोविन्दस्तत्सुपालनात् ।

## ( १९५ ) भुजगोत्तमः, ।

## ॐ भुजगोत्तमाय नमः ।

भा०—(पद्मनाभोऽमरप्रभुः ).इत्यत्र ( श्लो०॥५॥ना०४८—४९ ) व्यूहश्चिमोऽनिरुद्धः पद्मनाभ उक्तः. इह प्रादुर्भावप्रथमः पद्मनाभो विवक्ष्यते.— ❀

( भुजगोत्तमः ),—भुजगस्य—शेषस्य, उत्तमः—शेषी, अनन्तभोगपर्यङ्कशयनः.

निर्व०—(१)"भुज.पालनाभ्यवहारयोः" धा० रुधादिःकौ०पृ०४४१.
(२)"धाप्रीवस्यज्यतिभ्यो नः" इति.नः.उणा०पा० ३कौ०पृ०६४५,१०
( ३ ) "नेड्०" इति, नेड्.गुणः रपरः. ७।२।८॥कौ०पृ०५८३
( ४ ) "ण्याषयां लोपः०"८।४।१॥कौ०पृ०३२
इति,णत्वम्. [illegible]पूर्वो बहुव्रीहिः.अ[illegible]त्र,
( ५ ) "गॄ[illegible]" [illegible]कौ०पृ०४२३
( ६ ) "[illegible]" [illegible]।१०१॥ [illegible]पृ०५८५
[illegible] [illegible] [illegible] दीर्घस्य ह्रस्वः [illegible] [illegible] पूर्व[illegible].
( ७ ) "[illegible]" धा० [illegible] कौ०पृ०४५०
[illegible] [illegible] [illegible],[illegible]. [illegible], सुप्सुपेः समासः. [illegible]

व्यूहश्चिमोऽनिरुद्धः पद्मनाभः प्रागुक्तः. अथ,प्रादुर्भावप्रथमोऽपि पद्मनाभो वक्ष्यते. तस्य त्रैलोक्यग्रासबृंहितस्य अनन्तभोगपर्यङ्कशयनत्वेन ध्येयतया सः भुजगस्य— शेषस्य. उत्तमः—शेषीति—( भुजगोत्तमः ). उत्कृष्टात् आतिशायनिकस्तमप्. णत्वम्.

निरु०—१९५ प्रादुर्भावेषु प्रथमः पद्मनाभोऽथ उच्यते ।
भुजगस्योत्तमःशेषी ( भुजगोत्तम ) उच्यते ॥ १४१ ॥

( १९३ ) हंसः, { १९४ / ८५९ } सुपर्णौ,

ॐ हंसाय नमः। ॐ सुपर्णाय नमः।

ना०—क एवम्;—( हंसः ).

( १ ) " हन्ता सङ्घानाम् " इतिमौलाः. ॥ मौलसं० ॥

मनोहरं हन्ति— गच्छति, स्मयते इति वा,—

( हंसः ). पृषोदरादित्वात्साधुः. यथा,

( २ ) " सत्त्वस्थशुभाश्रयपरमहंसाय " इति. ❀ ॥ ध्याने ॥

" शोभनपर्णत्वात्, संसारपारनयनाद्वा—

( सुपर्णः )." इति नैरुक्ताः.

निर्व०—एवम्.हन्ति— हिनस्ति,मनोहरं हन्ति— गच्छति,हसति—स्मयत इति वा—( हंसः ).पूर्वत्रोभयत्र,

( १ )"हन.हिंसागत्योः" धा०अदादिः कौ०पृ० ४३५

( २ )"वृतृवदिहनिकमिकषिभ्यःसः" उणा०पा०३कौ०पृ० ६२७

इति. सः. अनिट्.

( ३ ) "नश्च०"इति,नस्यानुस्वारः.अष्ट०८।३।२४॥कौ०पृ०२०

( ४ )"हसे हसने"पचाद्यच्.धा०भ्वादिः कौ०पृ० ४१०

पृषोदरादित्वेन वर्णागमात्सुनि साधुः.अनुस्वारः.

न च. शोभने पर्णे पक्षौ अस्येति.—

निरुक्तानुसारात्, सुष्ठु पारं—संसारपारं नयतीति वा.—

( सुपर्णः ). पूर्वत्र.

निरु०—१९३हंसादेवंविधो हन्ति गच्छतीति मनोहरम् ॥ १४७॥

( हंसः )

१९४शोभनपर्णत्वात् ( सुपर्ण )इति कथ्यते।

संसारपारनयनात् ( सुपर्ण )इति वा मतः ॥१४८॥

१ स्मयते इति । २ डः यथा।

## (१९६) हिरण्यनाभस्,

### ॐ हिरण्यनाभाय नमः।

भा०—(१) "मानसेऽनन्तशयने दिव्यबोधतनुर्विभुः"॥ ध्याने॥ इति तद्ध्यानविधौ. आरण्यपर्वणि,

(२) "सुष्वाप भगवान् विष्णुरप्स्वप्येक एवहि। नागस्य भोगे महति, शेषस्यामिततेजसः"॥ वैष्णवे, भा०आ०।

(३) "भोगिशय्यागतश्शेते त्रैलोक्यग्रासबृंहितः" इति.

❀ वि०पु०।(हिरण्यनाभः); ❀ स एव,—

निर्व०—(१) "हम्म,गतौ" धा०भ्वादिः कौ०पृ० ४३०

(२) "अन्यत्रापि०" इति डः. टिलोपः. ३।२।४८॥ कौ०पृ० ५७८

(३) "भुज,पालनाभ्यवहारयोः" धा०रुधादिः कौ०पृ० ४७१

(४) "हलश्च" इति, करणे घञ्. ३।३।१२१॥ कौ०पृ० ६६३

(५) "भुजन्युब्जौ पाण्युपतापयोः" ७।३।६१॥ कौ०पृ० ५६३

इति, निपातनादगुणत्वमकुत्वंच. आहुणः. ❀

स एव, हिरण्यम्—स्वसंकल्पजनितानल्पपद्महिरण्मयकर्णिकारयापद्म-मेरुरूपं रुक्मम्, नाभौ अस्येति—(हिरण्यनाभः).

(१) "णह,बन्धने" णोनः. धा०दिवादिः कौ०पृ० ४७५

(२) "वसिवपि०" इत्यतः इञिति वर्तमाने, उणा०पा० ४ कौ० पृ० ६३८

(३) "नहेर्भश्च" उणा०पा० ४ कौ०पृ० ६३८

इति, इञ् भश्चान्तादेशः. वृद्धिः.

(४) "हर्य,गतिकान्त्योः" धा०भ्वादिः कौ०पृ० ४०४

निरु०—१९६ (हिरण्यनाभ) स्सौन्दर्यनाभिर्यस्येति स स्मृतः।

## {१९९ / ७०} प्रजापतिः, ॥

ॐ प्रजापतये नमः ।

ना०— (१) " कदाचित्तस्य सुप्तस्य नाभ्यां कामादजायत। दिव्यमष्टदलं भूरि पङ्कजं पार्थिवं महत् ॥ यस्य हेममयी दिव्या कर्णिका मेरुरुच्यते " ॥ इति.

तत्स्रष्टव्यप्रभृतीनाम्—

(प्रजा—)—नाम्, (पतिः) नायकः. नैमित्तिकसृष्टिप्रलयविषयं चेतन्मुख्यम्.

अथ नृसिंहावतारः.—

निर्द०— (३) " पद, गतौ " धा० दिवादिः कौ० पृ० ४५५

(४) " अर्तिस्तुसु० " इत्यादिना मन्. अनिट्. उणा० पा० १ कौ० पृ० ६१६

ततः पूर्ववदजादि.

एवं. प्रजानाम्— तत्स्रष्टव्यप्रभृतीनाम्, पतिः— नायकः इति— (प्रजापतिः).

(१) " पा, रक्षणे " पातेर्डतिः. डेर्लोपः. धा० अदादिः कौ० पृ० ४४३

(२) " जनी, प्रादुर्भावे " प्रपूर्वः. धा० दिवादिः कौ० पृ० ४५४

(३) " उपसर्गेच संज्ञायाम् " ३।२।९९॥ कौ० पृ० ७८५

इति. डः. टिलोपः. अतष्टाप्. दीर्घः. नैमित्तिकसृष्टिप्रलयविषयं चेतत्.

अथ. नृसिंहावतारः. मृत्युमृत्युतया मृत्युविरोधीति—

निरु०— १९९ नैमित्तिके तु ये सृष्टाः प्रजा ब्रह्ममुखास्तथा॥१५२॥

श्लो० ॥ २२ ॥ ( २०० ) अमृत्युम्,

ॐ अमृत्यवे नमः ।

ना०— ( अमृत्युः ). मृत्युविरोधी, मृत्युमृत्युत्वात्. ❀

---

इति श्रीहरितकुलतिलक— श्रीवत्साङ्काचार्यसूनोः,

श्रीरङ्गराज— श्रीपराशरभट्टस्य कृतौ,

श्रीविष्णुसहस्रनामविवरणे.

भगवद्गुणदर्पणे.

द्वितीयं शतकं समाप्तम्.

---

निर्व०— ( अमृत्युः ).

( १ ) " मृङ्. प्राणत्यागे " धा० तुदादिः को० पृ० ४६८

( २ ) " भुजि मृङ्भ्यां युक्त्युकौ " उणा० पा० ३ को० पृ० ६२६

इति. त्युक्. प्रागुक्तरीत्या न कारः. अगुणः. अनिट्. नञ्—तत्पुरुषः. नलोपः. ❀

इति कुशिककुलतिलक श्रीवेङ्कटेश्वर-महाचार्यवर्यात्मज-

वरददेशिकतनयवरदगुरुचरणानुचरवार्यसूरिविरचिते,

श्रीपराशरभट्टार्यभाषित-

श्रीमद्विष्णुसहस्रनामभाष्यानुगे.

भगवन्नामसहस्रनिर्वचने,

द्वितीयं शतकं संपूर्णम्.

---

निरु०— २०० नारसिंहमथ स्तौति सर्वमृत्युनिवारणम् ॥ १५३ ॥

मृत्योर्विरोधिरूपो यो मृत्युमृत्युस्वरूपतः ।

( अमृत्यु ) रिति तं प्राहुः सप्तार्णो मृत्युनाशकः ॥ १५४ ॥

# अथ तृतीयशतकप्रारम्भः।

{२०१ / ८७७} सर्वदृक्,

ॐ सर्वदृशे नमः।

भा०— सएव, सर्वान्— अनुकूलप्रतिकूलतटस्थान्, यथार्हं नियन्तुं पश्यतीति— (सर्वदृक्).

(१) "दृशेःक्विनि वक्तव्यम्" इति, क्विन्.

❀ क्विन्प्रत्ययस्य कुः. स हि सर्वतो मुखः ? ❀

निर्व०— सएव सर्वतोमुखः, सर्वान्— अनुकूलप्रतिकूलतटस्थान्, यथार्हं नियन्तुं पश्यतीति वा,— सर्वस्मिन् दृगस्येति वा,—(सर्वदृक्).

(१) "दृशिर्, प्रेक्षणे" पूर्ववत्, धा०भ्वादिः कौ०पृ०४३०

(२) "दृशेःक्विनिवक्तव्यम्" इति, क्विन्.

यदि तु, नायं कर्मणि विधिः, तदा, प्रकृते अर्थप्रदर्शनार्थस्तथा विग्रहः. षष्ठीसमासोयम्. अतः, न कर्मण्यण्. इदानीमयं योजनान्तरेपि प्रत्ययः, तत्रच समासो वक्ष्यते. अपरत्र तथा यदि चेन्न दृश्यते; तदा, पूर्वत्रापि वा.

(३) "क्विप्च" इति, क्विप्. ३।२।७६॥कौ०पृ०५८१

पूर्वयोजनायां क्विप्यपि प्राग्वदेव समासः. अन्यत्र बहुव्रीहिः. अस्ति हि व्यधिकरणानामपि सः,

(४) "सप्तमीविशेषणे बहुव्रीहौ" २।२।३५॥कौ०पृ०१७३

इत्यत्र, सप्तम्याः प्राक्प्रयोगविधानादित्यादि. तत्र,

---

निरु०— २०१ अनुकूलान् तटस्थांश्च प्रतिकूलानपि स्वयम्।

(२०३) संधाता, (२०४) संधिमान्,

ॐ संधात्रे नमः। ॐ संधिमते नमः।

भा०—रिपुद्विषन्निष्पेषणीपणोपि—
(संधाता),—प्रणेयानां प्रह्लादप्रभृतीनां संश्लेषयिता. ❀
स च, तैस्संधिर्नित्योऽस्येति—
(संधिमान्). नित्ययोगे मतुप्. ❀

निरु०—इति, कः, तत्संनियोगेन चस्य हः, नुम् च. अगुणः नुमो नस्यानुस्वारः. अपरत्र,

(३) "हिसि, हिंसायाम्" पचाद्यच्. धा०रुधादिः कौ०पृ० ४७१

❀ पृषोदरादित्वात् व्यत्यये सिंहिः इदित्वात् नुम्. नस्यानुस्वारः. ❀

एवम्, जीपणोपि प्रणेयान् सन्दधाति—संश्लेषयतीति—(सन्धाता).

(१) "डुधाञ्, धारणपोषणयोः" संपूर्वः. धा०जुहोत्यादिः कौ० पृ० ४५१

(२) "ण्वुल्तृचौ" इति, तृच्. अनिट्. ३।१।१३३॥कौ०पृ०५६६
अनङादि. समो मोऽनुस्वारः. पाक्षिकः परसवर्णः. ❀

स च, तैः संधिः नित्योऽस्येति—(संधिमान्). प्राग्वत् धातुः; संपूर्वः. प्राग्वदेवानुस्वारपरसवर्णौ.

(१) "उपसर्गे घोः किः" इति, किः. ३।३।९२॥कौ०पृ०६५८
आतो लोपः. इत्थं निर्व्यूढात् संधिशब्दात्, नित्ययोगे मतुप्. उगित्त्वात् नुम्.

(२) "अत्वसन्तस्य०" इति, दीर्घ इत्यादि. ❀६।४।१४॥कौ० पृ०७८

निरु०—२०३ प्रह्लादाद्यैश्च (संधाता) संश्लेषकरणाच्च सः॥१५६॥
२०४ प्रह्लादाद्यैर्नित्यसंधिर्यस्य स्यात् (संधिमान्) स्मृतः।

( २०७ ) दुर्मर्षणश्, ( २०८ ) शास्ता.

ॐ दुर्मर्षणाय नमः । ॐ शास्त्रे नमः ।

भा०— प्रतीपैः दुष्करं— मर्षणमस्येति—
( दुर्मर्षणः ).
( १ ) " रथाङ्गशङ्खधातारं ब्रह्ममूर्तिं सुभीषणम् " ॥ ध्याने ॥
इति, तद्ध्यानम्. ❀
एवम्, सर्वकण्टकं साधु शास्तीति—
( शास्ता ), तत्साधुकारिणि, तृन्.
( १ ) " तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ " उणा०पा०
२ कौ०पृ०६२३

निर्व०— सुभीषणतया प्रतीपैः दुष्करं मर्षणम्— धर्षणम्, अस्येति— तेषु वा, तथा मर्षणम्— सहनं वा—
( दुर्मर्षणः ).
( १ ) " मृष, तितिक्षायाम् " धा०दिवादिः कौ०पृ०४५५
आद्ये धर्षणकर्मेहायम्. अन्यत्र तु यथा श्रुतः.
भावे ल्युट्. योरनः. गुणः रपरः. णत्वम्. दुरित्यव्ययपूर्वो बहुव्रीहिः.
( २ ) " अचोरहाभ्यां द्वे " इति वा, ८।४।४६॥कौ०पृ०१०
( ३ ) " यणोमयः० " इति वा. ८।२।२३॥कौ०पृ०९
पाक्षिकं मस्य द्वित्वम्.
( ४ ) " हलोयमां यमिलोपः " इतिच, ८।४।६४॥कौ०पृ०१०
पाक्षिकः प्रथमलोपः. ❀
एवम्, सर्वकण्टकं साधु शास्तीति—
( शास्ता ).

निरु०— २०७ दुष्करं मर्षणं यस्य परै ( र्दुर्मषणः) स्मृतः॥१५८॥
२०८ समस्तान् कण्टकान् शास्तीत्यतः ( शास्ते ) ति कीर्त्यते ।

(२०९) विश्रुतात्मा,

ॐ विश्रुतात्मने नमः ।

भा०—इत्यनिट्.यथा,

(२) "निदानविन्नासितदानवः" वि०पु० ।

(३) "द्रवन्ति दैत्याः" इति. ❀ वि०पु० । ५

(विश्रुतात्मा).—स एव सर्वदा सर्वत्र सर्वै-

र्विस्मयेन विश्रुतः सेंहापदानस्वभावः. यथा,

(१) "अशेषदेवेशनरेश्वरेश्वरैः" इत्यादि. ❀

स एव मुरारिं हिरण्यकशिपुमुखोदिवारं हतवानिति—

निरु०—(१) "शासु, अनुशिष्टौ" कत्वानुकारिणि तुन.धा०अ- १
दादिः कौ०पृ० ४४७

"सागरं तर्तुकामस्य" इत्यादिवत्,

(२)"आनिलोट्" इत्यत्र निलोडित्येव सिद्धे,८।४।१६॥कौ०पृ०३४

आनिग्रहणात् ज्ञापकात्, आगमशास्त्रानित्यतया इटोऽभावात्,

(३) "तुमतृचौ शमिसदादिभ्यः संज्ञायां चानिटौ" उणा०

पा०२कौ०पृ० ६२३

इति तुनोनुवादाद्वा नेट्. तत एव वा

अर्थविशेषानादरेण स्वतन्त्रौ तुन्तृचौ अनिटौ. अमरादि. ❀

स एव, सर्वत्र सर्वदा सर्वैरपि विश्रुतः--विस्मयेनाकर्णितः,

आत्मा—सेंहापदानस्वभावः, अस्येति—

(विश्रुतात्मा).व्युत्पादि ह्यात्मशब्दः ?

(१) "श्रु,श्रवणे" विपूर्वः. धा०भ्वादिः कौ०पृ० ४२६

कर्माणि क्तः.अगुणः.अनिट्.दीर्घः.ततो नान्तलक्षणो दीर्घ इत्यादि.❀

स एवच, मुरारिं--देवशत्रुम् उरोविदारम्, हतवानिति— १

निरु०—२०९ विस्मयेन श्रुतं देवैः सैंहं यस्यापदानकम्॥१५१॥

शीलं ते (विश्रुतात्मा) स महाकीर्तिप्रदो मनुः ।

(२१०)मुरारिहा,॥श्लो०॥ २३॥ (२११) गुरुर्गुरुतमो,

ॐ मुरारिघ्ने नमः। ॐ गुरुतमाय गुरवे नमः।

ना०—( मुरारिहा ). यथा,

(१) "मत्तत्त्वकरजश्रेणीदीर्णनोत्रायपाणिना। संयच्छते यथा न-रहरू मयानां मोक्षदं परम्" ॥ ध्याने ॥

इति नृहध्याने. ❀

मत्स्यावतारः. अशेषविद्यासमाचार्यकः—( गुरुः ).

(२) "स पूर्वेषामपि गुरुः" इति हैरण्यगर्भाः. ॥ हैर० ॥

व्या०—( मुरारिहा ).

(१) "हन,हिंसायाम्" धा० अदादिः कौ०पृ० ४३५

अत्र नियमस्य प्रायिकतया,

(२) "ब्रह्मभ्रूण०" इत्यादिना, क्विप्. ३।२।८७॥कौ०पृ०५८४

(३) "क्विप् च" इति,सार्वकालिको वा. ३।२।७६॥कौ०पृ०५८१

अथवा,विग्रहभेदे अन्यथा चापि प्रागुक्तः.

(४) "ऋ,गतौ" धा० जुहोत्यादिः कौ०पृ० ४५२

(५) "अच इः" इति,इः.गुणः रपरः. उणा०पा०४कौ०पृ०६३८

गुरुशब्दो व्युत्पादितः. शीर्षः. ततो नान्तलक्षणो दीर्घ इत्यादि. ❀

अथ मत्स्यावतारः. स चायम, गुरुतमः—गरीयान, गुरुः—अशेषवि-द्यासमाचार्य इति,—

( गुरुर्गुरुतमः ).एकन्नाम.

निरु०—२१० हिरण्यकशिपोर्हन्ता कीर्त्यते स (मुरारिहा) ॥१६०॥
२११ अथ मत्स्यावतारस्य प्रस्तावस्तु प्रतन्यते।
अशेषविद्याचार्यत्वात् स्मृतो ( गुरुतमो गुरुः) ॥ १६१ ॥

१ धिया सम्यग्भाविनाम्। २ चार्यकेण गुरुः।

{१०७ / ८७३} (२१३)सत्यः,(२१४)सत्यपराक्रमः,।(२१५)निमिषो,

ॐ सत्यायनमः। ॐ सत्यपराक्रमायनमः। ॐनिमिषाय नमः।

भा०—मन्वादिषु तत्कालसमाश्रितेषु सत्सु साधुरिति—
(सत्यः). ❀
तेषु, सत्यः —अकैतवः, पराक्रमः— वृत्तिः, अस्येति—
(सत्यपराक्रमः). ❀
तद्विरोधिषु निमिषति— न कटाक्षयतीति—(निमिषः). ❀

निर्व०—सत्सु तत्कालसमाश्रितेषु मन्वादिषु साधुरिति—
(सत्यः). अस्तेश्शतरि सच्छब्दो व्युत्पादितः. ततः.
(१) "तत्र साधुः" इति, यत्. ४।४।९८॥कौ०पृ०२८९
सत्वान्नस्त्वाभावः. ❀
तेषु सत्यः— अकैतवः, पराक्रमः— वृत्तिः, अस्येति—
(सत्यपराक्रमः).
(१)"क्रमु,पादविक्षेपे" परापूर्वः. भावे घञ्. धा०भ्वादिः कौ०पृ०४०१
(२) "नोदात्तोपदेशस्य०" ७।३।३४॥कौ०पृ०५४१
इत्यादिना न वृद्धिः. प्रागिव व्युत्पादितात् सत्यशब्दात्,
(३) "दिगादिभ्यो यत्" इति, ४।३।५४॥कौ०पृ०२६१
भवार्थे यत्. अन्यत् प्राग्वत्. ❀
तद्विरोधिषु, निमिषति— निमीलिताक्षो भवति तान्न कटाक्षयतीति—
(निमिषः).

निरु०—२१३मन्वादिष्वपि साधुत्वात् (सत्य)इत्यभिधीयते॥१६२॥
२१४वृत्तिर्ह्यकैतवा यस्य स स्यात् (सत्यपराक्रमः)।
२१५योऽसौ सतान्नेक्षते हि (निमिषः) स विरोधिनः॥१६३॥

## (२१६) ऽनिमिषस्, (२१७) स्रग्वी,

ॐ अनिमिषाय नमः। ॐ स्रग्विणे नमः।

शा०—क एवम् ?—
(अनिमिषः). सत्सु न निमिषति जागर्तीति—
(अनिमिषः). दिव्यमीनतनुः. ❀
तिर्यक्त्वेपि परत्वसूचिनी वैजयन्ती स्रगस्य नित्ययोगिनीति—(स्रग्वी)
(१) "अस्मायामेधास्रजो विनिः" इति, विनिः. ❀ ५।२।१२१॥
कौ० पृ० ३३१

निर्द०—(१) "मिष, स्पर्धायाम्" निपूर्वः. धा० तुदिः कौ० पृ० ४१
(२) "तुदादिभ्यो णल्यौ" इति, कः.
इगुपधलक्षणो वा, क्त्त्वान्न गुणः. ❀
क एवम्; दिव्यमीनतनुः. सत्सु सततजागरूकतया निमिषो नेति-
(अनिमिषः). पूर्ववत् धातुरुपसृष्टः. नञ्समासः,
नञो नलोपश्च विशेषः. ❀
तिर्यक्त्वेपि परत्वसूचिनी स्रक्—वैजयन्ती माला अस्यास्ति नित्य-
मिति—(स्रग्वी).
(१) "सृज, विसर्गे" धा० दिवादिः कौ० पृ० ४५६
(२) "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" ३।२।५९॥
कौ० पृ० ६७
इति, क्विन्, असागमश्च निपात्यते.
(३) "मिदचोन्त्यात्परः" इति, मित्त्वादन्त्यादचः परः यण्,
ऋतोरः १।१।४७॥ कौ० पृ० ७
एवं सिद्धात् स्रक्शब्दात्,

निरु०—२१६ सद्रक्षणे जागरूकः स्मृतो (ह्यनिमिष)श्च सः।
२१७ परत्वसूचिनी या च वैजयन्तीति कीर्तिता ॥ १६४ ॥
तया स्रजा नित्ययोगात् (स्रग्वी) ति परिकीर्त्यते।

{२१८ / ६७९} वाचस्पतिर् ,

ॐ वाचस्पतये नमः ।

ना०— सएव श्रीमन्मात्स्यपुराणे वेदोपबृंहणात्—
( वाचस्पतिः ). षष्ठ्या अलुक्.
(१) "षष्ठ्याः पतिपुत्र०" इत्यादिना सत्वम्. ८।३।५३॥ कौ० पृ० ७१७
नि० ०--(४) "अस्मायामेधास्रजो विनिः" ५।२।१२१॥ कौ० पृ० ३३१
इति मत्वर्थे नित्ययोगे विनिः.
( २ ) " क्विन्प्रत्ययस्य कुः " इति कुत्वेन जस्य गः. ८।२।६२॥
कौ० पृ० ६८
( ३ ) " सौच " इति, इन्नन्तलक्षणो दीर्घ इत्यादि. ❀ ६।४।१३॥
कौ० पृ० ६४
व्युत्प०. वाचः-वेदवाचः, मात्स्यपुराणेनोपबृंहणात्. पतिः--स्वामी, इति—
( वाचस्पतिः ).
( १ ) " पा, रक्षणे " धा० अदादिः कौ० पृ० ४४३
( २ ) " पातेर्डतिः " इति, डतिः. टिलोपः. उणा० पा० ५. कौ० पृ० ६४२
( ३ ) " वच, परिभाषणे " धा० अदा० कौ० पृ० ४४३
( ४ ) "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणाम् दीर्घोऽसंप्रसारणंच "
इति, क्विप्, दीर्घः, असंप्रसारणं च. अतः, ३।२।१७८॥ कौ० पृ० ६०७
( ५ ) " वचिस्वपियजादीनांकिति " इति. ६।१।१५॥ कौ० पृ० ४३२
न संप्रसारणम्. ततः, इन्नभिन्नं पदम् समस्तं वा. लुकि प्राप्ते वाक्शब्दा-
त्परेऽपि षष्ठ्या अलुक् छान्दसः. पञ्चमो ह्ययं वेदः; उभयत्रापि,
( ६ ) " षष्ठ्याः पतिपुत्रपृष्ठपारपदपयःपोषेषुच " ६।३।५३॥ कौ०
पृ० ७१७ इति, षष्ठीविसर्गस्यापि छान्दसः सकारः. आद्ये,
( ७ ) " षष्ठीयुक्तश्छन्दसि वा " १।४।९॥ कौ० पृ० ६७८
इति. वा वित्त्वात् पक्षे तत्कार्यम्. ❀

निरु०— २१८ वेदोपबृंहणत्वाद्धि (वाचस्पति) रिति श्रुतः ॥१६५॥

१ श्रीमान्मात्स्य ।

(२१९) उदारधीः, ॥

ॐ उदारधिये नमः।

भा०—एवं,सर्वोपजीव्यसार्वज्ञ्यात्—
(उदारधीः). ❋

निर्व०—एवम्. सर्वोपजीव्यत्वात् उदारा.धीः—सार्वज्ञ्यलक्षणा बुद्धिः, अस्येति—(उदारधीः).

(१) "ध्यै. चिन्तायाम्" धा०भ्वादिः कौ०पृ०४२४

(२) "आदेचः०"इति,आत्वम्.६।१।४५॥कौ०पृ०४२३

(३) "इग्यणःसंप्रसारणम्"इति,१।१।४५॥कौ०पृ०५९ इति, संप्रसारणसंज्ञायाम्,

(४) "ध्यायतेस्संप्रसारणंच"इति, यकारस्येकारः. ३।२।३॥ कौ०पृ०५७०

(५) "क्विप्च"३।२।७६॥कौ०पृ०५८१

(६) "संप्रसारणाच्च"इति,६।१।१०८॥कौ०पृ०६० पूर्वरूपमेकादेशः.

(७) "अन्येभ्योपि दृश्यते" ३।२।१७८॥कौ०पृ०६०७ इत्यत्र दृशिग्रहणात् विध्यन्तरोपसंग्रहार्थात् दीर्घः.

(८) "उन्दी. क्लेदने" धा०रुधादिः कौ०पृ०४७२

(९)"तुषारादयश्च"इति. आरन्. उणादिः पा०३कौ०पृ०६३१ इह नलोपः. अगुणत्वं च निपात्यते. पुंवद्भावः. स्यादेतत्.

(१०) "यूस्त्र्याख्यौनदी"इत्यत्र,१।४।३॥कौ०पृ०४४

(११) "प्रथमलिङ्गग्रहणं च कर्तव्यम्" १।४।३॥कौ०पृ०४४ इत्युपसंख्यानात्,

(१२)"नद्यृतश्च"इति,नदीलक्षणःकप्.५।४।१५३॥कौ०पृ०१६१

---

निरु०—२१९सर्वोपजीव्यसार्वज्ञ्यादुच्यते स (उदारधीः)।

श्लो० ॥ २४ ॥ (२२०) अग्रणीर्,

ॐ अग्रण्ये नमः ।

भा०—तेन प्रकारेण, अग्रिमं पश्चिमं पदं नयतीति—
(अग्रणीः). ❀
तत्रच, नित्यसिद्धानां ग्रामं समाजं नयतीति—

निर्व०—प्राप्नोति. नैतदस्ति, यतः, समासान्तो विधिरनित्यः.
तदनित्यत्वं च स्फुटतरमुपपादयिष्यते. ❀
तेन प्रकारेण अग्रम्—अग्रिमं पश्चिमं पदम्, नयतीति—(अग्रणीः).
( १ ) "णीञ्, प्रापणे" णोनः. धा० भ्वादिः कौ०पृ०४२३
( २ ) "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेपि क्विप्"
इत्यनेन योगन.३।२।६१॥ कौ०पृ०५८०
( ३ ) "क्विप्च" ३।२।७६॥कौ०पृ०५८१
इत्यस्य प्रपञ्चार्थेन अनुपसर्गेपि सुप्युपदे क्विप्.
( ४ ) "अक अग, कुटिलायां गतौ" द्वितीयोत्र, धा० भ्वादिः
कौ०पृ०४१५
(५)"ऋज्रेन्द्राग्र०"इत्यादिना रन्नन्तो. उणा० पा०२कौ०पृ०६२०
निपात्यते. यदितु अगेः केवलगतिकर्मणः इदितोपि अत्र ग्रहणम्;
तदा, इदित्वाद् नुमो नलोपोपि निपात्यः.
( ६ ) "नेट्०" इति, नेट्. एकाचत्वेपि. ततः, ७।२।८॥
कौ०पृ० ५८१
( ७ )"अग्रग्रामाभ्यां नयतेर्णो वक्तव्यः"८।४।३९॥कौ०पृ०१५३
इति, णत्वम्. ❀
तत्रच, नित्यसिद्धानां ग्रामं समाजं नयतीति—

निरु०—२२० महोदारतया भक्तानाग्रिमं पश्चिमं पदम् ॥ १६६ ॥
नयती (त्यग्रणीः) प्रोक्तो भक्तमोक्षप्रदो मनुः ।

(२२१) ग्रामणीग्र्, {२२ / १८०} (२२२) श्रीमान्,

(२२३) न्यायो,

---

ॐ ग्रामण्ये नमः । ॐ श्रीमते नमः । ॐ न्यायाय नमः ।

---

भा०—( ग्रामणीः ).

( १ ) "सत्सूद्विष०" इत्यादिना क्विप्. ३।२।६१॥ कौ०पृ०५८०

(२) "अग्रग्रामाभ्यां नयतेरिनि वक्तव्यम्" ८।४।३९॥ कौ०पृ०१५३

इति, णत्वम्. ❋

( १ ) "मत्स्यः कमललोचनः" इति, स्पष्टपरविभूतिः—(श्रीमान्). ❋

एवम्, अभ्रेषहेतुः युक्तकारीति—(न्यायः).

---

निर्व०—(ग्रामणीः). पूर्ववदेव धातुः, प्रत्ययश्च.

( १ ) "ग्राम, आमन्त्रणे" धा० चुरा० कौ०पृ० ४८९

चुरादौ कथादिः; णिच्. अतो लोपः. एरच्. णिलोपः. णत्वं च प्राग्वत्. ❋

एवम्, श्रीः--कमललोचनतया स्पष्टपरविभूतिः. अस्यास्तीति—(श्रीमान्).

( १ ) "श्रिञ्, सेवायाम्" धा० भ्वादिः कौ०पृ० ४२२

( २ ) "क्विब्वचि०" ३।२।१७८॥ कौ०पृ० ६०७

इत्यादिना क्विपि दीर्घेच निष्पन्नात् श्रीशब्दात् मतुप्. अत्वन्तत्वाद्दीर्घः. नुमित्यादि. ❋

एवम्, न्यायः--अभ्रेषहेतुर्युक्तकारीति—(न्यायः).

---

निरु०—२२१ ग्रामं समाजं सूरीणां नयति (ग्रामणी) श्च यः॥१६७॥

२२२ मत्स्यरूपावतारेपि ( श्रीमान् ) कमलनेत्रतः ।

२२३ (न्यायो ) हि युक्तकारित्वाद्भक्तेष्वेव विशेषतः॥१६८॥

## ( २२४ ) नेता, ( २२५ ) समीरणः,

### ॐ नेत्रे नमः । ॐ समीरणाय नमः ।

ना०—( १ ) " परिन्योर्नीणोः०" इत्यादिना घञ्. ॐ ३।३।३७॥
कौ०पृ० ६५०
नियुक्तं करोतीति—
( नेता ). निर्वाहशीलः; न्याय्यं हि निमज्ज्य निस्तारणं महात्मनाम्? ॐ
...निर्दिष्टः—( समीरणः ).
( १ ) " ईर.गतौ कम्पनेच" ॐ धा०अदा० कौ०पृ० ४३७
चलनशब्दार्थादकर्मकाद्युच्. एवम्. पवनादयोपि. उक्तार्थेषु,

नि०—( १ ) " इण्, गतौ" निपूर्वः. धा०अदादिः कौ०पृ०४४१
( २ ) " परिन्योर्नीणोर्द्यूताभ्रेषयोः" ३।३।३७॥ कौ०पृ० ६५०
इति, अभ्रेषे घञ्. वृद्धिः. आय्. नेरिकारस्य यण् यकारः. ॐ
न्यायम्, नियुक्तकारी, नयति—तच्छीलो निर्वहतीति—( नेता ).
( १ ) " मीञ्, मारणे" धा०स्वादिः कौ०पृ० ४२३
...नः. ताच्छीलिकस्तृन्. गुणः. अनिट्. अनडित्यादि. ॐ
...थम्, समीते—इष्टचेष्टा भवतीति—( समीरणः ).
( १ ) " ईर,गतौ कम्पनेच" सम्पूर्वः. धा०अदादिः कौ०पृ०४३७
( २ ) "चलनशब्दार्थादकर्मकाद्युच्" ३।२।१४८॥ कौ०पृ०६०३
इति, चलनार्थाकर्मकात् युच्. योरनः.
( ३ )"अट्कुप्वाङ्०" इति, णत्वम्. ॐ८।४।२॥ कौ०पृ०३२

निरु०—२२४ भक्तैर्नियुक्तं यत् कर्म ( नेता ) तत्करणादपि ।
२२५ भक्तेष्टचेष्टाशीलत्वात् ( समीरण ) उदाहृतः ॥ १६९ ॥

( २२६ ) सहस्रमूर्धा, ( २२७ ) ( विश्वात्मा, ) ❀
( २२८ ) सहस्राक्षम्, ( २२९ ) सहस्रपात्, ॥

ॐ सहस्रमूर्ध्ने नमः । ॐ विश्वात्मने नमः। ॐ सहस्राक्षाय नमः।
ॐ सहस्रपदे नमः ।

भा०—( २ )" कृत्वा मीनमयीं मत्स्यः प्रविवेश रसातलम् । वेदमूर्निमग्नो वेदानानिन्ये ब्रह्मणोऽन्तिकम् " ॥ तद्व्याख्यानम्.
( ३ ) " ज्ञानादिगुणवृन्देन पञ्चभूतेन गुम्फितम् । स्वोरस्थवक्त्र संस्थेन निःसृतेन विराजितम् "
( ४ ) " कल्पावसानसमये वहन्तं चैव चिन्तयेत् । नौरूपां विततां क्षोणीं प्रजापतिगुणान्विताम् "
( ५ ) " मुक्ताफलनिभेनैव वपुषा निर्मलेन च । अनिर्मीलितनेत्रश्च मीनात्मा यतवाक् तथा " ॥ इति. ❀
अथ, एतद्विद्यावतारोज्जीवितासु पुरुषसूक्तादासु, परविद्यासु, यथा-प्रतिपाद्यते; तथाऽनुरूपाणि नामानि सहस्रमूर्धादीनि—
( सहस्रमूर्धा ).—मूर्धा—अक्षि—पादाः—ज्ञानकर्मोपकरणोपलक्षणार्थाः. ( सहस्र ) शब्दश्च—तेषामनन्त्यद्योतकः.

निर्व०—अथ. एतद्विद्यावतारोज्जीवितासु पुरुषसूक्तादासु परविद्यासु यथाप्रतिपाद्यते; तथाऽनुरूपाणि नामानि प्रस्तूयन्ते. सहस्रम्-असंख्येयाः. मूर्धानः शिरांसि. अस्येति—( सहस्रमूर्धा ).

निरु०—२२६ सहस्रशब्दो ह्यानन्त्यलक्षकस्समुदाहृतः ।
( सहस्रमूर्धा ) सानन्तशिरस्कः कीर्त्यते ततः ॥ १७० ॥
( सहस्रमूर्धा ) स स्याद्वा पुंसूक्ताद्युक्तनामवान् ।
२२८—२२९ अक्षिपादपदे ज्ञानकर्मेन्द्रियनिदर्शके ॥ १७१ ॥
तेनानन्तज्ञानकर्मा ( सहस्राक्षः, सहस्रपात् )

❀ इदं नाम स्वोत्तरनामद्वयानन्तरम् भाष्ये व्याख्यातमिति ज्ञापनायात्र कुण्डलितम् । १ मिदं शृग । मदं शृङ्गम् । मयं शृङ्गम् ।

भा०—(१) "विश्वतश्चक्षुरुत विश्वतो मुखः" तै०ना०६–१–१२।
(३) "सर्वतः पाणिपादन्तत्" इत्यादिज्ञापकात्. गी०१३–१३।
(२) "तश्चतत्कार्यज्ञानक्रियासामर्थ्यानन्त्यं लक्ष्यते"
इति अभियुक्ताः; औचित्यात्, बहुशास्त्रान्तरसंगतेश्च. ❋
❋ आभ्यां ज्ञानशक्तनाभ्यां विश्वव्यापनात्—
( विश्वात्मा ). यथा,

---

निर्व०—(१) "मुह, वैचित्ये" आसनकर्महायम्. धा०दिवा० कौ०पृ०४५८
(२) "कनिन्युवृषि०" इत्यस्मिन् प्रकरणे, उणा०पा०१कौ०पृ०६१८
( ३ ) "श्वन्नुक्षन्पूषन् प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन् विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति" उणा०पा०१कौ०पृ०६१८
इति, अधिकरणे कनिन्, उपधादीर्घः, धोन्तादेशः, रमागमश्च निपात्यते. शतशब्दो व्युत्पादयिष्यते. तथा आनुषङ्गिको दशन्शब्दोपि. ततः, शतदशन्शब्दात्.
(४) "तदस्यपरिमाणम्०" इत्यर्थे, ५।१।५७॥ कौ०पृ० ३००
( ५ ) "पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीति नवतिशतम्" ५।१।५९॥ कौ०पृ०३००
इति सूत्रस्य उदाहरणप्रदर्शनार्थत्वात् सच् प्रत्ययः, प्रकृतेः सहभावश्च, इत्यादिप्रकारेण सहस्रशब्दो व्युत्पाद्यः. ततः, नान्तलक्षणो दीर्घ इत्यादि. सर्वज्ञानकर्मोपकरणोपलक्षणश्चेदम्. एवमुत्तरत्रोभयत्रापि. ततश्च, ❋ तत्कार्यज्ञानक्रियासामर्थ्यानन्त्यं लक्ष्यते. ❋ आभ्यां ज्ञानशकनाभ्यां विश्वव्यापनात्, विश्वस्य- सर्वस्य, आत्मा— अन्तरात्मेति—
( विश्वात्मा ). अततेः मनिणि, विशेः क्वनि च, प्रागेव व्युदपादि.

---

निरु०—२२७आभ्याञ्च ज्ञानकर्माभ्यां (विश्वात्मा) व्यापनात्स्मृतः॥१७२॥

---

❋ अत्र भाष्यस्य मूलम् २५७ पुटे २ पङ्क्तौ द्रष्टव्यम्।

भा०—( १ ) " स भूमिं विश्वतो वृत्वा " पु०सू० ।
( २ ) " येनैषभूतस्तिष्ठत्यन्तरात्मा " तै०ना० ।
( ३ ) " येन सर्वमिदं प्रोतम् " तै०ना०६—५० ।
( ४ ) अहमात्मा गुडाकेश सर्वभूत"इत्यादि. ❀ गी०१०-२०
संसारघटीयन्त्रपरिवर्तनात्—

---

निर्व०— चेदं शब्दद्वयम्. दीर्घ इत्यादि. ❀
सहस्रम्, अक्षीणि— चक्षूंषि, अस्येति—
( सहस्राक्षः ). अत्र स्वाङ्ग अक्षिशब्दः पुरस्तादेव व्युत्पादितः.
व्युत्पादितश्च सहस्रशब्दः. एवमुत्तरत्रापि. सांहितिको दीर्घः. ततः,
प्रागुक्तरीत्या,
( १ ) " अक्ष्णोऽदर्शनात् " इति, अच् समासान्तः. ५।४।
७६॥कौ०पृ०१८३
( २ ) " यस्य० " इति,लोपः. ❀ ६।४।१४८॥कौ०पृ०५६।
तथा, सहस्रं पादाः— चरणाः, अस्येति—
( सहस्रपात् ).
( १ ) " पद, गतौ " धा०दिवा० कौ०पृ०४५५
( २ ) " पदरुजविशस्पृशो घञ् " इति, ३।३।१६॥कौ०पृ०६
कर्तरि घञ्. वृद्धिः. ततः,
( ३ ) " संख्यासुपूर्वस्य " इति, ५।४।१४०॥कौ०पृ०१७०
सहस्रसंख्यापूर्वत्वात् पादस्यान्तलोपः, स्थानिद्वारेण समासान्तः
पाक्षिकमवसानचर्त्वम्. अत्रच पौरुषसूक्तक्रमानुरोधेन ❀ प्रत्या-
हारन्यायात् पूर्वं पूर्वयोरुभयोरुक्तिः; अनन्तरञ्चानन्तरयोर्मध्यगयो-
रपीत्यवधेयम्. ❀
संसारघटीयन्त्रम्, आवर्तयति— परिवर्तयतीति—

०॥२५॥(२३०)आवर्तनो, {२३१–४५४ / ६०४–७८०} निवृत्तात्मा,

ॐ आवर्तनाय नमः । ॐ निवृत्तात्मने नमः ।

भा०– ( आवर्तनः ). यथा,
( १ ) " तेनेदं भ्राम्यते ब्रह्मचक्रम् " नार० ।
( २ ) " भ्रामयन् सर्वभूतानि " गी० १८–६१।
( ३ ) कालचक्रं जगच्चक्रं युगचक्रञ्च केशवः । आत्मयोगेन भगवान् परिवर्तयतेऽनिशम् " ॥ इत्यादि. भा०३०६७–१२।
( ४ ) " तस्माद्विराडजायत " पु०सू०–५।
इ० । ऐनाऽवर्तनोऽभ्यते. ॐ
ततः संसारविभूतेः त्रिपाद्विभूतिकत्वेन निवृत्तम्– उद्गतम्, स्वरूपम् यस्य, सः–( निवृत्तात्मा ).

वि०– ( आवर्तनः ).
( १ ) " वृतु, वर्तने " धा०भ्वादिः कौ०पृ०४१२
आ पूर्वः. णिच्. गुणः स्वरः. नन्द्यादिल्युः.
( २ ) "कृत्यल्युटः०" इति, बाहुलकात् वा ल्युट्. ३।३।११३॥ कौ० पृ०६६२
( ३ ) " बहुलमन्यत्रापि " इति. उणा०पा०२कौ०पृ०६२२
युवोः. योरनः. णिलोपः. ॐ
ततः, त्रिपाद्विभूतिकत्वेन संसारविभूतेः, निवृत्तः उद्गतः, आत्मा–स्वरूपम्, अस्येति–
( निवृत्तात्मा ). व्युत्पादि आत्मशब्दः.

निरु०– २३० संसाराख्यघटीयन्त्रे परिवर्तनशीलतः ।
चक्रवच्च विशेषेण ( ह्यावर्तन ) इतीरितः ॥ १७३ ॥
२३१ त्रिपाद्विभूतिकत्वेन भवपादविभूतितः ।
उद्गतात्मस्वरूपत्वात् (निवृत्तात्मे) ति कथ्यते ॥ १७४ ॥

( २३२ ) संवृतस्, ( २३३ ) संप्रमर्दनः, ।

ॐ संवृताय नमः । ॐ संप्रमर्दनाय नमः ।

भा०—( १ ) " त्रिपादूर्ध्व उदैत्पुरुषः " पु०सू०४।

( २ ) " परात्परं यन्महतो महान्तम् " इत्यादि. श्रु० तै०ना० ६–१–५।

तस्मात्तमस्यादाय,

( ३ ) " तमसः परस्तात् " इति, पु०सू०२०।

तामसानां मूढानां गूढत्वात्—

( संवृतः ). ॐ

संवरणं तमः, स्वविद्यया संप्रमर्दयतीति—

( संप्रमर्दनः ).

निर्व०—( १ ) " वृतु, वर्तने " संपूर्वः. भ्वा०त्मादिः कौ०पृ०४१७.

अकर्मकात् कर्तरि क्तः.

( २ ) " उदितो वा " इति, ७।२।५६॥ कौ०पृ०४६८

क्त्वायामिड्विकल्पात् निष्ठायामिट्. अगुणः. [illegible]

तमः, तामसलक्षणोपसर्गीर्यादि. ॐ

तस्यां दशायाम्, तमसः परस्तात्तया तामसानाम्

मूढानां संवृतः— आवृतः गूढ इति—( संवृतः ).

( १ ) " वृञ्, वरणे " संपूर्वः. निष्ठान्तः. भ्वा०त्मादिः कौ०पृ०४३७

( २ ) "श्युकः किति" इति.नेट्. अगुणः.७।२।११॥कौ०पृ०४२५

ममो मोऽनुस्वार इत्यादि. ॐ

संवरणं तमः तेषां स्वविद्यया संप्रमर्दयतीति—

( संप्रमर्दनः ).

निरु०-२३२ तामसानां तु मूढानां गूढत्वात् ( संवृत ) स्स्मृतः ।
२३३ तमसो विद्यया सम्यङ् मर्दनात् (संप्रमर्दनः) ॥ १७५ ॥

## (२३४) अहस्संवर्तको,

---

ॐ अहस्संवर्तकाय नमः ।

---

भा०—(१) "तमेवं विद्वानमृत इह भवति" पु०सू०२०।
(२) "य एवं विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापि यन्ति" इति, ❀ बृ०उ०६–४–१४।
अहरुपलक्षितकालपरिवृत्तिहेतुः,—
(अहस्संवर्तकः). ❀ ण्वुल्. ❀ युवोरनाकौ.
(१) "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" तै०ना०६–१–८।
(२) "कालचक्रं कालस्य हि च" इति.भा०उ०६७–१२।
कालो हि, भूतभवद्भविष्यद्रूपेण परापरप्रत्ययहेतुः, नित्यं भगवत्क्रीडनकम्, संहितं षड्विधविकारकारिणं प्रकृतिपुरुषसंयोजनवियोजनं नियच्छति, तम्, एके व्यवस्थितां प्रकृतेः परिणामपरम्परामाहुः; अपरे परमेश्वरचेष्टासन्ततिम्; अन्ये स्वतन्त्रम्.श्रीपौष्करे कश्चिद्विशेषमुदाहरणम्—

---

निर्व०—(१) "मुद,क्षोदे" संपूर्वः.धा०भ्वादिः कौ०पृ०४७७ णिच्.गुणः. रपरत्वम्. द्वित्वम्.नन्द्यादिल्युः, बाहुलकात् ल्युट्.युवो.योरनः.णिलोपः.नमः प्राग्वदनुस्वारादि. ❀ अहः—तदुपलक्षितं कालम्, हेतुत्वात् संवर्तयति—परिवर्तयतीति—
(अहस्संवर्तकः).एकन्नाम.
(१) "वृतु.वर्तने" संपूर्वः.धा०भ्वादिः कौ०पृ०४१२

---

निरु०—२३४ अहर्लक्षितकालस्य परिवृत्तेश्च साधनम् ।
(अहस्संवर्तक)इति प्राहुर्वेदान्तपारगाः ॥ १७६ ॥

---

१ संहिताम । २ वियोजनयोर्नियः । वियोजने नियः ।

( २३५ ) वह्निः,

ॐ वह्नये नमः ।

भा०– ( ३ ) " अध्यात्मं कालतत्त्वीयमधिदैवतमस्य वै । प्रभवाप्ययमूर्तिर्वै विश्वात्मा परमेश्वरः ॥ अधिभूतं परिज्ञेयं त्रैलोक्यं[1] भूतपूर्वकम् । कालश्च व्यक्ततत्त्वस्य ह्यध्यात्मत्वेन वर्तते ॥ अधिदैवतमिज्या च सद्भोगमधिभूतता " ॥ इति. ❀ पौष्करे ।

देशरूपेण विश्वं वहतीति–

( वह्निः ).

( १ ) "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् " उणा०पा० ४ कौ० पृ० ६ ३ ४

इति. निप्रत्ययः. प्रथमश्च देशः परमाकाशः; आपेक्षिकोऽन्यो गगन दिगादिस्तत्कोणे. यथा,

( २ ) " अस्यामृतन्दिवि " पु० सू० २ ।

( ३ ) " स्वे महिम्नि स्थितम् "

निर्द०– ण्यन्तः. गुणः. ग्रः. हित्वः.

( २ ) " ण्वुल् तृचौ " इति, ण्वुल्. ३ । १ । १ ३ ३ कौ० पृ० ५ ६ ६ वोरकः. णिलोपः. अहश्शब्दः, वाचि ... कर्मणि व्युत्पादितः. अन्यत्पूर्ववत्. ❀

प्रथमदेशपरमाकाशतत्कोणान्यगगनदिगादिदेशरूपेण बद्धमुक्त नित्यादिकं विश्वं वहतीति–( वह्निः ).

( १ ) " वह. प्रापणे " धा० भ्वादिः कौ० पृ० ४ ३ २

(२)"वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्"उणा०पा०४ कौ०पृ०६३४

इति, निः. निहतत्वान्नेट्. ❀

निरु०– २३५ विश्वस्य देशरूपेण वहनाद् ( वह्नि ) रुच्यते ।

१ त्रैकाल्यम् ।

{२३६ / ८१८} अनिलो, ( २३७ ) धरणीधरः, ॥

ॐ अनिलाय नमः । ॐ धरणीधराय नमः ।

भा०–( ४ ) " पादोऽस्येहाभवत्पुनः " इत्यादि. पु०सू०४।
केशो हि नाम. " इहेदम् " इत्याद्यवगतिहेतुः ?
तच्च तदेतदेव यदुमुक्तनिर्व्यायः. ॐ
अनिमान्, अननात्– उज्जीवनात्–( अनिलः ).
( १ ) " सलिकल्यनि० " इत्यादिना इलच्. उणा०पा०१कौ०
पृ०६१३
अस्य कलैव प्रसिद्धोऽनिलः.
( २ ) " प्राणाद्वायुरजायत " पु०सू०१४।
( ३ ) " को ह्येवान्यात् कः प्राण्यात् " इति. ॐ तै०आ०७–१।
अन्यदपि धारकं धारयतीति–
( धरणीधरः ).
( १ ) " नवाधारपृथिवीन्याभुजनाम् " का०४९०१अ०८।

निर्व०– एवम्, एतान्, अनिति– अस्येहान्तर्गातितत्प्रवर्तनया उ-
ज्जीवयतीति– ( अनिलः ).
( १ ) " श्वस. प्राणने " अनच.धा० अदा० कौ०पृ०४४६
इति पठ्यते. चात्, प्राणने.
( २ ) " सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य
इलच् " उणा०पा०१कौ०पृ०६१३
इति, इलच्. अस्य कलैव प्रसिद्धोऽनिलः. ॐ
धरणीम्– धारकानारोपलक्षणीं भुवम्, धरतीति–( धरणीधरः ).

निरु०– २३६ बद्धादेरननाद्योऽसा (वनिलः) परिकीर्तितः॥१७७॥
२३७ भूतधात्र्याश्च धरणेर्धारणाद् ( धरणीधरः )।

## ( २३९ ) प्रसन्नात्मा, ( २४० ) विश्वसृट्.

---

### ॐ प्रसन्नात्मने नमः । ॐ विश्वसृजे नमः ।

---

भा०—(प्रसन्नात्मा).-स्वत एवावाप्तकामतया रागाद्यनुपप्लुतमनाःयथा,
( १ )"अविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" इति, छा० उ०८-१-५।
( २ ) " शान्तसमृद्धममृतम्" इतिच. तै०शी० ६–२ ।
अपूर्णः कृपणो हि दुराशयः.
गुणदोषमनपेक्ष्य दाक्षिण्यात् विश्वं सृजतीति–( विश्वसृक् ).

---

निर्व०–( प्रसन्नात्मा ). आत्मा व्युत्पादितः.
( १ )" षद्लृ,विशरणगत्यवसादनेषु"धा०तुदा० कौ०पृ० ४६९
प्रपूर्वः. परसः. कर्तरि क्तः.अनिट्.
( २ )"रदाभ्यां निष्ठातोनः पूर्वस्यच दः"८।२।४२॥कौ०पृ०५८६ इति.निष्ठातस्य नः.पूर्वस्य च दस्य.दीर्घः. ततः,नान्तलक्षणदीर्घादि.
गुणदोषानपेक्षो दाक्षिण्यात् विश्वं सृजतीति–( विश्वसृक् ).
( १ ) " सृज,विसर्गे"धा०तुदा० कौ०पृ० ४६९
( २ ) " क्विप्च"इति,क्विप्.अगुणः.३।२।७६॥कौ०पृ०५८१
( ३ ) " ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चांच" ३।२।५९ ॥ कौ०पृ० ६७
इति सूत्रे सृजेः क्विनो विहिततया,
( ४ ) " क्विन्प्रत्ययस्यकुः" इति, तत्र, ८।२।६२॥ कौ०पृ० ६८

---

निर्व०–२३९ अवाप्तसर्वकामत्वाद्रागादिरहितं मनः ।
यस्यास्ति स ( प्रसन्नात्मा ) चित्ततुष्टिप्रदो मनुः ॥१७९॥
२४० विश्वं जगत्सृजति यो ( विश्वसृक् ) स प्रकीर्तितः ।

(२४१) विश्वभुग्विभुः, । (२४२) सत्कर्ता,

ॐ विश्वभुग्विभवे नमः । ॐ सत्कर्त्रे नमः ।

भा०—तथैव व्याप्य भुनक्ति पालयतीति—
(विश्वभुग्विभुः); एकन्नाम. यथा,
(१) "सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते" इति, ❀ पु० सू० १६ ।
एवं सर्पीयोदण्डापूपिकन्या सतः—( सत्कर्ता ). यथा,
(१) "सज्जनप्रतिपूजकः" इति. ❀

निर्व०—बहुव्रीह्याश्रयणात् क्विप्यपि कुः यथासंख्यपरिभाषया जस्य गः पाक्षिकत्ववत्तानचर्त्वम्, कः. विश्वशब्दो व्युत्पादितः. एवमुत्तरत्रापि. ❀
तथैव विभुः, व्याप्नुवन् विश्वं भुनक्ति- परिपालयतीति—
(विश्वभुग्विभुः); सविशेषणमेकन्नाम.
(१) "भुज, पालनाभ्यवहारयोः" धा० रुधा० कौ० पृ० ४७१
पूर्ववत् क्विप्. अगुणः.
(२) "चोः कुः" इति, कुत्वेन गः. चर्त्वम् कः. ८।२।३०॥ कौ० पृ० ६८
(३) "भू, सत्तायाम्" विपूर्वः. धा० भ्वादिः कौ० पृ० ३६८
(४) "विप्रसंभ्यः०" इत्यादिना, ३।२।१८०॥ कौ० पृ० ६०७
उक्तनीत्या डुः. टिलोपः. सांहितिकं जश्त्वम्. ❀
एवं सर्पीयोदण्डापूपिकान्यायात् सज्जनान् सत्करोति- पूजयतीति—(सत्कर्ता).

निरु०—२४१ सत्सृष्टं व्याप्य वै भुञ्जन् पालयन् ( विश्वभुग्विभुः ) ॥१८०॥
२४२ ( सत्कर्ता ) यस्स विज्ञेयः सज्जनप्रतिपूजकः ।

२४३ ) सत्कृतम्, ( २४४ ) साधुः.

ॐ सत्कृताय नमः । ॐ साधवे नमः ।

ना०—दै०—

सत्कृतः );—महि तच्छ्रद्धार्पितेन स्वल्पेनापि स्वमहिमानुगुणेनेवात्मनि सत्कृतः कारः परितुष्यति.

१ ) " अहो ह्येकान्तिनस्सर्वान् प्रीणाति भगवान् हरिः । विधि-पूर्वं ... गृह्णाति शिरसा स्वयम्"

२ ) " भवद्भिः पूजितस्सम्यक्" रा०दा० १—५८ ।

३ ) " मालाकारेण पूजितः" इति. ❀ वि०पु० ५—१९—२९ ।

दो०—तत्तुल्यसारूप्यादिसाधयतीति—

( साधुः ).

( १ ) " कृवापाजि०" इत्यादिना साधेरुण्. ❀ उणा०पा० १ कौ० पृ० ६०९

नि०—( १ ) "डुकृञ्,करणे" अस्तेः शतरि क्युत्यादिः—धा० तना० कौ० पृ० ४७३

सत्पूर्वः. तृच्. गुणः रपरः. अनिट्. द्वित्वम्. अन्यत्राप्येवमेवादेशो. अकारादि. ❀

तैश्च श्रद्धार्पितेन स्वल्पेनापि स्वमहिमानुगुणेनेव अत्यन्तमत्युपकारप-रितुष्टतया सत्कारि—पूजित इति—

( सत्कृतः ). पूर्ववत् धातुः; सत्पूर्वः.

कर्मणि क्तः. अगुणः. अनिट्. व्युदपादि च सच्छब्दः.

तदाक्षितत्तुल्यसारूप्यादि साध्नोति—साधयतीति—( साधुः ).

( १ ) " राध साध, संसिद्धौ" धा० स्वादिः कौ० पृ० ४६३

रु०—२४३ अर्चादिभिस्सज्जनैर्यः पूजितम् (सत्कृत)स्स्मृतः ।। १८३ ।।
२४४ तेषां सारूप्यतुल्याद्यां ( साधु ) स्साधयतीति सः ।

( २४५ ) जह्नुः,

ॐ जह्नवे नमः ।

भा॰– " अशक्तेष्वात्ममाहात्म्यमनह्नुत इति– ( जह्नुः ) " इति नैरुक्ताः. उद्योगे यथा,

( १ ) " चक्रं तद्वासुदेवस्य मायया वर्तते विभोः । सापह्नवं पाण्डवेषु इति राजसु सत्तम " इति.[१] भा॰उ॰ ६–७–२ ।

एवमभिन्नार्थविशिष्टैः उपनिषत्सु,

( १ ) " नारायणाय विद्महे " तै॰ना॰ ६–१–२६ ।

( २ ) " नारायणपरं ब्रह्म " तै॰ना॰ ६–११ ।

( ३ ) " एको ह वै नारायण आसीत् " महोपनिषदि–१ ।

( ४ ) " अथ पुनरेव नारायणः " ॥ महोपनिषदि ॥

( ५ ) " चक्षुश्च द्रष्टव्यं च नारायणः " सु॰उ॰ ६ ।

( ६ ) " अथ दिव्यो देव एको नारायणः " सु॰उ॰ ६ ।

निर्व॰–(२) "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" उणा॰पा॰१ कौ॰पृ॰ ६०९.

इति.उण्. वृद्धिः. ❀

अशक्तेषु आत्ममाहात्म्यमनह्नुत इति–( जह्नुः ).

( १ ) " ओहाक् त्यागे " इत्यस्मात्, धा॰ जुहो॰ कौ॰पृ॰ ४५०

( २ ) "दाभाभ्यां नुः" इति प्रकरणे, उणा॰पा॰३ कौ॰पृ॰ ६२६

( ३ ) " जहातेर्द्वे अन्तलोपश्च" इति उणा॰पा॰३ कौ॰पृ॰ ६२६

नुप्रत्यये, द्वित्वे, बाहुलकात् द्विरुक्तपूर्वखण्डस्याभ्याससंज्ञायाम्,

( ४ ) " ह्रस्वः " इति, अभ्यासह्रस्वे. ७।४।५९॥ कौ॰पृ॰ ३६९

( ५ ) " कुहोश्चुः " इति. ७।४।६२॥ कौ॰पृ॰ ३७८

निरु॰–२४५ अशक्तेष्वात्ममाहात्म्यानिह्नुतेः (जह्नुः) रुच्यते॥१८२॥

१ चक्रतेराज, " कौरवेषु पाण्डवानां सुसम्मतम् " इतिमुद्रितकोशपाठः ।

( २४६ ) नारायणो,

ॐ नारायणाय नमः ।

भा० — इति प्रतिशाखं परस्य वस्तुनो मूर्त्यन्तरव्यावर्तकतया निर्दिष्टमसाधारणन्नामाह.—

( नारायणः ). श्रौतनिरुक्तम्,

( ७ ) “ यच्च किञ्चित ” इति. अन्यत् अपडक्षीणत्वात् नाचक्ष्महे. ❀ पु०मू०।

निर्व० — द्रुतेन हकारस्यान्तरतम्यात् झकारे,

( ६ ) “ आयासे चर्च ” इति, ८।४।५४॥कौ०पृ० ३७०

तस्य जश्त्वेन जकारे, उत्तरखण्डे अन्तलोपेन आकारलोपे, अनिट्त्वादिडभावे च, जन्हुशब्दस्य निष्पाद्यत्वेपि, प्रकृते निरुक्तानुरोधादुक्तार्थनिष्पत्तिः. तद्बीजञ्च उक्तमेव. तथा चेह,

( ७ ) “ न्हुङ्, अपनयने ” इति धातुः.क्विप्,धा०अदा०कौ०पृ०४४८

द्वित्वम्, आयासोवर्णस्य अत्वञ्च. णत्वान्हि बाहुलकप्रभावः? पृषोदरादिर्वा. अपरत्राप्येवमेतादृशे. यदित्वत्रापि निरुक्तस्वातन्त्र्यम्; न तदाऽयं यत्नः. अन्यत्तु हल्याद्विशेषादिकं यथाशास्त्रमेव. ❀

अथैवम्, अशेषविशेषैः विशिष्य सकलोपनिषत्प्रसिद्धम् परस्य वस्तुनो मूर्त्यन्तरव्यावर्तकम् असाधारणं नाम निर्दिश्यते. नराः स्वरूपप्रवाह नित्यवस्तूनि, तेषां समूहाः— नाराः, ते अयनम्— श्रौतनिरुक्तानुसारात् आश्रयः, यस्येति वा,—

तेषामयनमिति वा;—( नारायणः ).

( १ ) “ इण्, गतौ ” धा०अदा०कौ०पृ०४४१

निरु० — २४६ अन्तर्बहिश्च तत्सर्वं व्याप्य ( नारायण ) स्मृतः ।

१ यत्रपद— अक्षीणि सन्निहितानि, त्रयः पुरुषा इति यावत्; तत्र योऽर्थः नोपदेशार्हः, सः अषडक्षीणः. रहस्यन्त्वप इति यावत्. अपद् कर्णे इतिवत् प्रयोगः ।

निर्व०–(२) "इ, गतौ" धा० भ्वादिः कौ० पृ० ३९४
(३) "ई, गतौ" धा० अदा० कौ० पृ० ४३७
(४) "अय, गतौ" वा. आदितस्त्रिपु ईयते, धा० भ्वा० कौ० पृ० ४०
अन्यत्रैकत्र, अय्यते वास्मिन्नित्यर्थे,
(५) "करणाधिकरणयोश्च" इति, ३।३।११७॥ कौ० पृ० ६६२
अधिकरणे ल्युट्. योरनः. गुणायादेशौ. इमावयतेस्तु न.
(६) "रि, हिंसायाम्" धा० स्वादिः कौ० पृ० ४६३
(७) "अन्येष्वपि दृश्यते" ३।२।१७८॥ कौ० पृ० ६०७
इति, डः. टिलोपः. नञ्समासः.
(८) "नभ्राण्णपात्०" इत्यस्योपलक्षण–६।३।७५॥ कौ० पृ० १४८
तया प्रकृतिभावात् नलोपो न. यद्वा, नशब्दसमासः.
ततः, नलोपाभावः. ततः,
(९) "तस्य समूहः" इति, ४।२।३७॥ कौ० पृ० २३२
समूहार्थे अण्.
(१०) "तद्धितेष्व०" इति, आदिवृद्धिः. ७।२।११७॥ कौ० पृ० २०४
(११) "यस्य०" इति लोपः. सवर्णदीर्घः. ६।४।१४८॥ कौ० पृ० ५६
(१२) "पूर्वपदात्संज्ञायामगः" इति. ८।४।३॥ कौ० पृ० १६७
णत्वम्. बहुव्रीहौ न किञ्चिदस्ति वक्तव्यम्. तत्पुरुषे तु,
(१३) "लिङ्गमशिष्यम्" इत्यादि. ॥महाभाष्ये॥
समासद्वयेन पूर्वोक्तसूत्रात् करणे ल्युटा.
(१४) "कृत्यल्युटः०" इति, ३।३।११३॥ कौ० पृ० ६६२
बाहुलकात् कर्मणि ल्युटा च, परत्वसौलभ्यान्तर्यामित्वोपायत्वोपेयत्वसिद्धिरित्यादिस्त्वषडक्षीणोऽर्थः. ❀
इदमेवगूढं व्याचष्टे; अनश्वरचिदचिद्विभूतिकतया, नरः–चिदचिद्वर्गः, अस्यास्तीति वा,–

( २४७ ) नरः,॥ श्लो० ॥ २७ ॥ ( २४८ ) असंख्येयो,

ॐ नराय नमः। ॐ असंख्येयाय नमः।

भा०—इदमेवगूढं व्याचष्टे—

( नरः ):—अनश्वरचिदचिद्विभूतिक इति. ❋

[illegible]गुह्याश्चास्यासंख्येया इति—

( असंख्येयः ). ❋

टी०—नरशिष्टेन तद्व्यपदेशाद्वा:—

( नरः ).

( १ ) "[illegible] हिंसायाम्" धा०स्वादिः कौ०पृ०४६३

( २ ) "अन्येभ्योऽपि दृश्यते" इति, ३।२।१७८॥ कौ०पृ०६०७

इत्युक्तेन. टिलोपः. इहापि नञो नशब्दस्य वा समासः.

[illegible]ना हि नलोपाभावस्य क्वेयं गतिः? ततः, पूर्ववत्,

( ३ ) "अर्शआदिभ्योऽच्" इति, ५।२।१२७॥कौ०पृ०३३२

[illegible]त्याकृतिगणत्वात् मत्वर्थीयोऽच्.

( ४ ) "यस्य०" इति, लोपः. ६।४।१४८॥कौ०पृ०७६

अन्यत्र तु अजभावो विशेषः. ❋

[illegible]नूहाश्च असंख्येयाः— अगणनगोचराः. अस्य सन्तीति वा,—

[illegible]वत् तद्रूपया तद्व्यपदेशेन वा:—

( असंख्येयः ).

( १ ) "ख्या. प्रकथने" संपूर्वः. धा०अदा० कौ०पृ०४४३

❋ अचो यत्.

( २ ) "ईद्यति." इति. आत ईत्त्वम्. ततः, ६।४।६५॥कौ०पृ०५५७

( ३ ) "सार्वधातुक०" इति.गुणः. ७।३।८४॥कौ०पृ०३६८

निरु०—२४७ रः क्षयो यस्य न ह्यस्ति स (नर) स्समुदाहृतः॥१८३॥

२४८ अगण्यनरसंघो यःसो (ऽसंख्येयः)प्रकीर्तितः।

( २४९ )ऽप्रमेयात्मा, ( २५० ) विशिष्टश्,

ॐ अप्रमेयात्मने नमः । ॐ विशिष्टाय नमः ।

भा०—तेषामसंख्येयानाम्, एकैकशोऽपि अप्रमेयानामनवधिकानामन्तर्बहिश्च व्यापनात्—

( अप्रमेयात्मा ). ❋

स्वत एव तदन्यैर्वैलक्षण्यत्वात्—

( विशिष्टः ). ❋

निर्व०—अनुस्वारादि.नञ्समासः. नञो नलोपः.ततः, दुर्वच-त्वादि पूर्ववत् मत्वर्थीयोऽर्श आद्यच्. अदन्त.

अत्रभावो विशेषः. ❋

तेषामसंख्येयानामनवधिकानाम् एकैकशोऽपि अप्रमेयानाम्- प्रमा-तुमशक्यानाम्, अन्तर्बहिश्च व्यापनादात्मेति—

( अप्रमेयात्मा ). निरुक्तो ह्यात्मशब्दः ?

( १ ) "माङ्, माने" धातुः धा०जुहो०कौ०पृ०४५०

❋ अचोयत्. ❋ ईद्यति.गुणः.नञ्समासः. नलोपः. दीर्घः. ततः, नान्तलक्षणदीर्घादि. ❋

स्वतएव तदन्यैर्वैलक्षण्यतया विशिष्यते—आधिक्यं भजतीति-

( विशिष्टः ).

( १ ) "शिप्लृ. विशेषणे" धातुः धा०रुधा०कौ०पृ०४७१

(२) "गत्यर्थ०"इत्यादिना अकर्मकात्,३।४।७२।।कौ०पृ०५९६

कर्तरि क्तः. कित्त्वान्नगुणः. अनिट्.ष्टुत्वम्. ❋

अपितु, स्वसंबन्धेन तान् शिष्टान्, स्वानुगुणकल्याणान् करोतीति-

---

निरु०—२४९एकैकशोऽप्रमेया या ह्यसंख्याता विभूतयः॥ १८४॥

तासां चैवा ( ऽप्रमेयात्मा ) व्यापनाद्बहिरन्ततः ।

२५० विलक्षणो ( विशिष्टो ) यस्सर्वांस्ताननपेक्ष्य सः ॥ १८५ ॥

## (२५१) शिष्टकृत्, {२५२ / १५७} शुचिः।

ॐ शिष्टकृते नमः। ॐ शुचये नमः।

भा०— अपितु, स्वसंबन्धेन तान् स्वानुगुणकल्याणान् कुर्वन्, अनाधेयदीप्तिः—( शिष्टकृच्छुचिः ).

निर्व०—( शिष्टकृत् ).

( १ ) "डुकृञ्, करणे" क्विपि तुक्. अगुणः. धा०तना०कौ०पृ०४७३ जश्त्वचर्त्वे.

( २ ) "शिषॢ, विशेषणे" क्तः. अगुणः. धा०रुधा०कौ०पृ०४७१ अनिट्. ष्टुत्वम्. ❀

तथाच कुर्वन्, शुचिः— शुद्धः अनाधेयदीप्तिरिति—( शुचिः ).

( १ ) "शुच, शोके" शुचिकर्मेहायम्. धा० भ्वादिः कौ०पृ०३९०

( २ ) "ईशुचिर्, पूतीभावे" वा. धा०दिवा० कौ०पृ०४५५

( ३ ) "इन् सर्वधातुभ्यः" इति. इन्. उणा०पा०४ कौ०पृ०६३७

( ४ ) "इगुपधात्कित्" इति, कित्. ततो न गुणः. उणा०पा०४ कौ०पृ०६३७

एकं वा नाम. अर्थः प्राग्वत्. ततः, व्यस्तात् समस्ताच्च संहितायां श्चुत्वस्यासिद्धत्वात् जश्त्वेन दः. ततः,

( ५ ) "खरि च" इति, चर्त्वस्यासिद्धत्वात् ८।४।५५॥ कौ०पृ०२० श्चुत्वेन जः. तस्य. चर्त्वेन चः. श्चुत्वस्यासिद्धत्वात् न चोः कुः. ततः,

( ६ ) "शश्छोऽटि" इति, पाक्षिकं शस्य छत्वम्. ❀ ८।४।६३॥ कौ०पृ०२० अथ, यथोक्तोपपादनम्.

निरु०—२५१—२५२ स्वानुकूलशुभान् कुर्वन् स्वसंबन्धेन तान्
स्वयम्। अनाऽधेयमहादीप्तिः ( शिष्टकृच्छुचि ) रुच्यते ॥ १८६ ॥

## (२५३) सिद्धार्थम्, (२५४) सिद्धसंकल्पः,

## ॐ सिद्धार्थाय नमः। ॐ सिद्धसंकल्पाय नमः।

भा०— अथ, यथोक्तोपपादनम्.—
(सिद्धार्थः). ❋
स्वत एव वावाप्तकामत्वात् तदुपरि—
(सिद्धसंकल्पश्च);— स्वातन्त्र्येण प्रयुक्ततया स्वेच्छया
साधितसर्वार्थ इत्यर्थः.
(१) "सत्यकामस्सत्यसंकल्पः" इति. [illegible] छा०उ०८-३५।

---

निर्व०—स्वत एवावाप्तसमस्तकामतया सिद्धोऽर्थोऽस्येति—
(सिद्धार्थः).
(१) "ऋ, गतिप्रापणयोः" धा०भ्वा० कौ०पृ०४२५
(२) "उपिकुषिगार्तिभ्यस्थन्" इति, उणा०पा०२कौ०पृ०६१८
कर्मणि थन्. गुणः रपरः. अनिट्.
(३) "षिधु,संराद्धौ" क्तः. अगुणः. अनिट्. धा०दिवा०कौ०पृ०४५७
(४) "झष०" इति, धत्वम्. जश्त्वम्. ८।२।४०॥कौ०पृ०३८५
सांहितिको दीर्घः. ❋
स्वतन्त्रस्वेच्छासाधितसर्वार्थतया. सिद्धः संकल्पः अस्येति—
(सिद्धसंकल्पः).
(१) "कृपू,सामर्थ्ये" संपूर्वः. धा०भ्वादिः कौ०पृ०४१३
भावे घञ्. लघूपधगुणः. रपरत्वम्.
(२) "कृपोरोलः" इति, रेफस्य लत्वम्. ८।२।१८॥कौ०पृ०४१३
अनुस्वारादि. सिद्धशब्दो व्युत्पादितः. ❋

---

निरु०—२५३ सिद्धाः प्राप्ता यस्य सर्वे ह्यर्थाः (सिद्धार्थ) ईरितः।
अवाप्तसर्वकामो वा (सिद्धार्थ) इति कथ्यते ॥ १८७॥
२५४ सत्यसंकल्पवत्त्वाच्च (सिद्धसंकल्प) ईरितः।

(२५५) सिद्धिदस्, (२५६) सिद्धिसाधनः, ।

ॐ सिद्धिदाय नमः । ॐ सिद्धिसाधनाय नमः ।

भा०— अणिमगरिमाद्याःसिद्धीः साधकेभ्यो ददातीति—
(सिद्धिदः). *
अन्य साधनमपि,
(१) "ये तु धर्म्यामृतमिदम्" इत्यादिना, गी० १२—२०।
अनुष्ठानकालेऽपि नियंकरत्वात् सिद्धिदम्, नः—
(सिद्धिसाधनः). *

वि०— साधकेभ्यः अणिमगरिमाद्याःसिद्धीः ददातीति—
(सिद्धिदः).
(१) "डुदाञ्, दाने" धा०जुहो० कौ०पृ०४५१
(२) "आतोऽनुपसर्गे०" इति, कः. आतो लोपः ३।२।३।।कौ०पृ०५७०
(३) "षिधु, शास्त्रे माङ्गल्ये च" परस्मै.धा०भ्वादिःकौ०पृ०३८५
* स्त्रियां क्तिन्.
(४) "तितुत्र०" इति, नेट्. धत्वजश्त्वे. * ७।२।९।।कौ०पृ०६०८
अनुष्ठानवेलायामपि नियंकरतया सिद्धिः, तद्रूपं
साधनमस्येति—
(सिद्धिसाधनः).
(१) "राध साध, संसिद्धौ" परस्मै. धा०स्वादिः कौ०पृ०४६३
करणे ल्युट्. अनः. सिद्धिशब्दो व्युत्पादितः. *
निखिलमङ्गलाङ्कुरार्पणदिनत्वात्, वृषः निरुक्तानुसारात् धर्मः, तद्रूपं
च तदहः— अस्य प्रथमाभिगमनदिवसश्चेति वृषाहः, सोऽस्यास्तीति—

निरु०—२५५ (सिद्धिदो) ह्यणिमाद्यष्टसिद्धिदः कायदानतः।।१८८।।
२५६ तत्सिद्धेश्चापि हेतुत्वात् (सिद्धिसाधन) ईरितः ।

श्लो० ॥ २८ ॥ (२२७) वृषाही.

ॐ वृषाहिणे नमः ।

भा०—निखिलमङ्गलाङ्कुरार्पणहेतुत्वात् वृषरूपम्—धर्मरूपम्. अहः-
अस्य प्रथमातिगमनदिवसम्, २
(वृषाहः). ॐ राजाहस्सखिभ्यष्टच्.
तदस्यास्तीति—
(वृषाही). यथा,
(१) " [illegible] —
द्वादशाहं विष्णोर्वृषाहस्य [illegible] " वि०पु०५–१६–३।
(२) " ता विशन्ति च दिवसाः" इत्यादि.
(३) " यथा [illegible] " इति च. ॐ ते०आ०२–७।

निर्व०—(वृषाही), अहन्शब्दः [illegible],
(१)"वृषु, सेचने" इगुपधलक्षणः कः, भा० आदि: कौ०पृ०४३० [illegible]
अगुणः. कर्मधारयः. तद्धितो [illegible].
(२) " राजाहस्सखिभ्यष्टच्" इति टच्. ५।४।९१
कौ०पृ०१५२
(३)"तद्धिताः" इति. [illegible] ४।१।७६॥कौ०पृ०१०६
(४)"नस्तद्धिते " इति. टिलोपः. ६।४।१४४॥कौ०पृ०१३३ २:
(५) " रात्राह्नाहाः पुंसि" इति, २।४।२९॥कौ०पृ०१५७
पुंस्त्वेन विग्रहः. ततः,
(६) "अत इनिठनौ" इति, इनिः.५।२।११५॥कौ०पृ०३३०
(७)"पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" २।२।१॥कौ०पृ०१३९
इत्यादिनिर्देशात्. २९

निरु०— २५७ वृषो हि धर्मस्तद्रूपमहर्यस्य दिवं स्मृतम् ॥१८९॥
प्रथमातिगमनाख्यं (वृषाही) स प्रकीर्तितः ।

(२५८) वृषभो,

ॐ वृषभाय नमः।

भा०—एवमभिगच्छतो भवदग्धान् वर्षतीति—
(वृषभः).
(१) "ऋषिवृषिभ्यां कित्" इति वृषेरभच्. उणा०पा०३ कौ०पृ०६३० प्रत्ययः, किद्भावश्च. ❀
एवं वर्षन् वेवेष्टीति—

निर्व०—(८) "एकगोपूर्वाट्ठञ् नित्यम्" इति, ५।२।११८॥ कौ०पृ०३३०
एकपूर्वात् समानाधिकरणार्थे ठञनुशासनाच्च लिङ्गात्,
(९) "न कर्मधारयान्मत्वर्थीयः"
इति न्यायो हि न नित्यः. कृष्णसर्पवान्वल्मीक इत्यादिवत्.
तद्बीजं चेदमेवेत्यादि. एवमन्यत्रापि.
(१०) "यस्य०" इति, लोपः. ६।४।१४८॥ कौ०पृ०५६
(११) "औच" इति, हलन्तलक्षणो दीर्घ इत्यादि. ❀ ६।४।१३॥ कौ०पृ०६४
एवम्, अभिगच्छतो भवदग्धान् वर्षति—सिञ्चतीति—
(वृषभः).
(१) "वृषु, सेचने" धा०भ्वादिः कौ०पृ०४१०
(२) "कृशृशलिकलिगर्दिभ्योऽभच्" उणा०पा०३ कौ०पृ०६३० इति, वर्त्तमाने,
(३) "ऋषिवृषिभ्यां कित्" इति, अभच् कित्; उणा०पा०३ कौ०पृ०६३० कित्त्वान्न गुणः. ❀
एवं वर्षन् वेवेष्टि—व्याप्नोतीति—

निरु०—२५८ अभिगच्छद्भक्तजनान् सुधावर्षणतोऽन्वहम् ॥१९०॥
(वृषभ)श्च समाख्यातः सिञ्चन् भयहरो मनुः।

{ २ / ६६३ } (२५९) विष्णुः, (२६०) वृषपर्वा,

ॐ विष्णवे नमः। ॐ वृषपर्वणे नमः।

भा०—( विष्णुः ).
( १ ) " विषॢ, व्याप्तौ " धा०जुहो०कौ०पृ०४५१
( २ ) " विषेः किच्च" इति,णुः. उणा०पा०३कौ०पृ०६२६
तैरतैरुपकारैरधिकेन भगवता [illegible] स्वव्यतिरिक्तानाम-
विनाभावरता[illegible];
( ३ ) "न तदस्ति [illegible] चराचरम्" इति. ❀
गी० १०—३९।
( वृषाः )—वर्णाश्रमधर्माः, ते तदारोहणसोपानपर्वाणीति—
( वृषपर्वा ). ❀

निर्व०—( विष्णुः ).
( १ ) " विषॢ, व्याप्तौ " धा०जुहो०कौ०पृ०४५१
( २ ) " स्थाणुः" [illegible],उणा०पा०३कौ०पृ०६२६
( ३ )"विषेः किच्च" इति,णुः [illegible]. [illegible]. निहतत्वान्नेट्. ❀
उणा०पा०३कौ०पृ०६२६
वृषाः— वर्णाश्रमधर्माः, [illegible]- तदारोहणसोपान-
पर्वाणि, अस्येति—( वृषपर्वा ).
( १ ) " पॄ, पालनपूरणयोः " धा०जुहो०कौ०पृ०४४९
( २ )"स्नामदिपद्यर्तिपॄशकिभ्यो वनिप्" उणा०पा०४कौ०पृ०६
इति, वनिप्. गुणः. रपरः.

निरु०—२५९(विष्णु)स्स्यादविनाभावाद्व्याप्यव्यापकभावतः॥१९
२६०वृषा वार्णाश्रमा धर्माः पर्वाण्यारोहणे तु ते।
यस्य सन्ति सदा सोऽयं ( वृषपर्वा ) प्रकीर्तितः ॥ १९२॥

## (२६१) वृषोदरः, । (२६२) वर्धनो,

ॐ वृषोदराय नमः । ॐ वर्धनाय नमः ।

भा०—आराधकानां यथालब्धहविरादिभिस्सुपूरत्वेन,
सर्वाग्निमहत्त्वेन वा, धार्मिकोदरत्वात्—
(वृषोदरः). ❋
मातृवत् तान् उदरे कृत्वा वर्धयतीति—
(वर्धनः). ❋

नि०—(१) "वृषु०" इति,वृष्,वृषशब्दो व्याकृतः ७।२।८॥कौ०
पृ०२८१
इत्यनुनाद्यादि. ततः, तान्तलक्षणो दीर्घ इत्यादि. ❋
आराधकानां यथालब्धहविरादिभिस्सुपूरतया,
सर्वाग्निमहत्तया वा, वृषः—लक्षणया धार्मिकम्, उदरमस्येति—
(वृषोदरः).
(१) "दृ, विदारणे" उक्तार्थः. धा० क्र्यादिः कौ०पृ०४७६
(२) "उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च" उणा०पा०५,कौ०पृ०६४३
इति. अच्. अलचा. स्वरे विशेषः. उदो दलोपश्च.
गुणः. रपरः, बहुव्रीहिः. गुणस्सांहितिकः. ❋
मातृवत् तानुदरे कृत्वा वर्धयतीति—(वर्धनः).
(१) "वृधु,वृद्धौ" णिच्, गुणः. रपरः. धा० भ्वादिः कौ०पृ०४१२
द्वित्वम्. ततो नन्द्यादिल्युः. बाहुलकाद्युडित्यादि.
योऽनः. णिलोपः. ❋

नि०—२६१ भक्तैरुपाहृतां पूजामुपहारांश्च धर्मतः ।
कृत्वोदरे याजयति स (वृषोदर) उच्यते ॥ १९३ ॥
२६२ मातृवज्जठरे कृत्वा भक्तान् वर्धयति स्वयम् ।
(वर्धनः) प्रोच्यते नित्यं सतानां वृद्धिदो मनुः ॥ १९४ ॥

( २६३ ) वर्धमानश्च, ( २६४ ) विविक्तश्,

ॐ वर्धमानाय नमः । ॐ विविक्ताय नमः ।

भा०— तान् वर्धयन् स्वयमपि वर्धत इति वा—

एवं प्रायरसर्यवस्त्वत्मनुद्धिरिति वा—

( वर्धमानः ). ❋

एवं, सर्वलोकोत्तरस्वैकान्तवृत्तान्तत्वात्—( विविक्तः ).

निरु०— तान् वर्धयन् स्वयमपि वर्धत इति वा— वर्धमानविविक्तः.

एवंप्रायरसर्यवस्त्वत्मनुद्धिरिति वा,—

( वर्धमानः ). धातुः पूर्ववत्. ३० कर्तरि लट्.

( १ ) " लटः शतृशानचावप्रथमासमानाधिकरणे " इति. शा-
नच्. ३।२।१२४॥कौ०पृ०५११

तस्य शित्त्वेन,

( २ ) " तिङ्शित्० " इति सार्वधातुकत्वेन, तत्र परतः,
३।४।११३॥कौ०पृ०३६८

( ३ ) "कर्तरि शप्" इति, धातोः शप्. ३।१।६८॥कौ०पृ०३६८

शपावितौ. गुणः. [illegible].

( ४ ) "आने मुक्" इति, अदन्तस्यातो मुक्. ७।२।८२॥कौ०पृ०५१४

[illegible].

इत्थम्, सर्वलोकोत्तरस्वैकान्तवृत्तान्तत्वात्. विविच्यते इति—

( विविक्तः ).

( १ ) "विचिर्, पृथग्भावे" विपूर्वः.धा०रुधा० कौ०पृ०४७१

( २ ) " निष्ठा " इति, कर्मणि क्तः. ३।२।१०२॥कौ०पृ०५८६

निरु०— २६३ वर्धयंस्तान् स्वयमपि ( वर्धमान ) श्च वर्धनात् ।

२६४ लोकोत्तरादिवृत्तान्तात् स्वैकान्ताद्गुणबृंहितात्॥१९५॥

( विविक्त ) इति विख्यातः पावनत्वप्रदो मनुः ।

(२६५) श्रुतिसागरः, ॥

ॐ श्रुतिसागराय नमः ।

भा०— एवंप्रकारगुणश्रवणानां श्रुतीनाम् सागर इव सरिद्गोवानां परमा पर्यवसानभूमिरिति—( श्रुतिसागरः ).

( १ ) " नारायणपरा वेदाः " भाग० २–५–१५।

( २ ) " वेदैश्च सर्वैरहमेव वेद्यः " इति. ❀ गी० १५–१५।

निर्व०— कित्त्वान्न गुणः. अनिट्.

( ३ ) " चोःकुः " इति, कुः.कुत्वेन चस्य कः. ❀ ८।२।३०॥ कौ०पृ०६८

एवंप्रकारगुणश्रवणानां श्रुतीनाम्, सागरः सर्ववेदवेद्यतया, सरितामिव समुद्रः, परमा पर्यवसानभूमिरिति—( श्रुतिसागरः ).

( १ ) " गॄ, निगरणे " धा०तुदा०कौ०पृ०४६८

( २ ) " ऋदोरप् " इति, अप्. ३।३।५७॥कौ०पृ०६५३ गुणो रपरः. ततः,

( ३ ) " तेनसह० " इति, सहशब्दस्य बहुव्रीहिः. २।२।२८॥ कौ०पृ०१६५

( ४ ) " वोपसर्जनस्य " इति,सहस्य सः. ६।३।८२॥कौ०पृ०१६५ पाक्षिकः. ततः, सगरनिर्वृत्तत्वात्,

(५) " तेन निर्वृत्तम् " इति वा. प्रणाद्या ५।१।७९॥कौ०पृ०३०३ तदपत्यलक्षणया वा, संबन्धसामान्यविवक्षया,

( ६ ) " तस्येदम् " इति वा, अण्. आदिवृद्धिः. ४।३।१२०कौ० पृ०२७१

( ७ ) " यस्य० " इति, लोपः. ६।४।१४८॥कौ०पृ०५६

( ८ ) " श्रु, श्रवणे " धा०भ्वादिः कौ०पृ०४२६

निरु०— २६५ नदीनां सागर इव स्वगुणोक्तिविधाजुषाम् ॥१९५॥ श्रुतीनामवसानत्वात् कथ्यते ( श्रुतिसागरः ) ।

श्लो० ॥ २९ ॥ ( २६६ ) सुभुजो, {२६७ / ७२०} दुर्धरो,

ॐ सुभुजाय नमः । ॐ दुर्धराय नमः ।

भा०— प्रपन्नभरधुर्यशोभनभुजः—
( सुभुजः ). ❋
तादृग्भुजबलेन संवर्तसमुद्रवेगः बालक्रीडासैकतसेतुभिरिव परै-र्दुर्वारवेगः–( दुर्धरः ).
( १ ) " ईषद्दुःसुषु०" इत्यादिना खल्. ❋ ३।३।१२६॥ कौ०पृ० ६६८
निर्व०–( १ )"भुयजीवि... करणे" इति, क्विप्. ३।३।९५॥ कौ०पृ० ६५९
अगुणः. अनिट्. ❋
प्रपन्नभरधौरेयतया. शोभनाः भुजा अस्येति–
( सुभुजः ).
( १ ) " भुज,पालनाभ्यवहारयोः" धा०रुधा० कौ०पृ० ४७१
( २ ) " हलश्च" इति.करणे घञ्. ३।३।१२१॥ कौ०पृ०६६३
( ३ ) " भुजन्युब्जौ०" इति, ७।३।६१॥ कौ०पृ० ५६३
निपातनात् अगुणत्वम्.
(४) "चजोः०" इति, कुत्वाभावश्च.७।३।५२॥ कौ०पृ०५६०
स्वित्यव्ययपूर्वो बहुव्रीहिः. ❋
तादृग्भुजबलेन संवर्तसमुद्रवेग इव बालक्रीडासैकतसेतुभिः दुर्वा-रवेगतया परैः धर्तुमशक्य इति–( दुर्धरः ).
( १ ) " धृञ्, धारणे" दुष्पूर्वः. धा०भ्वादिः कौ०पृ०४२३

निरु०–२६६ प्रपन्नभरणे धुर्यभुजो यः (सुभुज) स्तु सः॥ ११७॥
२६७ परैर्दुर्वारवेगो यो ( दुर्धर ) स्स च कथ्यते ।

(२६८) वाग्ग्मी,

ॐ वाग्ग्मिने नमः ।

ना०—एवम्, दुर्लभः. दुर्गमः, इत्यादयोपि. ❀

तथा, प्रशस्यतया वाक्—
(वाग्ग्मी). प्रशंसायाम्. ❀ वाचो ग्मिनिः. प्रशस्यत्वञ्च वेदात्मकत्वात्. जित्वरमधुरगम्भीरप्रियहितत्वाच्च यथा,

(१) "वाग्विवृताश्च वेदाः"

(२) "उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा। भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम्"

नि०—(२) "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" ३।३।१२६ ॥ कौ०पृ० ६६४

इति, कृच्छ्रार्थे दुरुपपदे कर्मणि खल्.

(३) "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" ३।३।१६३॥ कौ०पृ०७५१

इत्यत्र लोटा बाधा माभूदित्येतदर्थकेन कृत्यग्रहणेन स्त्र्यधिकारादूर्ध्वमपि वासरूपविधिः क्वचिन्नेति ज्ञापनात्, ल्युट्तुमुन्खलर्थेषु तदभावादिह कृत्याप्रसक्तेः. एवमीदृशे, तत्र तत्र प्रदेशेऽवधातव्यम्. पुनः रपरः.

(४) "ससजुषोरुः" इति. दुसस्सस्य रुः. ❀ ८।२।६६॥ कौ०पृ० २६

तथा वेदात्मकतया, जित्वरमधुरगम्भीरप्रियहिततया च, प्रशस्यतया वाक् अस्यास्तीति—(वाग्ग्मी).

(१) "वच, परिभाषणे" धा० अदा० कौ०पृ० ४४३

(२) "क्विब्वचि०" इत्यादिना क्विप्. दीर्घः. ३।२।१७८॥ कौ०पृ० ६०७

(३) "वचिस्वपियजादीनां किति" इति. ६।१।१५॥ कौ०पृ०४३२

निरु०—२६८ वेदलक्षणवक्तृत्वाद्(वाग्ग्मी) प्रियहितोक्तितः॥१९८॥

(२६९) महेन्द्रो.

ॐ महेन्द्राय नमः ।

भा०—(३) " बुद्धिमान् मधुरभाषी पूर्वभाषी प्रियंवदः "
(४)"इन्धनं भारतीं भारतानामर्चनीयां शंकरीम् मृञ्जयानाम् । बुद्धस्त्रिर्महणीयामनिन्द्यां परोन्नृनामग्रहणीयकामाम् "
(५) "ओजस्तेजस्वतः काले मधुरं विपुलं भुजम् । अनर्हंजनसत्र-स्माभिरलनलंकुलम् ॥ सनीदनेनो गजानं हनुमद्वाक्यमब्रवीत्" इत्यादि. ※
एवं सर्वतोमुखं प्रसृतत्वात्. पूर्णपरमैश्वर्यः—
(महेन्द्रः).
(१) " इदि. परमैश्वर्ये " धा०दिवा० कौ०पृ० ३८७
निर्व०--प्रानसंभमारणासामर्थ्य. इत्थं ग्मिवान् वाक्छब्दात्.
(४) " वाचो ग्मिनिः" इति सूत्रम्, ५।२।१२४ ॥ कौ० पृ० ३३१
मत्वर्थे ग्मिनिः.
(५) " आलजाटचौ बहुभाषिणि" ५।२।१२५॥ कौ०पृ०३३१ इत्यत्र, ※ कुत्सित इति वक्तव्यात्. कुत्सितायां वाचो बहुत्वेऽपि ग्मिनिरेव; नालजाटचौ.
(६) "लशक्व०" इति. न गस्येत्संज्ञा, १।३।८॥ कौ०पृ०३२ ※ अतद्धिते इति प्रतिषेधात्. ※ चोः कुः कः, जश्त्वेन गः. इन्नन्तलक्षणो दीर्घ इत्यादि. ※
एवम्. सर्वतोमुखं प्रसृतत्वेन पूर्णपरमैश्वर्यतया महांश्चासाविन्द्र श्चेति–(महेन्द्रः).

निरु०—२६९ परमैश्वर्यवत्त्वेन (महेन्द्र) इति शब्द्यते ।

१ परां साधूनां ग्रह ।

## ( २७० ) वसुदो,

ॐ वसुदाय नमः ।

शा०—(२)"ऋज्रेन्द्राग्र०" इत्यादिना, उणा०पा०२ कौ०पृ०६२० रन्प्रत्ययान्तो निपातितः. ❀

एवं सत्यप्यनभिभवनीये महेन्द्रत्वेन महत्त्वे लघुभ्यो धनायद्भ्यो धनं ददातीति—( वसुदः ).यथा,

(१) "देवेन्द्रस्त्रिभुवनमर्थमेकपिङ्गः" इत्यादि. ❀ वि०ध०४३-४७।

( २ ) " वासुदेवस्सर्वम् " इतिप्रकारेण. गी० ७—१९ ।

गरीयसां स्वयमेव धनमिति—

---

निर्व०—( १ ) " इदि,परमैश्वर्ये" धा०भ्वादिः कौ०पृ० ३८७

❀ इदितोनुम्धातोः. अनुस्वारपरसवर्णौ. अयम्,

( २ ) "ऋज्रेन्द्राग्र०" इत्यादिना रन्नन्तो निपातितः. उणा०पा०२ कौ०पृ० ६२०

व्युत्पादि हि महच्छब्दः? तत्र आत्वम्. दीर्घः. ❀ आद्गुणः. ❀

एवं सत्यपि अनभिभवनीये महेन्द्रत्वेन महत्त्वे, लघुभ्यो धनायद्भ्यो वसु—धनम्. ददातीति—

( वसुदः ).

( १ ) " डुदाञ्, दाने" धा०जुहो०कौ०पृ०४५१

(२)"आतोऽनुपसर्गेकः"इति, कः.आल्लोपः.३।२।३॥कौ०पृ०५७०

वसुशब्दः वसतेः,

( ३ )" शृस्वृस्निहि०" इति, उणा० पा० १ कौ०पृ०६०९

उप्रत्यये व्युत्पादितः. ❀

गरीयसां स्वयमेव वसुः—धनमिति—

---

निरु०—२७० ( वसुदो ) धनदानाच्च धनायद्भ्यो विशेषतः॥१९९॥

{१०८ / ७०१} (२७१)वसुः, । (२७२) नैकरूपो,

ॐ वसवे नमः । ॐ नैकरूपाय नमः ।

भा०—(वसुः). ❀
अथ, यथोक्तमहिमोचितवैश्वरूप्यम्. तत्तत्सर्वप्रतीतियोग्यरूपः—
(नैकरूपः).
(१)"नक्षाणणपात्०" इत्यत्र नभ्राट् ६।३।७५॥कौ०पृ०१४८
ग्रहणस्य प्रदर्शनार्थत्वात्, नञ्समासस्य महाविभाषया विकल्पित-
त्वाद्वा, नलोपाभावः.

निर्व०—(वसुः).
(१)"वस, निवासे" धा०भ्वादिः कौ०पृ०४३२
(२)"शॄस्वृस्निहि०"इत्यादिना,उणा०पा०१कौ०पृ०६०९
उरित्युक्तमेव.
(३)"लिङ्गमशिष्यम्"इत्यादि. ❀ ॥ महाभाष्ये ॥
अथ,यथोक्तमहिमोचितवैश्वरूप्यं प्रत्यस्यते. नैकानि—अनेकानि,
तत्तत्सर्वप्रतीतियोग्यानि रूपाणि, अस्येति—
(नैकरूपः).
(१)"रु, शब्दे"धा०अदा०कौ०पृ०४३९
(२)"खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः"उणा०पा०३कौ०पृ०६२१
इति,पप्रत्ययः,धातोःदीर्घः, इडभावश्च निपात्यते.

निरु०—२७१ सर्वस्य हरिरूपत्वाद्धनं यस्माद्(वसु)स्ततः।
२७२ यस्सदा बहुरूपश्च (नैकरूप)स्स कीर्तितः ॥ २०० ॥
तत्तज्जनज्ञानयोग्यं रूपं यस्य विशेषतः ।
(नैकरूप)स्समुद्दिष्टः सर्वप्रत्ययगोचरः ॥ २०१ ॥

## (२७०) वसुदो,

---

ॐ वसुदाय नमः ।

---

ना०—(२)"ऋज्रेन्द्राग्र०" इत्यादिना. उणा०पा०२ कौ०पृ०६२० रन्प्रत्ययान्तो निपातितः. ❀

एवं सत्यप्यनभिभवनीये महेन्द्रत्वेन महत्त्वे लघुग्यो धनायद्भ्यो धनं ददातीति—( वसुदः ).यथा,

(१) "देवेन्द्रस्त्रिभुवनमर्थमेकपिङ्गः" इत्यादि. ❀ वि०ध०४३-४७।

( २ ) " वासुदेवस्सर्वम् " इतिप्रकारेण. गी० ७–१९ ।

गरीयसां स्वयमेव धनमिति—

---

निरु०—( १ ) " इदि,परमैश्वर्ये"धा०भ्वादिः कौ०पृ० ३८७

❀ इदितोनुम्धातोः. अनुस्वारपरसवर्णौ. अयम्,

( २ ) "ऋज्रेन्द्राग्र०" इत्यादिना रन्नन्तो निपातितः. उणा०पा०२ कौ०पृ० ६२०

व्युत्पादि हि महच्छब्दः? तत आत्मम्. शौर्दः. ❀ आह्वणः. ❀

एवं सत्यपि अनभिभवनीये महेन्द्रत्वेन महत्त्वे, लघुभ्यो धनायद्भ्यो वसु—धनम्. ददातीति—

( वसुदः ).

( १ ) " डुदाञ्. दाने" धा०जुहो०कौ०पृ०४५१

(२)"आतोऽनुपसर्गेकः"इति, कः.आल्लोपः.३।२।३॥कौ०पृ०५७०

वसुशब्दः वसतेः,

( ३ )" शृस्वृस्निहि०" इति, उणा० पा० १ कौ०पृ०६०९

उप्रत्यये व्युत्पादितः. ❀

गरीयसां स्वयमेव वसुः—धनमिति—

---

निरु०—२७० ( वसुदो ) धनदानाच्च धनायद्भ्यो विशेषतः॥ १२९॥

{१०८/७०१} (२७१) वसुः, । (२७२) नैकरूपो,

ॐ वसवे नमः । ॐ नैकरूपाय नमः ।

भा०—(वसुः). ❀
अथ, यथोक्तमहिमोचितवैश्वरूप्यम्. तत्तत्सर्वप्रतीतियोग्यरूपः—
(नैकरूपः).
(१) "नभ्राण्णपात्०" इत्यत्र नभ्राड् ६।३।७५॥कौ०पृ० १४८
ग्रहणस्य प्रदर्शनार्थत्वात, नञ्समासस्य महाविभाषया विकल्पितत्वाद्वा, नलोपाभावः.

निर्व०—(वसुः).
(१) "वस, निवासे" धा० भ्वादिः कौ०पृ० ४३२
(२) "शृस्वृस्निहि०" इत्यादिना, उणा० पा० १ कौ०पृ० ६०९
उरित्युक्तमेव.
(३) "लिङ्गमशिष्यम्" इत्यादि. ❀ ॥ महाभाष्ये ॥
अथ, यथोक्तमहिमोचितवैश्वरूप्यं प्रपञ्च्यते. नैकानि—अनेकानि, तत्तत्सर्वप्रतीतियोग्यानि रूपाणि, अस्येति—
(नैकरूपः).
(१) "रु, शब्दे" धा० अदा० कौ०पृ० ४३९
(२) "खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः" उणा० पा० ३ कौ०पृ० ६२६
इति, पप्रत्ययः, धातोः दीर्घः, इडभावश्च निपात्यते.

निरु०—२७१ सर्वस्य हरिरूपत्वाद्धनं यस्माद् (वसु) स्ततः ।
२७२ यस्सदा बहुरूपश्च (नैकरूप) स्स कीर्तितः ॥ २०० ॥
तत्तज्जनज्ञानयोग्यं रूपं यस्य विशेषतः ।
(नैकरूप) स्समुद्दिष्टः सर्वप्रत्ययगोचरः ॥ २०१ ॥

(२७३) बृहद्रूपः,

ॐ बृहद्रूपाय नमः।

भा०—एवम्, नैकमाय इत्यादयः. (२) "विश्वरूपाय" इति मन्त्रवर्णात्. ॥ मन्त्रे ॥ (३) "पश्यामि त्वा सर्वतोऽनन्तरूपम्" इति. ❋ गी० ११–१६। एष्वेकैकमेव दिग्व्योमावकाशं व्याप्नुवत् बृहद्रूपमस्येति—(बृहद्रूपः).यथा,

निर्व०—(३) "इण्, गतौ" धा० अदा० कौ० पृ० ४४१ (४) "इण्भीकापाशल्यतिमर्चिभ्यः कन्" इति, उणा० पा० ३ कौ० पृ० ६२७ कन्.गुणः. अनिट्. नञ्समासः.नच, (५) "नलोपोनञः" इति, नलोपश्शङ्क्यः, ६।३।७३॥ कौ० पृ० ११४७ (६) "नभ्राण्णपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्र नक्रनाकेषु प्रकृत्या" इति सूत्रे६।३।७५॥ कौ० पृ० ११४८ नभ्राड्ग्रहणस्योपलक्षणार्थतया क्वचिदन्यत्रापि नञ्-समासे प्रकृतिभावात्. यद्वा, नञ्समासस्य महाविभाषया विकल्पितत्वेन तदभावात्, समासचरमावयवरूपोत्तर पदनिमित्तकनलोपाभावः. अत्रच नञः समुदायेन संबन्धः. न शब्दसमासोऽयम्, नतु नञ्समास इति तु महान् पन्थाः. प्रागपि इदं मनागुक्तम्. वृद्धिः. ❋ एषु एकैकमेव बृहत्- व्योमावकाशं व्याप्नुवत् रूपमस्येति—(बृहद्रूपः).रूपशब्दो हि निरूपितः१ (१) "बृह, वृद्धौ" धा० भ्वादिः कौ० पृ० ४११

निरु०—२७३व्याप्नुवद्यस्य रूपं तु (बृहद्रूप) स्स कीर्तितः।

## (२७४) शिपिविष्टः,

---

### ॐ शिपिविष्टाय नमः।

---

भा०— (१) "द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः" इति. ❀ गी०११—२०।

शिपयः—रश्मयः, तान् संप्रविष्टः—व्याप्तवानिति—

(शिपिविष्टः).यास्कः,

(१) "शिपयो रश्मय उच्यन्ते तैराविष्टः" इति. ॥ यास्के ॥

एतत्प्रायमार्षम्,

(२) "शिपिविष्टेति यच्चास्य पतिं रोम च यद्भवेत्। तेनाविविष्टं यत्किंचित् उद्योगे. शिपिविष्टं हि तत्स्मृतम्" भा०शा०३४३—४१।

(३) "रोमकूपेषु च तथा सूर्यस्येव मरीचयः" इति.भा०उ०।

(४) "तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो" इति. ❀

---

निर्व०—(२) "वर्तमाने पृषद्बृहत्०" उणा०पा०२कौ०पृ०६२२ इत्यादिना, अतिप्रत्ययः. गुणाभावश्च निपात्यते. जश्त्वम्.

वचनानुसारात्. शिपयः—रश्मयः तैस्सर्वम्. तान्वा,

आविष्टः—संप्राविष्टः आविष्टो व्याप्तवानिति—

(शिपिविष्टः).

(१) "विश,प्रवेशने" धा०तुदा० कौ०पृ०४६९

(२) "विष्लृ, व्याप्तौ" वा.धा०जुहो०कौ०पृ०४५१

(३) "गत्यर्थ०" इत्यादिना कर्तरि क्तः,३।४।७२॥कौ०पृ०५९६

कित्त्वान्न गुणः. अनिट्. पूर्वत्र,

(४) "व्रश्च०" इत्यादिना शान्तत्वात्.८।२।३६॥कौ०पृ०५१

---

निरु०—२७४ शिपयो रश्मयः प्रोक्ताः व्याप्य तेष्वपि वर्तनात्॥२०२॥
(शिपिविष्ट) स्समाख्यातस्सूर्येन्द्वग्न्यादिरूपवत्।

(२७५) प्रकाशनः, ॥

ॐ प्रकाशनाय नमः ।

भा०— इदमेव दिव्यं रूपं दिदृक्षुभ्योऽर्जुनादिभ्योऽसौ प्रकाशयतीति— (प्रकाशनः). यथा,

(१) " दिव्यन्ददामि ते चक्षुः पश्य मे योगमैश्वरम् " गी० ११–८।

(२) "सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम " इति. ॐ गी० ११–५२।

(ओजः)—बलम्, (तेजः)—पराभिभवनसामर्थ्यम्, कीर्तिर्वा, (द्युतिः)—औज्ज्वल्यम्, तानि धरतीति—

निर्व०— षत्वम्, ष्टुत्वम्, उभयत्र टः.

(५) " पिश, अवयवे " तुदादौ मुचादिः. धा०तुदा०कौ०पृ०४७०

(६) " अयं दीपनायामपि " अत्रच धा०तुदा०कौ०पृ०४७०

दीपनाक्रियः.

(७) " पृषोदरादीनि यथोपदिष्टम् " इति, ६।३।१०९॥ कौ० पृ०११७

वर्णविपर्यये विकारे च शिवत्वस्मात्,

(८) "इन् सर्वधातुभ्यः" इति.इन्.स च.उणा०पा०४कौ०पृ०६३७

(९) " इगुपधात्कित् " इति.कितः कित्वात् उणा०पा०४

कौ०पृ०६३७ न लघूपधगुणः. ॐ

इदमेव दिव्यं रूपं दिदृक्षुभ्योऽर्जुनादिभ्यः प्रकाशयतीति—(प्रकाशनः).

(१) " काशृ, दीप्तौ " प्रपूर्वः. णिच्.धा०दिवादिः कौ०पृ०४५५

ल्युः;ल्युट्वा.बाहुलकात्. नन्द्यादिः. अनः.णिलोपः. ॐ

ओजः—बलम्,तेजः—पराभिभवनसामर्थ्यम्, कीर्तिर्वा.

द्युतिः— औज्ज्वल्यम्, तानि धरतीति—

निरु०— २७५ दिव्यरूपं दिदृक्षुभ्यः पार्थादिभ्यो विशेषतः ॥२०३॥

रूपं प्रकाशयति यस्स (प्रकाशन) ईरितः ।

१धारयतीति । धत्ते ।

श्लो०॥३०॥ (२७६) ओजस्तेजोद्युतिधरः,

ॐ ओजस्तेजोद्युतिधराय नमः ।

भा०—(ओजस्तेजोद्युतिधरः). सएव, एकन्नाम.

(१) " यथा प्रदीप्तज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः" गी० ११—२९ ।

(२) " स्थाने हृषीकेश तव प्रकीर्त्या " गी० ११—३६ ।

(३) " दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता " इत्यादि. ❀ गी० ११—१२ । मूर्खैरपि संप्रतिपन्नपरप्रभावः—

निर्व०—(ओजस्तेजोद्युतिधरः). एकन्नाम.

(१) "धृञ्, धारणे" पचाद्यच्. गुणः रपरः. धा० भ्वादिः कौ० पृ० ४२३

(२) " द्युत, दीप्तौ " धा० भ्वादिः कौ० पृ० ४११

(३) "इन् सर्वधातुभ्यः" इति, इन्. उणा० पा० ४ कौ० पृ० ६३७

(४) " इगुपधात् कित् " इति, कित्; कित्त्वान्न गुणः. उणा० पा० ४ कौ० पृ० ६३७

(५) "तिज, निशाने, क्षमायाञ्च." धा० चुरा० कौ० पृ० ४८३ ❀

(६) "सर्वधातुभ्योऽसुन्" इति, असुन्, गुणः. उणा० पा० ४ कौ० पृ० ६४०

(७) " उब्ज, आर्जवे " धा० तुदा० कौ० पृ० ४६५

(८) " उब्जेर्बलोपश्च " इति, असुन्, उणा० पा० ४ कौ० पृ० ६४० बलोपश्च. लघूपधगुणः. षष्ठ्या विग्रहः. तदर्थप्रदर्शनमेतत्. अतः न कर्मण्याणित्युक्तमेव. ❀ मूर्खैरपि संप्रतिपन्नपरप्रभावतया, प्रकाशः—प्रदीप्तः, आत्मा— स्वभावः, अस्येति—

निरु०— २७६ असाधारणसामर्थ्यं बलमोजः प्रचक्षते ॥२०४॥ पराभिभवसामर्थ्यं तेजश्च परिपठ्यते। कीर्तिर्वा द्युतिरौज्ज्वल्यं तानि धत्ते च यस्सदा ॥२०५॥ (ओजस्तेजोद्युतिधरो) ह्येकनामा प्रकीर्तितः ।

(२७७)प्रकाशात्मा,(२७८)प्रतापनः,। { २७९ / ३६३ } ऋद्धम्,

ॐ प्रकाशात्मने नमः। ॐ प्रतापनाय नमः। ॐ ऋद्धाय नमः।

भा०—( प्रकाशात्मा ). यथा, धृतराष्ट्रः,

( १ ) " त्वमेव पुण्डरीकाक्ष सर्वस्य जगतः प्रभुः। तस्मान्मे यादव-श्रेष्ठ प्रसादं कर्तुमर्हसि" इति. ❀ भा० ३० ।

( १ ) " भासस्तवोग्राः प्रतपन्ति" इति—

( प्रतापनः ). ❀

एवम्, कूलमुद्वहत्यार्वणोर्णं वइव—

( ऋद्धः ). यथोद्योगे,

( १ ) " ततस्स पुरुषव्याघ्रः संजगाद पुनस्स्वयम्। तान्दिव्यामद्भुता-श्चित्रामृद्धिमत्तामरिन्दम" इति. ❀ भा० ३० ।

निर्व०—( प्रकाशात्मा ). व्युत्पादि चात्मशब्दः.

( १ ) " काशृ, दीप्तौ" प्रपूर्वः. धा० दिवा० कौ० पृ० ४५५ पचाद्यच् . दीर्घः. ततः, नान्तलक्षणो दीर्घ इत्यादि. ❀

स्वतेजोभिः जगत् प्रतापयतीति—( प्रतापनः ).

( १ ) " तप, सन्तापे" प्रपूर्वः. धा० भ्वादिः कौ० पृ० ४३० णिच् . उपधावृद्धिः. ल्युः. ल्युडित्यादि. अनः. णिलोपः. ❀

इत्थम्, कूलमुद्वहत्यार्वणपाथोनिधिरिव ऋद्धः—समृद्ध इति—(ऋद्धः).

निरु०—२७७ मूर्खैरपि सदा सम्यक् प्रतिपन्नस्वभाववान् ॥ २२६ ॥
यस्स स्यात्तु ( प्रकाशात्मा )
२७८ तीक्ष्णभावः ( प्रतापनः ) ।
२७९ पार्वणो जलधिर्यद्वद्वृद्धिमान् ( ऋद्ध ) उच्यते ॥ २२७ ॥

१ अर्णवजलवत् ऋद्धः ।

(२८०) स्पष्टाक्षरो,

ॐ स्पष्टाक्षराय नमः।

ना०—अनयर्च्या प्रतिपाद्यया स्पष्टीकृतवेदाक्षर इति—
(स्पष्टाक्षरः). ❀

निर्व०—(१) "ऋधु.वृद्धौ" धा०स्वादिः कौ०पृ० ४६१
(२) "गत्यर्थ०" इत्यादिना अकर्मकात् ३।४।७२॥ कौ० पृ० ५९६
कर्तरि क्तः.
(३) "झषस्तथोर्धोऽधः" इति,तस्य धः.८।२।४०॥कौ०पृ०३८५
(४) "झलां जश् झशि" इति, ८।४।५३॥ कौ०पृ० ९
जश्त्वेन पूर्वस्य धस्य दः.
(५) "उदितो वा" इति, ७।२।५६॥ कौ०पृ० ६६८
क्त्वायामिड्विकल्पात्.
(६) "यस्य विभाषा" इति, ७।२।१५॥ कौ०पृ० ५८७
निष्ठायां नेट्. कित्त्वान्न गुणः. ❀
प्रतिपाद्यया चानयर्च्या स्पष्टम्—स्पष्टीकृतम्. अक्षरम्—वेदाक्षरम्. अस्येति—(स्पष्टाक्षरः).
(१) "अशू.व्याप्तौ" धा०स्वादिः कौ०पृ० ४६३
(२) "अश,भोजने" वा.धा०क्र्यादिः कौ०पृ० ४७८
(३) "अशेस्सरन्" इति,सरन्.उणा०पा०३ कौ०पृ०६२८
(४) "तितुत्र०" इति.नेट्. ७।२।९॥कौ०पृ० ६०८
(५) "व्रश्च०" इति,शस्य षः. ८।२।३६॥ कौ०पृ० ५१
(६) "षढोः०" इति,षस्य कः. ८।२।४१॥ कौ०पृ० ५२
(७) "इण्कोः" इत्यधिकृत्य, ८।३।५७॥ कौ०पृ०३४

निरु०—२८० स्पष्टीकृताश्च वेदाणां यस्मात् (स्पष्टाक्षरो) मतः।

## (२८१) मन्त्रः,

ॐ मन्त्राय नमः ।

ना०—" तन्मन्तारं त्रायत इति—(मन्त्रः)" इति नैरुक्ताः. ब्राह्मे. दुष्टविद्रावणस्तोत्रे.

(१) "प्राणप्रयाणे कः स्मर्तुं शक्नुयात्त्वां मधुसूदन" इति. ॥ ब्राह्मे ॥ पृच्छन्तं नारदं प्रति भगवान्,

(२) "तृष्णानीयसमाकीर्णाद्घोरात् संसारसागरात् । अपारात्तारयामीति यो मां स्मरति नित्यशः" ॥ ब्राह्मे ॥

(३) "स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः । धातुसाम्ये स्थिते स्मर्ता विश्वरूपञ्च मामजम् ॥ ततस्तं म्रियमाणन्तु काष्ठपाषाणसन्निभम् । अहं स्मरामि मद्भक्तं नयामि परमां गतिम्" इति. ❀ ॥वाराहे॥

निर्व०—(८) "आदेशप्रत्यययोः" इति, षः. ८।३।५९॥ कौ०पृ० ३४

(९) "स्पश.बाधनस्पर्शनयोः" धा०भ्वादिः कौ०पृ० ४२१

(१०) "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" ७।२।२७ ॥ कौ०पृ० ५९४

इति. णिचि निष्ठान्ततया निपातनात् इडभावः णिल्लुक्च. लुका लुप्ते प्रत्ययलक्षणाभावात् नोपधावृद्धिः. शान्तलक्षणषत्वष्टुत्वादिकन्तु यथाशास्त्रमेव. दीर्घः. ❀

निरुक्तानुसारात् तन्मन्तारं त्रायते इति—(मन्त्रः).

(१) "त्रैङ्,पालने" धा०भ्वादिः कौ०पृ० ४२७

(२) "आदेचः०" इति,आत्त्वम्. ६।१।४५ ॥ कौ०पृ० ४२३

(३) "आतोऽनुपसर्गे कः" इति, कः. आल्लोपः. ३।२।३॥ कौ०पृ० ५७०

निरु०—२८१ मन्तारं त्रायत इति (मन्त्र) आप्यजिर्घायते॥२०८॥

(२८२) चन्द्रांशुः,

ॐ चन्द्रांशवे नमः।

भा०—तेषां मन्तॄणां क्लमहराह्लादनतेजस्त्वात्—(चन्द्रांशुः).
(१) "चदि आह्लादने" धा०भ्वादिः कौ०पृ० ३८७
(२) "स्फायितञ्चि०" इत्यादिना रक्,चन्द्रः,यथा,उणा०पा०२ कौ०पृ०६११
(३) "न दं सोममिदो यन्तं हरा" इत्यादि. ॐ

निर्व०—'मन,ज्ञाने' तान्नौलिकस्तृच्.अनिट्.धा० दिवा०कौ० पृ० ४५६
अनुस्वारपरमवर्णो. ॐ पृषोदरादित्वात् तृशब्दलोपः.कर्तो वा. ॐ तेषां मन्तॄणां क्लमहरणतया, चन्द्राः—आह्लादनाः, तस्यैव वा; अंशवः तेजांसि. अस्येति—
(चन्द्रांशुः). पूर्वत्र चन्द्र इति यावत्. अपरत्र तु स्पष्ट एवायमर्थः.
(१) "अशू,व्याप्तौ" धा०स्वादिः कौ०पृ० ४६३
(२) "मृगय्वा०" इत्यादिना,उः कुश्च,उणा०पा०१कौ०पृ०६११ नुमूच निपातितः,तत्सामर्थ्यात् अनिदितोप्यस्य कौ न नलोपः. अनुस्वारः,तत्र तु अस्याशादे बाहुलकात् प्रत्ययः, पृषोदरादिलक्षणो वर्णागमोऽनुस्वारस्येत्युक्तमेव.
(३) "चदि,आह्लादने" इदित्वान्नुम.धा०भ्वादिः कौ०पृ० ३८७ अनुस्वारादि.
(४) "स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्" इति,रक्. उणा० पा०२कौ०पृ०६११

निरु०—२८२ क्लमहारि महाह्लादतेजस्करतयापि च ।
मन्तॄणामेव (चन्द्रांशु) राह्लादफलदो मनुः ॥२०१॥

## (२८३) भास्करद्युतिः, ॥

ॐ भास्करद्युतये नमः ।

भा०—परेषां परिभावुकप्रभावत्वात्— (भास्करद्युतिः). यथा,

(१) "रक्षांसि भीतानि दिशो द्रवन्ति" इति.गी० ११—३६।

(२) "शरजालांशुमान् शूरः कपे रामदिवाकरः । शत्रुरक्षोमयन्तोयमुच्छोषं नयिष्यति" इतिच. रा०सु० ३—७—१६। अत्र.

(३) "एवमेषोऽसुरगणाश्च सुरगणांश्चैव सर्वशः । भयाभयकरः कृष्णस्सर्वलोकेश्वरः प्रभुः" इति. ❀ भा०स० ६२—२७।

निर्व०—इदित्त्वान्न नलोपः.

(५) "नेड्वशि०" इति,नेट्.बहुव्रीहिः. ७।२।८॥कौ०पृ०५८१

अनुकल्पेऽव्ययम्. ततः,

(६) "सप्तमीविशेषणेबहुव्रीहौ" इत्यत्र सप्तमीग्र-२।२।३५॥कौ० पृ० १७३

हणात्; अन्यथा चापि वा. नहि व्यधिकरणानामपि भवति. ❀ परपरिभावुकप्रभावतया भास्करस्य—सूर्यस्येव. द्युतिः-दीप्तिः, अस्येति-(भास्करद्युतिः).

(१) "द्युत, दीप्तौ" इत्. धा०भ्वादिः कौ०पृ० ४११

(२) "इगुपधात्कित्" इति.कित्.उणा०पा०४ कौ०पृ० ६३७ ततो न गुणः.

(३) "डुकृञ्, करणे" ततः,धा०तना०कौ०पृ० ४७३

(४) "भा,दीप्तौ" धा०अदा०कौ०पृ० ४४३

निरु०—२८३ परप्रभावाभिभवलक्षणद्युतिमांश्च यः ।
स (भास्करद्युतिः) प्रोक्तो नेत्रवैमल्यदो मनुः ॥ २१० ॥

श्लो० ॥ ३१ ॥ (२८४) अमृतांशूद्भवो,

ॐ अमृतांशूद्भवाय नमः ।

भा०—सर्वतापहराप्यायनमृतसंजीवनामृतमयांशुश्चन्द्रोपि तन्मनश्शै- त्यादिगुणोपस्नेहात् तयोद्भवतीति—
( अमृतांशूद्भवः ).

निर्व०— (५) "सर्वधातुभ्यः०" इति, असुन्. दीर्घः. उणा० ४। १८९ कौ० पृ० ६४०
एवं सिद्धे भाश्शब्दे उपपदे.
(६) "दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु" इति. टः. गुणः. रपरत्वम्. ३।२।२१॥कौ० पृ० ५७४
(७) "ससजुषो रुः" इति,८।२।६६॥कौ० पृ० २६
भासस्सकारस्य रुत्वम्.
(८) "खरवसानयोर्विसर्जनीयः" इति.८।३।१५॥कौ० पृ० १२
रेफस्य विसर्जनीयः.तस्य.
(९) "कुप्वोः ≍क ≍पौ च" इति.८।३।३७॥कौ० पृ० २३
जिह्वामूलीये प्राप्ते. तदपवादः,
(१०) "कस्कादिषु च" इति.कस्कादिगणकृति-८।३।४८॥कौ० पृ० २३
गणत्वात्.सः.व्यधिकरणपूर्वपदो बहुव्रीहिः.तत्रचो-रुक्व गतिः. ※
अमृतांशोः- सर्वतापहराप्यायनमृतसंजीवनामृतमयांशोश्चन्द्रस्यापि, तन्मनश्शैत्यादिगुणोपस्नेहात् तथोद्भूतत्वेन उद्भवति अस्मादिति, ( उद्भवः )— उत्पत्तिस्थानम्. इति—( अमृतांशूद्भवः ).

---

निर्व०—२८४ सर्वतापहरस्यैव मृतसंजीवनस्य च ।
अमृतांशोर्हि तज्जत्वा ( दमृतांशूद्भवः ) स्मृतः ॥ २११ ॥

{२८५ / १२६} भानुः,

ॐ भानवे नमः ।

भा०—(१) "चन्द्रमा मनसो जातः" इति. ❀ पु०सू०। अतिभास्वरेण महस्रांशुनाप्युपजीव्यतेजा भातीति—
(भानुः).
(१) "यन्नादित्यो भामुपयुज्य भाति" इति. ❀

निर्व०—(१) "भू. सत्तायाम्" उत्तुर्वः.धा०भ्वादिः कौ०पृ०३६८
(२) "भावे" ३।३।१८॥कौ०पृ०६४७
(३) "अकर्तरिचकारके०" इत्यनुवृत्तौ.३।३।१९॥कौ०पृ०६४७
(४) "ऋदोरप्" इति,अपादाने३।३।५७॥कौ०पृ०६५३ अप्.गुणादेशौ.
(५) "अशू,व्याप्तौ" धा०स्वादिः कौ०पृ०४६३
(६) "कृकशकृ०" इत्यादिना.उणा०पा० १कौ०पृ०६११ अन्यथा चापि अंशुशब्दो व्युत्पादितः.
(७) "भुज्, प्राणत्यागे" धा०तुदा०कौ०पृ०४६८
(८) "हसिमृग्रिण्०" इत्यतः तन्निति वर्तमाने,उणा०पा०३कौ० पृ०६२८
(९) "तनिमृङ्भ्यां किच्च" इति,तन् कित.उणा०पा०३कौ०पृ०६२९ अगुणः.अनिट्.नञ्समासः. नलोपः. तत उभयत्रापि सवर्णदीर्घः. ❀ अतिभास्वरेण भास्करेणापि उपजीव्यतेजा भातीति—
(भानुः).
(१) "भा.दीप्तौ" धा०अदा०कौ०पृ०४४३
(२) "दाभाभ्यान्नुः" इति.नुः.अनिट्. ❀ उणा०पा०३कौ०पृ०६२६

निरु०—२८५.रवेस्तेजस्करत्वाच्च (भानु) रित्यभिधीयते।

## ( २८६ ) शशबिन्दुस्,

ॐ शशबिन्दवे नमः ।

शा०—एवञ्च—
( शशबिन्दुः ).
(१) "शश,प्लुतगतौ" शशानां कुटिलगतीनाम्, धा०भ्वादिः कौ० पृ०४१०
( बिन्दुः )—अपलपिता.
( २ ) " बिदि,अवयवे" धा०भ्वादिः कौ०पृ०३८७
बिन्दुरिच्छुरित्युप्रत्ययान्तो निपातितः. ❀
तथा ऋजुगतीनाम् निर्वाहकः—

निर्व०—एवंच, शशानाम्—कुटिलगतीनाम्, बिन्दुः- अपलपितेति-
( शशबिन्दुः ).
(१)"बिदि, अवयवे"अपलापक्रियः धा०भ्वादिः कौ०पृ०३८७
इत्यायम्. अनेकार्थाहि धातवः ? आलाप इत्येव वा पाठः.
इदित्वान्नुमित्यादि.
( २ ) "बिन्दुरिच्छुः"इति पदयोर्भेदात्, बिदिविद्योरुभयोरप्यु
प्रत्ययो निपात्यते. ताच्छीलिकः ? नुम् च. यद्वितु वेत्तेर्वेदन्निपातनं
बिन्दुरिति; तदा,
( ३ ) " शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च"
इत्यत्र चकारात् अनुक्तसमुच्च- उणा०पा० १कौ०पृ०६०९
यार्थात् बिन्देरुः; बाहुलकाद्वा.
(४) शश, प्लुतगतौ"पचाद्यच्. ❀ धा०भ्वादिः कौ०पृ०४१०
ऋजुगतीनां सुराणां देवानाम्, ईश्वरः-निर्वाहक इति—

निरु०—२८६ शशप्लुतगतिः प्रोक्तो बिन्दुस्तस्य निवर्तकः॥२१२॥२८६
कौटिल्यगतिविध्वंसी ( शशबिन्दु ) रुदाहृतः ।

(२८७) सुरेश्वरः। (२८८) औषधम्,

ॐ सुरेश्वराय नमः। ॐ औषधाय नमः।

भा०—(सुरेश्वरः).

(१) "सर्वजिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम्" इतिवत्. ❀

भवतीव्रविषापहप्रभावत्वात्—

(औषधम्).यथा,

(१) "देवा देवर्षयश्चैव यं विन्दुर्दुःखभेषजम्"

(२) "एकाग्रतामूल्यबलेन लभ्यं भवौषधन्त्वं भगवन् किलैकः"

इत्यादि. ❀

निर्व०—(सुरेश्वरः).

(१) "ईश,ऐश्वर्ये" धा०अदा०कौ०पृ० ४३८

(२) "स्थेशभास०" इत्यादिना वरच्. ३।२।१७५॥कौ०पृ०६०६

(३) "नेट्०" इति,नेट्.७।२।८॥कौ०पृ० ५८१

(४) "षु,प्रसवैश्वर्ययोः" पस्सः.धा०अदा०कौ०पृ० ४४०

व्युत्पादि चातः क्वनि सुरशब्दः. गुणः. ❀

औषधम्— भवतीव्रविषापहं भेषजमिति—

(औषधम्).

(१) "डुधाञ्,धारणपोषणयोः"ततः,धा०जुहो० कौ०पृ०४५१

(२) "उष,दाहे"भावे घञ्.गुणः.धा०भ्वादिः कौ०पृ०४०९

ततस्तत्रोपपदे,

(३) "कर्मण्यधिकरणेच" ३।३।९३॥कौ०पृ०६५८

इति, किः. आतो लोपः. इत्थं निष्पन्नात् ओषधिशब्दात्,

(४) "ओषधेरजातौ"इति, प्रकृतेचा-५।४।३७॥कौ०पृ०३५५

निर्व०—२८७ धर्ता ऋजुगतीनां यः स (सुरेश्वर) ईरितः॥२१३॥

२८८ भवतीव्रविषं हर्ता (ह्यौषधं) यस्स उच्यते।

( २८९ ) जगतस्सेतुः,

ॐ जगतस्सेतवे नमः ।

ना०—एवं सदसद्वर्गनेकविवेकवित्वेन—

( जगतस्सेतुः ).

( १ ) "षिञ्. बन्धने" धा० स्वादिः कौ० पृ० ४६१

( २ ) "सितनिगमि०" इत्यादिना तुन्. यथा, उणा० १।० १ कौ० पृ० ६१३

( ३ ) "एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति. बृ० उ० ६–४–२२।

अतः खलु कर्मसु अकृताभ्यागमकृतविप्रणाशयोरप्रसक्तिः.

( ४ ) "यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्वकृतं कर्म कर्तारमनुविन्दति"

( ५ ) "शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते" इति. ❀

---

निर्व०—जातिवचनत्वात् स्वार्थे अण्.

(५) "तद्धितेष्वचा०" इति. आदिवृद्धिः. ७।२।११७॥ कौ० पृ० २०४

( ६ ) "यस्य०" इति. लोपः. ६।४।१४८॥ कौ० पृ० ५६

( ७ ) "लिङ्गमशिष्यम्" इत्यादि. ❀ ॥ महाभाष्ये ॥

एवम्. कर्मसु अकृताभ्यागमकृतविप्रणाशप्रसङ्गनिरोधतया जगतां सेतुः— तद्वत् सदसद्वर्गासंभेदहेतुरिति—

( सेतुः ).

( १ ) "षिञ्. बन्धने" पस्मैः. धा० स्वादिः कौ० पृ० ४६१

( २ ) "सितनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुन्" उणा० १।० १ कौ० पृ० ६१३

इति, तुन्. गुणः. अनिट्. जगच्छब्दो व्युत्पादितः. ततो ङस्. ❀

---

निर्व०—२८९ निरोधात् ( जगतस्सेतु ) स्सदसद्वर्गसङ्गतेः ॥२१४॥

(२९०) सत्यधर्मपराक्रमः ॥

ॐ सत्यधर्मपराक्रमाय नमः ।

शा०—एवंविधा धर्माः— कल्याणगुणाः, पराक्रमाः—चेष्टितानि च, सत्याः— अवितथाः यस्य, सः—
( सत्यधर्मपराक्रमः ). तथाहि. गुणचेष्टितानि प्रकम्य.
( १ ) " सर्वमेतदृतं मन्ये यन्मां वदसि केशव " गी० १०—१४।
इत्यर्जुनः.
( २ ) " विष्णुस्सत्यपराक्रमः "
( ३ ) "यं दा केष्वनुदाकेषु निषत्सूपनिषत्सु च । गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु "इति च. ❀

निर्व०— एवंविधाः सत्याः— अवितथाः, धर्माः— कल्याणगुणाः, पराक्रमाः— चेष्टितानि, चास्येति—
( सत्यधर्मपराक्रमः ).
( १ ) " क्रमु,पादविक्षेपे " परापूर्वः.भावे घञ्.धा०भ्वादिः
कौ०पृ०४०१
(२) "अत उपधायाः" इति, वृद्धिप्राप्तौ.७।२।११६॥कौ०पृ०३८६
(३) "नोदात्तोपदेशस्यमान्तस्यानाचमेः "७।३।३४॥कौ०पृ०५४१
इति. तन्निषेधः.
( ४ ) " धृञ् .धारणे " धा०भ्वादिः कौ०पृ०४२३
( ५ ) " अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् "
इति. मन्.गुणः रपरः.अनिट्. उणा०पा०१कौ०पृ० ६१६
अस्तेर्व्युत्पादितात्. सच्छब्दात् यतिसत्यशब्दोहि व्युदपादि.
बहुपदलक्षणोयं बहुव्रीहिः तद्विधावनेकोक्तेः. ❀

निरु०—२९०सत्या ह्यवितथा धर्मा गुणा यस्य पराक्रमः ।
चेष्टितानि च सन्तीति ( सत्यधर्मपराक्रमः ) ॥ २१५॥

श्लो० ॥३२॥ (२९१) भूतभव्यभवन्नाथः,(२९२)पवनः,

ॐ भूतभव्यभवन्नाथाय नमः । ॐ पवनाय नमः ।

ना०-एवंभायं स्वाम्यमैश्वर्यं वा न केवलमद्य,किन्तु त्रिकालेष्विति-
( भूतभव्यभवन्नाथः ).यथा,
( १ ) " भूतभव्यभवन्नाथः केशवः केशिसूदनः । प्राकारस्सर्व-
वृष्णीनामास्यभयदोऽरिहा " इति. ॐ भार०नना० ३८-२३।
एवं सर्वदा सर्वत्र स्वभावादेव पुनातीति–
(पवनः).पवित्रित्यर्थः.एतद्व्याख्येन गन्धवाहस्यापि सततगतित्वम्. ॐ

निर्व०– एवंभायं स्वाम्यमैश्वर्यं वा न केवलमद्य; किन्तु त्रिका–
लेष्वपि. ततः, भूतभव्यभवताम्-अतीतानागामिवर्तमानकालत्रयवर्तिनाम्,
नाथः–ईश्वर इति–( भूतभव्यभवन्नाथः ).
( १ )" नाथृ, नाधृ. याच्ञोपतापैश्वर्याशीष्षु " धा०त्वादिः कौ०-
१०३८२ पचाद्यच्.भूतभव्यभवच्छब्दाःभवतेःशतृ क्युक्तादिप्रत.
( २ )" यरोऽनुनासिकेऽनुनासिको वा " इति, ८।४।४५।।कौ०
२० १९ पाक्षिकोऽनुनासिकः. यथोक्तव्याख्यानेन नाथशब्दयोः
प्रकरणान्तरस्थयोरनयोर्नाम्नोर्न पुनरुक्तिः. एवमेव सर्वत्राप्यग्रेऽपि
तत्र तत्र प्रदेशेऽवधातव्यम. उक्तञ्चैतत्. ॐ
एवं सर्वदा सर्वत्र स्वभावादेव पुनाति गच्छतीति–( पवनः ). पवित्रि-
त्यर्थः. नन्द्यादिल्युः; ल्युड्वा. बाहुलका–

निरु०–२९१ ऐश्वर्यं वाथ स्वाम्यं वा त्रिकालेष्वपि यस्य सः ।
( भूतभव्यभवन्नाथ ) इत्युक्तस्माद्भिगदगत् ॥ २१५ ॥
२९२ सदा स्वयन्तु सर्वत्र प्रवाह इति नित्यशः ।
( पवनः ) प्रवहति यः कथ्यते वेगदो मनुः ॥ २१७ ॥

(२९३)
(८१७) पावनो.

ॐ पावनाय नमः ।

भा०—तथा स्वसंबन्धिनो गङ्गादीन् जगत्पुनानान् प्रयोजयतीति—(पावनः). यथा अगस्त्यः,

(१) "पावनस्सर्वलोकानां त्वमेव रघुनन्दन" रा० ।

इत्यादि. ❀

एवं बहुमुखमुपक्रत्य च नालं न पर्याप्तमस्यानुग्रहमहिमेति—

निर्व०—दित्यादि. अनः. यद्वा,

(१) "पूञ्, पवने" गतिकर्महायम्. धा० क्र्या० कौ० पृ० ४७५

(२) "सुयुरुवृञो युच्" इति वर्त्तमाने, उणा० पा० २ कौ० पृ० ६२२

(३) "बहुलमन्यत्रापि" इति, युच्. उणा० पा० २ कौ० पृ० ६२४

अनः. गुणावादेशौ. एतद्ग्रन्थेन गन्धवहस्यापि सततगतेः पवनत्वम्. ❀

स्वसंबन्धिनया पुनानेन गङ्गादिना जगत् पावयतीति—(पावनः).

(१) "पूञ्, पवने" हेतुमण्णिच्. धा० क्र्यादिः कौ० पृ० ४७५

वृद्ध्यावादेशौ. ततः, प्राग्वत् ल्युः. ल्युट्, युज्वा. अनः. णिलोप इत्यादि. ❀ इत्थम्, बहुमुखमुपक्रत्यापि. अनुग्रहमहिम्नो नालम्—नपर्याप्तम्. अस्येति वा,—अलः—पर्याप्तो नेति वा—

निरु०—२९३ यस्स्वसंबन्धिगङ्गादीन् पावनान् लोकपावनान् ।
स (पावन) इति ख्यातः पावनत्वप्रदो मनुः ॥२१८॥

१ महिम्न इति ।

{२९४ / ९१६} ऽनलः,। ( २९५ ) कामहा,

ॐ अनलाय नमः । ॐ कामघ्ने नमः ।

भा०–( अन्–अलः ).–अनन्दो देवः. इदक्–भक्तिशीकरानुबन्धात् लौकिकानलस्यापि अन्–अलत्वम्.

( १ ) "हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते" इति. ॐ

एवंप्रकारं स्वगुणदर्शिनां विषयान्तरविषयस्पृहां हन्तीति–( कामहा ).

(१)" नकामकलुषं चित्तं मम ते पादयोस्स्थितम्" इति तद्दर्शिनः;

( २ ) " श्रोत्रियस्य चाकामहतस्य " तै०आ०८–८.।

( ३ )"यदिच्छन्तो ब्रह्मचर्यं चरन्ति" इति च. ॐ कठवल्ल्याम्-१-२।

निर्व०– ( अन्–अलः ).

( १ ) " अल, भूषणपर्याप्तिवारणेषु " धा०भ्वादिः कौ०पृ०४०४ पचाद्यच्. नञ्समासो, बहुव्रीहिः तत्पुरुषो वा, नञो नलोपः. नुट्. इदक्शक्तिलेशानुबन्धादग्नेरप्यन्–अल–त्वम्. ॐ

स्वगुणदर्शिनां, ( कामं )–विषयान्तरस्पृहां, हन्तीति–( कामहा ).

( १ ) "हन, हिंसागत्योः" उपपदनिमित्तस्य सार्वकालिकत्वाभिप्रायो वा, धा०अदा०कौ०पृ०४३७. सार्वकालिको वा, अन्यथा चापि वा, क्विप्.

( २ )"कमु, कान्तौ " कान्तिरिच्छा. धा०भ्वादिः कौ०पृ०३९९

निरु०–२९४ अपर्याप्तो हि भक्तार्थ्योऽप्युपकृत्य पुनः पुनः ।
अनुग्रहं यः करोति सो ( ऽनलः ) परिकीर्तितः॥२१९॥
२९५ पुंसां स्वदर्शिनां योऽसौ स्पृहां च विषयान्तरे ।
हतवान् ( कामहा ) प्रोक्तः सर्वाशापूरको मनुः॥२२०॥

१ अनुरोधात् इति।

## ( २९६ ) कामकृत्,

### ॐ कामकृते नमः ।

भा०—अन्यदपि भोगमोक्षादिकं स्वयमेव काम्यं[2] करोतीति—( कामकृत् ). ※

निर्व०—( ३ ) " कर्मणिङ् " इति स्वार्थिकस्य णिङः, ३।१।३०॥ कौ०पृ०३९९

( ४ ) "आयादय आर्धधातुके वा" इति, ३।१।३१॥कौ०पृ०३९७ विवक्षितत्वात्. तस्माच्च वाऽनन्तरविधिना वा. अत्र,

( ५ ) "ऋहलोर्ण्यत्" इति. हलन्त—३।१।१२४॥कौ०पृ०५६२ लक्षणण्यदभावे, भावे घञ्.

( ६ ) " नोदात्तोपदेशस्य० " इत्यत्र, ७।३।३४॥कौ०पृ०५४१

( ७ ) " अन्. ( आचमि—कमि—वमीनाम् ) "७।३।३४॥ कौ०पृ०५४१ इति, वक्तव्यात्, नोपधावृद्धिप्रतिषेधः. ततो वृद्धिः. णिङ्पक्षे तु, तन्निमित्तैव वृद्धिः.

(८) "नोदात्तो०"इत्यस्य, चिणि—ञिति-णिति-कृतिच ७।३।३४॥ कौ०पृ०५४१ विधीयमानस्य, इहानवकाशात्, वार्तिकानुपस्थानात्. ततः, उक्तेर्थे,

( ९ ) " सन्—आद्यन्ताः० " इति, धातुत्वात्, ३।१।३२॥ कौ० पृ०३९७ अचो, यति प्राप्ते, पूर्वोक्तन्यायात्.

( १० ) " एरच् " णेर्लोपः. ३।३।५६॥कौ०पृ०६५३ सिद्धयसिद्धियां भावस्य भवत्यहेह नेह कृत्यप्रसक्तिरेव वेति ध्येयम्. एतत् अन्यत्तु वक्ष्यते. हलन्तलक्षणः,

( ११ ) " सोच " इति, दीर्घः. इत्यादि. ※ ६।४।१३॥ कौ० पृ०६४ कामम्—अन्यदपि भोगमोक्षादिकं[1] काम्यम् स्वयमेव करोतीति—( कामकृत् ).

( १ ) " डुकृञ्, करणे " क्विपि, धा०तना०कौ०पृ०४७३

---

निरु०—२९६ स्वपादसङ्गरागादिकरणात् ( कामकृत् ) स्मृतः ।

---

१. मोक्षादि इति । २ कार्यम् इति ।

{२९७} कान्तः,
{६६०}

ॐ कान्ताय नमः ।

भा०—स्वयं सौन्दर्यसौकुमार्यादिरूपगुणैः—
( कान्तः ). कमेर्निष्ठायाम्,
( १ ) " अनुनासिकस्य क्विझलोः क्ङिति " इति दीर्घः. ❀ ६।४।१५॥ कौ० पृ० ५१५

निरु०—( २ ) " हल्ङ्याब्भ्यो० " इति, लुक् .६।१।६८॥ कौ० पृ० ५५९. अगुण इत्यादि. काम्यत इति कामः.
( ३ ) " कमु, कान्तौ " इत्यस्माद्धातोः, धा० भ्वादिः कौ० पृ० ३११ इत्यासवृत्तौ,
( ४ ) " अकर्तरि च कारके० " इति, कर्मणि ३।३।१९॥ कौ० पृ० ६४७ घञ्. णिङ्. पक्षेतु, एरचि, णिलोपः. एवं, तत्र तत्र ( कामः कामदेव इत्यादौ ) ध्येयम्. शेषं पूर्ववत्. ❀
स्वयं, सौन्दर्यसौकुमार्यादिरूपगुणैः कान्तः-अभिरूप इति—(कान्तः).
( १ ) " कमु, कान्तौ " धा० भ्वादिः कौ० पृ० ३११
( २ ) " वर्तमाने क्तः " इत्यनुवृत्तौ,
( ३ ) " मतिबुद्धिपूजार्थेभ्यश्च " इति, ३।२।१८८॥ कौ० पृ० ७९७ मतेः पृथक् बुद्धिग्रहणात् इह कान्तिरिच्छति तदर्थादस्मात् वर्तमाने क्तः. अकर्मकात् कर्तरीह भवति.
(४) "उदितो वा" इति, क्त्वायामिड्विकल्पात्, ७।२।५६॥ कौ० पृ० ६६८
(५) "यस्य विभाषा" इति, निष्ठायामनिट् ७।२।१५॥ कौ० पृ० ५८७
(६) "अनुनासिकस्य क्विझलोः क्ङिति" इति, ६।४।१५॥ कौ० पृ० ५१५ झलादौ क्ङिति धातोरुपधाया दीर्घः. अनुस्वारपरसवर्णौ. ❀

निरु० २९७ सौन्दर्यादिगुणैः (कान्तः) मनोहरतया भृशम् ॥ २२१ ॥

१ क्ङिति, इदं पदं सप्तम्यन्तम् ।

## (२९८) कामः, (२९९) कामप्रदः,

### ॐ कामाय नमः। ॐ कामप्रदाय नमः।

ना०—शीलौदार्यदयादिभिरात्मगुणैश्च, निकामकमनीयत्वात्—(कामः). एतद्गुणबिन्दुना हि, मदनोपि; जगत् उन्मादयति. ❀ स्वकामिभ्यः क्षुद्रकामिभ्यश्च यथार्हं काम्यं प्रददातीति—(कामप्रदः).

(१) "प्रे दाज्ञः" इति कः. वसुप्रदः, इत्यादयोपि.यथा, ३।२।६॥ कौ०पृ०५७२

(२) "एको बहूनां यो विदधाति कामान्" कठ०—२—५। अनया, नितान्तकान्ततया, सर्वहृदयहरणे, प्रभवतीति—

---

निर्व०—शीलौदार्यदयादिभिरात्मगुणैश्च कामः—निकामकमनीय इति—(कामः). पूर्ववदेवधातुः. कर्मणि घञ्. अन्यच्च पूर्ववत्. एतद्गुणबिन्दुना हि मदनोपि जगदुन्मादनः काम उच्यते. ❀ स्वकामिभ्यः अन्यकामिभ्यश्च यथार्हं कामं—काम्यं, प्रददातीति—(कामप्रदः).

(१) "डुदाञ्, दाने" प्रपूर्वः.धा०जुहो० कौ०पृ० ४५१

(२) "प्रेदाज्ञः" इति,प्रे उपपदे कः.३।२।६॥कौ०पृ०५७२

आल्लोपः. कामशब्द इहापि कमेः कर्मणि व्युत्पाद्यः. ❀ अनया नितान्तकान्ततया, सर्वहृदयहरणे, प्रभवतीति—

---

निरु०—२९८—२९९स्वकाम्यक्षुद्रकाम्येभ्यो यथार्हं काम्यदानतः।
(कामप्रद) स्समाख्यातो ह्यष्टार्णो मनुरुत्तमः॥ २२२॥

---

१ काम्येभ्यः।

{३०० / ३५} प्रभुः ॥

ॐ प्रभवे नमः ।

भा॰— (प्रभुः).

(१) "नामः कमलपत्राक्षः सर्वसत्त्वमनोहरः" इत्यादि. ❀

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः

श्रीरङ्गराजदिव्याज्ञालब्धपराशरनामधेयस्य,

श्रीरङ्गनाथस्य कृतौ,

श्रीमद्विष्णुनामसहस्रविवरणे,

भगवद्गुणदर्पणे

तृतीयं शतकं सम्पूर्णम्.

निर्व॰— (प्रभुः).

(१) "भू, सत्तायाम्" स्वार्थः. भ्वादिः कौ॰ पृ॰ ३६८

(२) "विप्रसंज्ञः॰" इति, [illegible] ३।४।१८०॥ कौ॰ पृ॰ ६८७

संज्ञायामपि इगिति प्राप्तःनुकर्त्तव. दिव्याद्रिष्टोऽ इत्यादि. ❀

इति श्रीकुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज

वरदेशिकतनयवरदगुरुवरसूनुवरदार्यसूरिविरचिते,

श्रीपराशरभट्टार्यभाषित-

श्रीमद्विष्णुसहस्रनामभाष्यानुगे,

भगवन्नामसहस्रनिर्वचने,

तृतीयं शतकं संपूर्णम्.

निरु॰— ३०० सर्वेषां चित्तहरणे (प्रभुः) प्रभवतीति यः ।

# अथ चतुर्थशतक प्रारम्भः ।

## श्लो० ॥ ३३ ॥ ( ३०१ ) युगादिकृद्,

ॐ युगादिकृते नमः ।

शा०— अथाऽमर्यादाश्चर्यत्वम्. तत्र न्यग्रोधशाय्यवतार उदाहरणम्. युगस्यान्तेऽपि आदिं करोतीति— (युगादिकृत्).स खलु संवर्तेऽपि प्रलयात् अनुवर्तुं,जगत् प्रवर्तितवान्. स्वधर्मव्यवस्थया, कृतादियुगानां. पौनःपुन्येन आवर्तनात्—

निर्व०— अथ अमर्यादाश्चर्यत्वम्. तत्र तावत् न्यग्रोधशाय्यवतार उदाह्रियते. संवर्तकेपि प्रलयादनुवर्तनजगत्प्रवर्तनेन अन्ते‍ऽपि युगस्यादिं करोतीति—( युगादिकृत् ).

( १ ) " डुकृञ्, करणे " क्विपि तुक्. अगुण इत्यादि. धा० तना० कौ० पृ० ४७३

( २ ) " डुदाञ्,दाने " आङ्पूर्वः. धा० जुहो० कौ० पृ० ४५१

(३)"उपसर्गे घोः किः" इति. किः. आल्लोपः. ३।३।९२॥ कौ० पृ० ६५८

( ४ ) "युजिर्, योगे" धा० रुधा० कौ० पृ० ४७१

( ५ ) " युज, समाधौ " वा. इगुपधलक्षणः कः. धा० दिवा० कौ० पृ० ४५६ पृषोदरादित्वात् जस्य गः. यद्वा, घञ्.

( ६ )"चजोः०" इति. कुत्वम्. जस्य गः. ७।३।५२॥ कौ० पृ० ५६०

( ७ ) " उञ्छादीनाञ्च " इति, स्वरविधौ. ❁ ६।१।१६०॥ कौ० पृ० ७२४

उञ्छादिगणे युगेति निपातनादगुणः. विशिष्टविषयश्चेदं निपातनं काल-विशेषे रथाद्युपकरणे च अन्यत्र तु योग इत्येव भवति. सांहितिको दीर्घः. स्वधर्मव्यवस्थया युगानि— कृतादीनि, आवर्तयति— पौनःपुन्येन परिवर्तयतीति—

निरु०—३०१ न्यग्रोधशायी भगवान् पुराणपुरुषोत्तमः ॥ २२३ ॥
करोत्यादिं युगस्यान्ते ( युगादिकृ ) दुदीरितः ।

(३०२) युगावर्तः, (३०३) नैकमायो,

ॐ युगावर्ताय नमः । ॐ नैकमायाय नमः ।

भा०—(युगावर्तः). ❀
मुग्धशिशुरूपापरिमितजगन्निगरणनिरालम्बनैकोदकवटदलशयनाद्यनेकातर्क्याश्चर्यः—
(नैकमायः). नच मिथ्यावचनोऽयं माया-शब्दः, तथ्येपि प्रयोगभूयस्त्वात्. तथाहि,
(१) "मायां तु प्रकृतिं विद्यात्" श्वे० उ० ४–९।
इति, अनेकार्थ-क्रिया-कारिण्यां प्रकृतौ;
(२) "मायावयुनं ज्ञानम्"

निर्व०—(युगावर्तः).
(१) "वृतु, वर्तने" आङ्पूर्वः. णिच्. गुणः रपरः. धा० भ्वादिः कौ० पृ० ४१२
(२) "अन्येभ्योऽपि दृश्यते" इति, डः. ३।२।१७८॥ कौ० पृ० ६०७
पचाद्यज्वा. यथासंख्यं टिलोपो णिलोपो वा. युगशब्दः प्राग्वत्. दीर्घश्च. सांहितिकं जश्त्वम्. ❀ मुग्धशिशुरूपापरिमितजगन्निगरणनिरालम्बनैकोदकवटदलशयनाद्यनेकातर्क्याश्चर्ययोगितया नैकाः अनेकाः मायाः—आश्चर्याणि, अस्य, इति,—(नैकमायः).
(१) "माङ्, माने" धा० जुहो० कौ० पृ० ४५०

निरु०—३०२ धर्मव्यवस्थया स्वस्य युगाद्यावर्तनान्मुहुः॥२२४॥
(युगावर्तः) समाख्यातः कालरूपधरो हरिः ।
३०३ मुग्धार्भकस्वरूपेण जगन्निर्गरणादपि ॥ २२५ ॥
वटैकपत्रशयनान्निरालम्बजले मुहुः । अनन्ताश्चर्यसंयुक्तो (नैकमाय) स्तु स स्मृतः ॥ २२६ ॥

भा०–( ३ ) "संख्याता देवमायया"

( ४ ) "विश्वानि, देव ! वयुनानि विद्वान्" इतिच, ज्ञाने;

( ५ ) "तेन मायासहस्रं तत् शम्बरस्याशुगामिना । बालस्य रक्षता देहमेकैकश्येन सूदितम्" इति, ॥ वाराहे ॥

तत्त्वज्ञानाख्ये, अज्ञानाख्ये, वाराहे मायाध्यायादिना;

( ६ ) "मेघोदयस्सागरसन्निवृत्तिरिन्दोर्विभागस्स्फुरितानि वायोः । विद्युद्विभङ्गो गतमुष्णरश्मेर्विष्णोर्विचित्राः प्रभवन्ति मायाः" इति अभियुक्तैश्च महाश्चर्ये;

आरण्यपर्वणि मार्कण्डेयेन, वटदलशयनाख्याश्चर्यमुक्त्वा,

( ७ ) "ततो मे पृथिवीपाल विस्मयस्सुमहानभूत् । लोकन्दृष्ट्वा समस्तञ्च, इत्युक्त्वान्तर्हितस्तात स देवः परमाद्भुतः । आश्चर्यं भरतश्रेष्ठ" भा०आ०–१८८–९४ ।

इति तद्विषये निर्दोषप्रत्यक्षसिद्धे बह्वाश्चर्यपर्यायप्रयोगश्च भूयिष्ठः उपलभ्यते. ❀

निर्व०–( २ ) "माच्छाससिभ्यो यः" इति, यः. उणा०पा०४ कौ०पृ०६३७ ततः स्त्रियाम्, अतष्टाप्. दीर्घः.

( ३ ) "इण्, गतौ" धा०अदा०कौ०पृ० ४४१

( ४ ) "इण्भीकापाशल्यतिमर्चिभ्यः कन्" इति,उणा०पा०३ कौ०पृ० ६२७

कन्. बाहुलकात् न इट्. एवं तत्र तत्र ज्ञेयम्. गुणः.

अनिट्. ततः स्त्रियामतष्टाप्. दीर्घः. नेत्यनेनाव्ययेन समासे वृद्धिरैकारः.

( ५ ) "नभ्राण्नपात्०" इत्यस्योपलक्षण-६।३।७५॥कौ०पृ०१४८

तया नञ्समासस्य विकल्पिततया नशब्दसमासतया वा नैकेत्यत्र नलोपाभावः. उक्तञ्चैतत् प्रागेव. बहुव्रीहौ

( ६ ) "स्त्रियाःपुंवत्०" इत्यादिना, ६।३।३४॥ कौ०पृ० १६०

---

१ विस्मितो नावबुध्यसे । २ भूयिष्ठम् ।

## ( ३०४ ) महाशनः, । ( ३०५ ) अदृश्यो,

## ॐ महाशनाय नमः । ॐ अदृश्याय नमः ।

भा०—निखिलजगन्निगरणमस्येति—( महाशनः ). यथा,
( १ ) "यच्च किंचिन्मया लोके दृष्टं स्थावरजङ्गमम् । तदत्राहं सर्वं तस्य कुक्षौ महात्मनः" इति, भार० आ० १८८—१२२ ।
( अदृश्यः ).
( १ ) "ऋदुपधाच्चाक्लृपिचृतेः" ३।१।११०॥ कौ० पृ० ५६० इति, क्यप्. अतर्क्यवृत्तान्तः, यथा,

निर्व०—पूर्वपदस्य पुंवद्भावः. उपसर्जनत्वादुपसर्जन,
( ७ ) "गोस्त्रियोः०" इति, १।२।४८॥ कौ० पृ० १२१ उपसर्जनस्त्रीप्रत्ययस्य ह्रस्वोकारः. ❀ महत् अशनं निखिलजगन्निगरणम् अस्येति—( महाशनः ).
( १ ) "अश, भोजने" धा० क्र्यादिः कौ० पृ० ४७८
( २ ) "ल्युट् च" इति, भावे ल्युट्. ३।३।११५॥ कौ० पृ० ६६० अनः, व्युत्पत्तिनान्महतः.
( ३ ) "आन्महतः०" इति, आत्वम्. दीर्घः. ६।३।४६॥ कौ० पृ० १५५
पुनस्सांहितिको दीर्घ इत्यादि. ❀
अतर्क्यवृत्तान्ततया दृश्यः, द्रष्टुं शक्यः नेति—( अदृश्यः ).
( १ ) "दृशिर्, प्रेक्षणे" इति. धा० भ्वादिः कौ० पृ० ४३०

निरु०—३०४ भुवनानान्निगरणात् ( महाशन ) इतीरितः ।
३०५ अतर्क्यवृत्तान्ततया जगतः प्रलयेपि यः ॥ २२७ ॥
न लक्ष्यश्चिन्त्यमानोपि सो ( ऽदृश्य ) इति कथ्यते ।

(३०६) व्यक्तरूपश्च,

ॐ व्यक्तरूपाय नमः ।

भा०—(२) "कथंन्वयं शिशुः शेते लोके नाशमुपागते । तपसा चिन्तयंश्चापि तं शिशुं नोपलक्षये" इति. ❀ भार०अ०१८८—९४। अथच, अभिगच्छतो मार्कण्डेयादेः—

(व्यक्तरूपः). सुग्रहदिव्यविग्रहः. यथा.

(१) "अतसीपुष्पसंकाशः श्रीवत्सकृतलक्षणः। साक्षाल्लक्ष्म्या इवा-वासः स सदा प्रतिभाति मे" भार०अ० १८८—९६ ।

निर्व०—(२) "ऋदुपधाच्चाक्लृपिचृतेः" ३।१।११०॥कौ०पृ०५६० इति क्यप्.

(३) "शकि लिङ् च" इति,शक्यार्थेऽयम्.३।३।१७२॥कौ०पृ०५५२ क्यप्. किन्त्वान्न गुणः. नञ्समासः. नलोपः इत्यादि. ❀ अथच, अभिगच्छतो मार्कण्डेयादेस्सुग्रहदिव्यविग्रहतया व्यक्तं रूपम् अस्य इति—(व्यक्तरूपः).

(१) "रु, शब्दे" धा०अदा०कौ०पृ० ४३९

(२) "खष्पशिल्प०" इत्यादिना,पप्रत्ययः.उणा०पा०३कौ०पृ०६२६ इडभावः. दीर्घश्च निपातितः.

(३) "अञ्जू, व्यक्ति—म्रक्षण—कान्ति-गतिषु" धा०रुधा०कौ० पृ०४७२

विपूर्वः. क्तः. ऊदित्त्वादिड्विकल्पे,

(४) "यस्य विभाषा" इति,निष्ठायां७।२।१५॥कौ०पृ०५८७ नेट्. यद्वा,

(५) "अञ्जि-घृ-सि-भ्यः क्तः" उणा०पा० ३ कौ०पृ० ६२९

निरु०—३०६ महाजले संचरतो मार्कण्डेयस्य धीमतः ॥ २२८ ॥ दृश्यो यो (व्यक्तरूपः) स्याद्दिव्यविग्रहधारणात् ।

(३०७) सहस्रजित्.

ॐ सहस्रजिते नमः

भा०—(२) "तस्य ताम्रनखौ तात चरणौ सुप्रतिष्ठितौ । सुजात मृदुरक्ताभिरङ्गुलीभिरलंकृतौ ॥ प्रणतेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ" इति. ❀भार०अ०१८८–१३३।

सहस्रयुगसंख्यं कल्पान्तं शयानो जयतीति—
(सहस्रजित्).
(१) "यावद्युगानां विप्रर्षे सहस्रं परिवर्त्तते । तावत् स्वपिमि.. इत्यादि. ❀भार०अ०१८९–४१।

परिमितशिशुरूपस्याप्यस्य कश्चित्, कदाचित्, कथञ्चिदपि, महिमावधिप्रकर्षो नास्तीति—

निर्व०—(६) "तितुत्र०" इति,नेट्,७।२।९॥कौ०पृ०६०८
(७) "अनिदिताम्०" इति,नलोपः,६।४।२४॥कौ०पृ०७६
(८) "चोःकुः" इति,कुत्वेन जस्य गः.८।२।३०॥कौ०पृ०६८
तस्य चर्त्वेन कः. वेरिकारस्य यण्.यकारः. चस्समुच्चये. ❀
शयानोयं सहस्रं सहस्रयुगसंख्यं कल्पान्तं जयतीति—
(सहस्रजित्).
(१) "जि,जये" क्विपि तुक्. अगुणः.धा०भ्वा०कौ०पृ०४०५
व्युत्पादितस्सहस्रशब्दः. ❀
अन्तं—परिमितशिशुरूपस्य— महिमावधिं जयति—अभिभवति- प्रधर्षयति इति—

निरु०—३०७ सहस्रयुगसंख्याकं सर्वकल्पान्तमेव हि ॥२२९॥
शयान एव जयति (सहस्रजिदि)ति स्मृतः ।

१ पर्यन्तम् । २ सहस्रपरिवर्तनम् । ३ प्रधर्षको ।

(३०८)अनन्तजित्,॥श्लो०॥ ३४ ॥ (३०९)इष्टः,(३१०) अविशिष्टः, [ इष्टोऽविशिष्टश्च ]

ॐ अनन्तजिते नमः।ॐ इष्टाय नमः। ॐ अविशिष्टाय नमः।

भा०–( अनन्तजित् ).

(१)"अन्तःशरीरे तस्याहं वर्षाणामधिकं शतम्। न हि पश्यामि तस्या-हमन्तन्देवस्य कर्हिचित्॥आसादयामि नैवान्तं तस्य राजन् महात्मनः" इति. ❀ भा०अ०१२४–१२५।

एवमुदरेण[1] भूतैर्मुख्यैरपि अविशेषेण जनयित्रीव वाञ्छित इति–( इष्टः ). ❀

( अविशिष्टः ).तथा,

निर्व०–( अनन्तजित् ).

स नास्ति कश्चित् कदाचित् कथंचिदपि अस्य इति–(अनन्तजित्).

( १ )"जि,अभिभवे"भाग्वत् प्रत्ययादि.धा०भ्वादिः कौ०पृ०४०५

( २ )" अम,गत्यादिषु"धा० भ्वादिः कौ०पृ०४०१

( ३ )" हसिमृग्रिण्वाऽमिदमिलूपूधूर्विभ्यस्तन्"उणा०पा०३कौ० पृ०६२८इति, तन्.

(४)"तितुत्र०"इति,नेट्.अनुस्वारपरसवर्णौ.७।२।९॥कौ०पृ०६०८ नञ्पूर्वो बहुव्रीहिः. नञो नलोपः. नुट्. ❀

एवमुदरेण भूतैर्मुख्यैरपि, अविशिष्टस्सन्, अविशेषेण इष्टः जनयित्रीव वाञ्छितः इति–( इष्टोऽविशिष्टः ). एकं नाम.

निरु०–३०८मतस्य शिशुरूपस्य कदाचित्कश्चिदेवहि ॥ २३०॥ कथं चिदवधिर्नास्ति महिम्नः परमात्मनः। तस्मा ( दनन्तजिदि ) ति वरवर्णो जयदो मनुः ॥ २३१ ॥

३०९–३१० ( इष्टो ) ( ऽविशिष्टः ) कथितः सर्वरक्षणतत्परः।

---

[1] समुद्रे।

## ( ३११ ) शिष्टेष्टः,

ॐ शिष्टेष्टाय नमः ।

भा०—पण्डिताग्रण्यां मार्कण्डेयादीनां परमपुरुषार्थत्वेन इष्टः—( शिष्टेष्टः ),तत्रैव च,

(१)"सत्त्वस्था निरहंकारा नित्यमध्यात्मकोविदाः । मामेव सततं विप्राश्चिन्तयन्त उपासते " इति, भा०अ०१८९–१३७ ।

( २ ) " आसीनं तं नरव्याघ्रं पश्चात्यमितनेजसम्" इति. ❀ भा०आ०१८८–१२९।

---

निर्व०— (१)"इषु,इच्छायाम्"कः.धा०तुदा० कौ०पृ०४६६

( २ ) " उदितो वा"इति,क्त्वायामिड्विकल्पात्, ७।२।५६॥ कौ०पृ० ६६८

( ३ )" यस्य विभाषा" इति, निष्ठायां ७।२।१५कौ०पृ०५८७ नेट्. कित् क्त्वान्न गुणः. ढुत्वम्. विशेषणे.

(४)"शिष्ऌ,विशेषणे"विपूर्वः. निष्ठान्तं धा०रुधा०कौ०पृ०४७१

पूर्ववत्. निहतत्वान्नेट्. नञ्समासः. ष्टुत्वम्.

सांहितिकं पूर्वरूपम्. ❀

शिष्टानां पण्डिताग्रण्यां मार्कण्डेयादीनाम् इष्टः- परमपुरुषार्थत्वेन अभिमतः इति- ( शिष्टेष्टः ).

( १ ) " इषु,इच्छायाम्"प्राग्वत् धा०तुदा०कौ०पृ०४६६

प्रत्ययादि.

(२)"शिष्ऌ,विशेषणे"तत्रापि, तथा अनुप- धा०रुधा०कौ०पृ०४७१ स्रष्टव्यम्, अनञ्पूर्वत्वं च, विशेषः.

( ३ ) " आद्गुणः" ❀ ६।१।८७॥कौ०पृ०११

---

निरु०-३११मार्कण्डेयद्विजादीनां पण्डितेष्वग्रयायिनाम्॥२३२॥ उत्कृष्टपुरुषार्थत्वेनेष्ट ( शिष्टेष्ट ) उच्यते ।

(३१२) शिखण्डी,

ॐ शिखण्डिने नमः।

भा२—अपरिमिताप्रधृष्यमैश्वर्यं परं तेजश्शिखण्डमस्यातिशयिनमिति— (शिखण्डी).

(१) "अतिशायने०" इति, इनिः. ५।३।५५॥कौ०पृ०३%०

निर्व०—शिखण्डः अपरिमिताप्रधृष्यैश्वर्यपरमतेजःकलापोऽतिशयेनास्यास्तीति—(शिखण्डी).

(१) "अण, शब्दे" धा०भ्वादिः कौ०पृ०४०१

(२) "अम, गत्यादिषु" वा. धा०भ्वादिः कौ०पृ०४०१

(३) "अमन्ताड्डः" इति, डः. उक्तयुक्त्या न, उणा०पा०१कौ० पृ०६१५ ड इत्. इत्थं तत्र तत्र ज्ञेयम्,

(४) "नेड्वशि०" इति, नेट्. अमतेरनुस्वा-७।२।८॥कौ०पृ०५८१ रपरसवर्णौ विशेषः.

(५) "शीङ्, स्वप्ने" धा०अदा० कौ०पृ०४३८

(६) "मुहेः खो मूर्च" इत्यतः खः उणा०पा०५कौ०पृ०६४३ इति वर्तमाने,

(७) "शीङो ह्रस्वश्च" इति. खः, धातोश्च उणा०पा०५कौ०पृ०६४३ ह्रस्वः उक्तयुक्त्या, विधानाद्वा, न, ख इत्. ह्रस्वविधानसामर्थ्यान्न गुणः. बाहुलकात् नेट्. न च,

(८) "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" ७।१।२॥ कौ०पृ०९४

इति, खस्य शङ्क्य ईनादेशः, साहचर्यात् तत्र तद्धितग्रहणात्. एवमन्यत्रापि. ततः स्त्रियामतष्टाप्. दीर्घः.

निरु०— ३१२ अत्यप्रधृष्यमैश्वर्यं परं यत्तेज आस्थितम् ॥२३३॥ तच्छिखण्डन्तु यस्यास्ति त-(च्छिखण्डी) ति चक्षते।

( ३१३ ) नहुषो, ( ३१४ ) वृषः, ।

ॐ नहुषाय नमः । ॐ वृषाय नमः ।

---

भा०—तथा, स्वमायया जीवान् नह्यति बध्नातीति—
( नहुषः ). इति, नैरुक्ताः. यथा,
( १ ) " तस्मिंश्चान्यो मायया सन्निरुद्धः" इति. ❀
स एव अमृतोपमया स्वकान्त्या वाचा च सागरस्योदरगटनश्रान्तमा-
श्वासयन् सिञ्चतीति—( वृषः ).
( १ ) " वृषु, सेचने" यथा, धा० भ्वादिः कौ० पृ० ४१०

---

निर्व०—ततः, शकन्ध्वादित्वात् पररूपम्, एकादेशः. ततो मत्वर्थीय आतिशायनिक इनिः.
( ९ ) " यस्य०" इति. लोपः. ६।४।१४८ कौ० पृ० ५६
(१०) " सौच" इति, इन्नन्तलक्षणो दीर्घः. इत्यादि. ❀ ६।
४।१३ ॥ कौ० पृ० ६४
तथा स्वमायया जीवान् नह्यति—बध्नाति इति—( नहुषः ).
( १ ) " णह, बन्धने" धा० दिवा० कौ० पृ० ४५५
( २ ) " णो नः" ६।१।६५ ॥ कौ० पृ० ३८६
(३) "पृनहिकलिभ्य उपन्" इति. ❀ उणा० पा० ४ कौ० पृ० ६३५
स एवामृतोपमया स्वकान्त्या वाचा च तादृश्या सागरोदरानुभ्रान्तं मार्कण्डेयमाश्वासयन् वर्षति—सिञ्चति इति—( वृषः ).

---

निरु०—३१३ जीवान् स्वमायया नित्यं(नहुषो)नह्यतीति यः॥२३४॥
३१४ सागरस्योदरे नित्यं वसन्नमृतरूपया ।
स्वदेहकान्त्या वाचापि सम्यगाश्वासयन्मुहुः ॥ २३५ ॥
बहुशस्सिञ्चति तु यः ( वृष ) स्स परिपठ्यते ।

## (३१५) क्रोधहा,

ॐ क्रोधघ्ने नमः।

भा०– ( २ ) "ततो मामब्रवीद् बालस्स पद्मनिभलोचनः। श्रीवत्सधारी द्युतिमान् वाक्यं श्रुतिसुखावहम्॥ जानामि त्वां परिश्रान्तन्तदा विभ्रमकाङ्क्षिणम्" इत्यादि. ❀ भा०अ०१८८–९४।

अथ, भार्गवं रामं ध्वनयति त्रिस्सप्तवारं नरपतिनिगमकरं क्रोधं काश्यपप्रार्थनामात्रेण हतवान्—

( क्रोधहा ). ❀

पूर्वं तेभ्यः—

निर्व०–( १ ) "वृषु, सेचने" धा० भ्वादिः कौ०पृ०४१०

( २ ) "नुदादिभ्यो णल्को" इति, कः.

इगुपधलक्षणो वा, अगुणः. ❀

अथ, भार्गवरामो ध्वन्यते क्रोधं एकविंशतिकृत्वो नृपनिरासकरं मन्युं काश्यपप्रार्थनामात्रेण हन्ति स्मेति—

( क्रोधहा ).

( १ ) "हन, हिंसागत्योः" धा०अदा०कौ०पृ०४३५

(२) "ब्रह्मभ्रूण०" इति, उपपदनियम–३।२।८७॥कौ०पृ०५८४ स्य प्रायोभिप्रायत्वात्, क्विप्. सार्वकालिको वा, अन्यथापि वा प्रागुक्तः.

( ३ ) "क्रुध, जिघांसायाम्."

भावे घञ्. गुणः. हलन्तलक्षणो दीर्घ इत्यादि. ❀

पूर्वं तेभ्यः क्रोधं करोति इति—

निरु०–३१५ काश्यपस्य प्रार्थनया यः क्रोधं क्षत्रहानिदम्॥२३६॥ हतवान् ( क्रोधहा ) प्रोक्तः षडर्णः क्रोधनाशकः।

१ बाल ! विश्रान्तकाङ्क्षिणम्।

## (३१६) क्रोधकृत, (३१७) कर्ता, (३१८) विश्वबाहुः.

ॐ क्रोधकृते नमः। ॐ कर्त्रे नमः। ॐ विश्वबाहवे नमः।

भा०—(क्रोधकृत) च. ❋

तथाविधक्रोधहेतोः कार्तवीर्यस्य च्छेत्ता—

(कर्ता), यथा.

(१) "निःक्षत्रियां यश्चकार मेदिनीम्" इति. ❋

एवं, कण्टकोद्धारेण विश्वस्मै बाहू यस्य सः—(विश्वबाहुः). ❋

निर्व०—(क्रोधकृत).

(१) "डुकृञ्. करणे" धा०तना०कौ०पृ०४७३

(२) "सुकर्मपापमन्त्रपुण्येषु कृञः" ३।२।८९॥कौ०पृ०५८४

इति, उपपदनियमाभावात्. अन्यत्रापि उपपदे क्विप्.

(३) "ह्रस्वस्य०" इति. तुक्. अगुणः.६।१।७१॥कौ०पृ०५५१

क्रोधशब्दो व्युत्पादितः. ❋

तथाविधक्रोधहेतुं कार्तवीर्यं कृन्तति— छिनत्ति इति—(कर्ता).

(१) "कृती, छेदने" इदित्. धा०तुदा० कौ०पृ०४७०

(२) "तृन्तृचौ शंसिक्षदादिभ्यस्संज्ञायां चानिटौ" उणा०पा०२

कौ०पृ०६२३ इति. तृच्. स चानिट्. गुणः रपरः.

(३) "झरो झरि सवर्णे" इति, ८।४।६५॥कौ०पृ०११

पाक्षिकः प्रथमतलोपः. अनङादि. ❋

एवं, कण्टकोद्धारेण विश्वस्मै सर्वस्मै बाहू— भुजौ अस्य इति—

(विश्वबाहुः).

निरु०—३१६(क्रोधकृत)क्षत्रियेभ्यो यः पूर्वं क्रोधं करोति सः॥२३७॥

३१७ कृद्धेतोः कार्तवीर्यस्य च्छेत्ता (कर्तेति) शब्द्यते।

३१८ विश्वस्मै बाहू यस्येति (विश्वबाहुः) प्रकीर्तितः॥२३८॥

## (३१९) महीधरः ॥

ॐ महीधराय नमः

भा०—एवं, भारावतरणेन महीं धत्ते इति—( महीधरः ).

(१) " च्यवनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु । यस्मान्न च्यवने स्थानात् तस्मात्संकीर्त्यसे( ऽच्युतः )" इति. ❀

ब्रह्मादिसाधर्म्येणावतारेपि स्वैश्वर्यप्रच्युतिवैधर्म्याद्—

निर्व०—( १ ) " वाधृ, विलोडने" धा०भ्वादिः कौ०पृ० ३८२

( २ ) " कुर्भश्च" इति प्रकरणे, उणा०पा० १ कौ०पृ०६१०

( ३ ) " अजिदृशिकम्यमिपंसिबाधामृजिपशितृक्षुगृदीर्घहकाररश्च" इति, कुः. धकारस्य हका—उणा०पा०१ कौ०पृ०६१०

रश्च. विश्वशब्दो व्युत्पादितः. ❀

इत्थं भारावतरणेन महीं भरति इति—

( महीधरः ).

( १ ) " धृञ्, धारणे" पचाद्यच्. गुणो रपरः, धा०भ्वादिः कौ० पृ० ४२३

( २ ) " मह, पूजायाम्" भावदच्. स्त्रियाम्, धा०भ्वादिः कौ० पृ० ४११

( ३ ) " षिद्गौरादिभ्यश्च " इति गौरादि- ४।१।४१॥कौ०पृ०९८ त्वात्, ङीष्, गसंज्ञायाम्.

(४)"यस्य०" इति, लोपः. षष्ठ्या विग्रहः६।४।१४८॥कौ०पृ० ५६ कार्यः. तद्बीजं चोक्तमेव. ❀

ब्रह्मादिसाधर्म्येणावतारेपि स्वैश्वर्यप्रच्युतिवैधर्म्यात् तद्वच्च्युतः च्यवनधर्मा न इति—

निरु०—३१९ भारावतरणं कृत्वा गां धत्ते स ( महीधरः )।

श्लो० ॥ ३५ ॥ {३२० / १०१} अच्युतः, (६२१) प्रथितः,

ॐ अच्युताय नमः । ॐ प्रथिताय नमः ।

ज्ञा०—(अच्युतः). ❀
तथात्वेन प्रसिद्धः—
(प्रथितः). यथा,
(१) "तस्य नाम महद्यशः" तै० २-१-९।
(२) "यशश्चैकभाजनम्" ❀ रा०।
तत्रोपजीविनां जीवितरूपत्वात्—

निर्व०—(अच्युतः).
(१) "च्युङ्, गतौ" धा० भ्वादिः कौ० पृ० ४२७
(२) "गत्यर्थ०" इत्यादिना कर्तरि क्तः. ३।४।७२॥ कौ० पृ० ५९६
अनिट्. कित्त्वादगुणः. नञ्समासः. नञो नलोपः. ❀
तथात्वेन प्रथने प्रसिद्धो भवति इति—(प्रथितः).
(१) "प्रथ, प्रख्याने" प्रागुक्तसूत्रेणाऽकर्मकात्, कर्तरि क्तः.
धा० भ्वादिः कौ० पृ० ४१४
(२) "आर्धधातुकस्येड्वलादेः" इति, इट्. ७।२।३५॥ कौ० पृ० २७०
तत्रोपजीविनां जीवितरूपतया प्राणिति अस्मादुपजीवि-जातम् इति-

निरु०— ३२० च्यवनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु॥ २३९ ॥
यस्मान्न च्यवते स्थानात् तस्मात्संकीर्त्यते (ऽच्युतः)।
सावर्ण्येणावतारेऽपि ब्रह्मेन्द्रवरुणादिभिः ॥ २४० ॥
न स्वैश्वर्यात्प्रच्युतो यः सो (ऽच्युतः) परिकीर्तितः ।
३२१ अच्युतत्वेन लोकेऽस्मिन् प्रख्यातः (प्रथितः) स्मृतः॥ २४१ ॥

{३२२ / ६७} प्राणः, {३२३ / ६६} प्राणदो,

---

ॐ प्राणाय नमः । ॐ प्राणदाय नमः ।

---

भा०—( प्राणः ).

(१) "प्राणोस्मि प्रज्ञात्मा तन्मामायुरमृतमित्युपास्व" कौषी०।

(२) "अमृतं देवानामायुः प्रजानाम्"

(३) "प्राणस्तथानुगमात्" इति. ❋ ब्र० १–१–२९।

अथ, कूर्ममूर्तिं सूचयति—( प्राणदः ). मरुताम्मथनोचितबलप्रदः.

(१) "अनन्तबलशक्तयः" इति, तन्मन्त्रवर्णात्. ❋

---

निर्व०—( प्राणः ).

(१) "अन, प्राणने" प्रपूर्वः. धा०अदा० कौ०पृ०४४६

(२) "अकर्तरि च कारके०" इति, अपादाने ३।३।१९॥ कौ० पृ०६४७ घञ्. करणत्वविवक्षायां, घापवादः.

(३) "हलश्च" इति वा, उपधावृद्धिः.दीर्घः.३।३।१२१॥कौ०पृ०६६३

(४) "पूर्वपदात् संज्ञायाम्०"इति,णत्वम्.८।४।३॥कौ०पृ०१६७

(५) "अनितेः" इत्यस्यासिद्धत्वादित्युक्तमेव. ८।४।१९॥ कौ०पृ०४४६

अथ, कूर्ममूर्तिस्सूच्यते मन्त्रवर्णानुरोधेन प्राणं मरुतां मथनोचितं बलं ददाति इति—( प्राणदः ).

(१) "डुदाञ्, दाने" धा०जुहो० कौ०पृ०४५१

(२) "आतोनुपसर्गे कः" इति, कः.३।२।३॥कौ०पृ०५७०

आल्लोपः. व्युत्पादि हि प्राणशब्दः. ❋

---

निरु०—३२२ पुंसां जीवितरूपत्वात् ( प्राण ) इत्यभिधीयते ।
३२३ मरुतां बलदानाद्धि समुद्रमथने भृशम् ॥ २४२ ॥
( प्राणद ) श्च समुद्दिष्टः कूर्मरूपतया हि सः ।

(३२४) वासवानुजः, । (३२५) अपान्निधिर्,

ॐ वासवानुजाय नमः । ॐ अपान्निधये नमः ।

भा०— अमृतार्थिनं वासवमनु तत्कर्मविधानाय जात इति—
(वासवानुजः).

(१) "अनौ कर्मणि" इति, डः. ❀ ३।२।१००॥कौ०पृ०५८५

मथ्यमानमहार्णवधारणात्—(अपान्निधिः). ❀

निर्व०— अमृतार्थिनं वासवमनु, तत्कर्मविधानाय जात इति—
(वासवानुजः).

(१) "जनी, प्रादुर्भावे" अनुपूर्वः. धा०दिवा० कौ०पृ०४५४
जनेरिति वर्तमाने,

(२) "अनौ कर्मणि" इति, डः. णिलोपः. ३।२।१००॥कौ०पृ०५८५

(३) "वस, निवासे" धा०भ्वादिः कौ०पृ०४३२

(४) "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च"
इति, डः. इत्थं निष्पन्नाद्वसुशब्दात्, उणा०पा०१ कौ०पृ०६०९
अणुचेति वर्तमाने,

(५) "ज्योत्स्नादिभ्य उपसंख्यानम्" वार्ति०५।२।१०३॥
कौ०पृ०३२८

इति, मत्वर्थे अण्. आदिवृद्धिः. गुणवादेशौ. ततस्सवर्णदीर्घः. ❀
मथ्यमानमहार्णवधारणात् अपां— जलबाहुल्यात्, समुद्रस्य
निधिः— स्थानम् इति—
(अपान्निधिः). भिन्नं पदम्.

(१) "डुधाञ्, धारणपोषणयोः" धा०जुहो०कौ०पृ०४५१
निपूर्वः. घुसंज्ञायाम्,

---

निरु०—३२४ वासवस्यानुजत्वेन जातत्वाद् (वासवानुजः)॥२४३॥
३२५ (अपान्निधि) र्मथ्यमानमहार्णवविधारणात् ।

## ( ३२६ ) अधिष्ठानम्,

ॐ अधिष्ठानाय नमः ।

भा०–( १ ) " मन्दराद्रे ( रधिष्ठानं ) भ्रमतोऽभून्महामुने" ! इति– ( अधिष्ठानम् ).

निर्व०–(२)"उपसर्गे घोः किः" इति, किः. ३।३।९२॥कौ०पृ०६५८ आल्लोपः. प्राक्तने तु पदे,

( ३ ) " आप्लृ, व्याप्तौ" धा०स्वादिः कौ०पृ०४६२

( ४ ) " क्विब्वचि०" इत्यनः क्विबिति वर्तमाने,उणा०पा०२कौ० पृ०६२१

( ५ ) " आप्नोतेर्ह्रस्वश्च" इति, क्विप्. उणा०पा०२कौ०पृ०६२१ आकारस्य ह्रस्वश्च. तत आप्. संहितायाम्,

( ६ ) " यरोनुनासिकेनुनासिको वा" इति,८।४।४५॥कौ०पृ०१९ पाक्षिकोऽनुनासिकः. ❋

मन्दरोनधिष्ठानतया भ्रमन्,सोयमधितिष्ठति अस्मिन् इति-(अधिष्ठानम्).

( १ ) " ष्ठा, गतिनिवृत्तौ" अधिपूर्वः. धा०भ्वादिः कौ०पृ० ४२४ षस्सः. टवर्गस्तवर्गजः.

( २ ) " करणाधिकरणयोश्च" इति, अधिकरणे, ल्युट्. योरनः. दीर्घः. ३।३।११७॥कौ०पृ० ६६२

( ३ ) " आदेशप्रत्यययोः " इत्यौत्सर्गिकस्य षत्वस्य. ८।३।५९॥ कौ०पृ०३४

( ४ )"सात्पदाद्योः"इति,निषेधे प्राप्ते, ८।३।१११॥कौ०पृ०३५८

( ५ ) "उपसर्गात्–सुनोति–सुवति–स्यति–स्तौति–स्तोभति–स्था–सेनय–सेध–सिच–सञ्ज–स्वञ्जाम्" इति, षः. ष्टुत्वम्. ८।३।६५॥ कौ०पृ०३८४

निरु०–३२६ भ्रममाणं मन्दराद्रिं धृतवान् यो महाजले ॥२४४॥
( अधिष्ठानं ) तमेवाहुरधिष्ठानमदो मनुः ।

## (३२७) अप्रमत्तः, (३२८) प्रतिष्ठितः, ॥

## ॐ अप्रमत्ताय नमः । ॐ प्रतिष्ठिताय नमः ।

भा०—एवंविधानां त्राणेषु—
(अप्रमत्तः). अत्यन्तमवहितः. ❋
स्वयमन्यानपेक्षया स्वे महिम्नि—(प्रतिष्ठितः).
(१) "स भगवः क्व प्रतिष्ठित" इति, छा०उ० ७—२४—१।
(२) "स्वे महिम्नि" इति, छा०उ०७—२४—१।
(३) "स्वे महिम्नि स्थितं देवम्" इतिच. ❋ वि० ।

निर्व०—"लिङ्गमशिष्यम्" इत्यादि. ❋ ॥ महाभाष्ये ॥
एवंविधानां संत्राणे सावधानतया, प्रमत्तोऽनवहितो न इति—
(अप्रमत्तः).
(१) "मदी, हर्षे" प्रपूर्वः. ईदित्. धा०दिवा०कौ०पृ०४५९
(२) "गत्यर्थ०" इत्यादिना अकर्मकात्, ३।४।७२॥कौ०पृ०५१६१९
कर्तरि क्तः.
(३) "श्वीदितो निष्ठायाम्" इतीण्णिषेधः, ७।२।१४॥कौ०पृ० ५८१
(४) "रदाभ्याम्०" इति, निष्ठानत्वं प्राप्तम्, ८।२।४२॥कौ०पृ०५८६
(५) "न ध्याख्यापॄमूर्छिमदाम्" इति, ८।२।५७॥कौ०पृ०५८९
प्रतिषिध्यते. चर्त्वम्. नञ्समासः. नलोपः. ❋
स्वयमन्यानपेक्षया, स्वे महिम्नि सुस्थितः इति—
(प्रतिष्ठितः).
(१) "ष्ठा, गतिनिवृत्तौ" धा०भ्वादिः कौ०पृ० ४२४
प्रतिपूर्वः. षत्त्वः. टवर्गस्तवर्गजः.

निरु०—३२७ अत्यन्तावहितप्राणे(ह्यप्रमत्तः)प्रकीर्तितः॥२४५॥
(३२८) स्वे महिम्नि स्थितो यस्तु स (प्रतिष्ठित) उच्यते ।

श्लो० ॥ ३६ ॥ ( ३२९ ) स्कन्दः, ( ३३० ) स्कन्दधरो,

ॐ स्कन्दाय नमः । ॐ स्कन्दधराय नमः ।

भा०—स्वयमसुरादीन् स्कन्दयति शोषयतीति—( स्कन्दः ). ❀
तादृशं सुरसेनान्यमपि धरत इति—
( स्कन्दधरः ). सोपि हि. तस्य विभूतिः.
( १ ) "सेनानीनामहं स्कन्दः" इति. ❀ गी० १०—२४ ।
( १ ) "भुवनभृत" इति, तन्मन्त्रवर्णात्—

निर्व०—( २ ) " गत्यर्थाकर्मकश्लिषशीङ्स्थास०" ३।४।७२॥
कौ०पृ० ५९६
इत्यादिना कर्तरि क्तः. अनिट्.
( ३ ) " द्यति—स्यति—मा—स्थामित्ति किति" इति, ७।४।४० ॥
कौ०पृ० ५९४
नादौ किति आत इत्त्वम्. कित्त्वान्न गुणः.
(४) "उपसर्गात् सुनोति०" इत्यादिना षः ८।३।६५ कौ०पृ० ३८४
ष्टुत्वम्. स्वयमसुरादीन् स्कन्दयति—शोषयतीति—( स्कन्दः ).
( १ )"स्कन्दिर्, गतिशोषणयोः" इति. धा० भ्वादिः कौ०पृ० ४२९
णिच्. ततः पचाद्यच्. णिलोपः. ❀
तादृशसुरसेनान्यं स्कन्दं गुहमपि विभूतितया धरतीति—( स्कन्दधरः )
( १ ) "धृञ्, धारणे" धा० भ्वादिः कौ०पृ० ४२३
कर्मणः शेषत्वविवक्षायां पचाद्यच्. गुणोरपरः. स्कन्दशब्दो
व्युत्पादितः. ❀
मन्त्रवर्णात्—

निरु०—३२९ असुरादीन् शोषयति(स्कन्दः)स्कन्दयतीति यः।२४६।
३३० स ( स्कन्दधर ) आख्यातः षडाननविधारणात् ।

( ३३१ ) धुर्यः, ( ३३२ ) वरदो,

**ॐ धुर्याय नमः । ॐ वरदाय नमः ।**

भा०—( धुर्यः ).

( १ ) " धुरो यड्ढकौ " इति, यत्. ॐ ४।४।७७॥कौ०पृ०२८७

अन्येभ्योऽपि लोककार्यधुरंधरेभ्यो देवेभ्यः तांस्तान् वरान् ददातीति–( वरदः ). ॐ

निरु०—धुरं भुवनभारं वहतीति–( धुर्यः ).

( १ ) "धुर्वीत्ययं हिंसाकर्मा" ततो, भ्वा०धातुः कौ०पृ०४०५

( २ ) " भ्राज–भास–धुर्वि–द्युतोर्जि–पॄ–जुग्रावस्तुवः–क्विप् " ३।२।१७७॥कौ०पृ०६०७

इति, क्विप् , तल्लोपः.

( ३ ) " राल्लोपः " इति, वलोपः. एवंनिष्पन्नात्, ६।४।२१॥ कौ०पृ० ५११

धुर्शब्दात्,

( ४ ) " तद्वहति० " इत्यधिकारे ४।४।७६॥ कौ०पृ० २८७

( ५ ) " धुरो यड्ढकौ " इति, यत्. ४।४।७७॥ कौ०पृ० २८७

( ६ ) "हलि च " इति उपधाया इको दीर्घे प्राप्ते, ८।२।७७॥कौ०पृ० ६३

( ७ ) " यचि भम् " इति, भसंज्ञायाम् १।४।१८॥कौ०पृ०३८

( ८ ) " न भकुर्छुराम् " इति, तन्निषेधः. ८।२।७९॥कौ०पृ०२८७

अपरेभ्योऽपि भुवनकर्मधुरंधरेभ्यो देवेभ्यः तांस्तान् वरान् ददातीति–( वरदः ).

( १ ) " डुदाञ् , दाने " धा०जुहो० कौ०पृ० ४५१

निरु०—३३१ भुवनं धृतवान् ( धुर्यो )

३३२ ( वरदो )ऽभीष्टदः स्मृतः ॥ २४७ ॥

(३३३) वायुवाहनः, ।

ॐ वायुवाहनाय नमः ।

भा०— तद्यथा—

(वायुवाहनः)— जगत्प्राणं वायुं वाहयतीति. ❋

अथ, द्विषट्काध्यात्मविषयः—

निर्व०—(२) "आतोऽनुपसर्गे कः" इति. कः. आतो लोपः. ३।२।३॥ कौ० पृ० ५७०

(३) "वृञ्, वरणे" धा० स्वादिः कौ० पृ० ४६२

(४) "अकर्तरि च कारके०" अप् इत्यनुवृत्तौ, ३।३।१९॥ कौ० पृ० ६४७

(५) "ग्रहवृदृनिश्चिगमश्च" ३।३।५८॥ कौ० पृ० ६५३ इत्यप्. गुणो रपरः. ❋

तद्यथा, वायुं— जगत्प्राणं वाहयति-वहनधर्माणं करोतीति— (वायुवाहनः).

(१) "वह, प्रापणे" णिच्. धा० भ्वादिः कौ० पृ० ४३२ वृद्धिः. ल्युः. ल्युट्वा. बाहुलकात्, इत्यादि. अनः. णिलोपः.

(२) "वा, गतिगन्धनयोः" धा० अदा० कौ० पृ० ४४३

(३) "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इत्युण्. उणा० पा० १ कौ० पृ० ६०९

(४) "आतो युक् चिण्कृतोः" इति, ७।३।३३॥ कौ० पृ० ५३९ णिति कृति धातोर्युक्. ❋

अथ, द्विषट्काध्यात्मविषयः आर्षनिरुक्तानुसारात् (वासुः) विश्वम्— आवासयन्, आच्छादयन्, वसन्, वासाधिकरणभूतश्चासौ (देवः) क्रीडन्, विजिगीषमाणः, द्योतमानः गच्छंश्चेति —

निरु०—३३३ जगत्प्राणं वहति यो (वायुवाहन) उच्यते ।

{३३४ / ७०१} वासुदेवो,

ॐ वासुदेवाय नमः ।

भा०– ( वासुदेवः )-वासुश्चासौ देवश्चेति. विश्वं स्वस्मिन् सवित्रीव वासयन्, पक्षाभ्यामिवाच्छादयंश्च, तस्मिन् वसतीति–वासुः. एवं क्रीडति, विजिगीषते, अथ च द्योतते, स्तूयते, गच्छति, चेति ( देवः ) अतो ( वासुदेवः ); निरुक्तश्च क्रमयः.

( १ ) "छादयामि जगत्सर्वं भूत्वा सूर्य इवांशुभिः । सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः " आ०मो०१६६।

निर्व०– ( वासुदेवः ).

( १ ) " दिवु, क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु " धा०दिवा० कौ०पृ०४५२

(२)"इगुपधज्ञा-प्री-किरः कः" इति, ३।१।१३५॥कौ०पृ०५६७ कापवादः पचादिपाठादच्, लघूपधगुणः.

( ३ ) "वस, निवासे" धा०भ्वादिः कौ०पृ०४३२

(४) "वस, आच्छादने च" णिच्,वृद्धिः.धा०अदा०कौ०पृ०४३८

( ५ )"भृमृशीङ्०"इत्यत्र चकारात्.उणा०पा०१कौ०पृ०६०९ बाहुलकात् वा. उः, णिलोपः.

( ६ ) " वस. निवासे" इति शुद्धाद्वा.धा०भ्वादिः कौ०पृ०४३२ बाहुलकात् उण्– कर्तर्यधिकरणे वा. उपधावृद्धिः.

निरु०–३३४ सर्वभूतान् वासयति वासुस्स परिकीर्तितः ॥ २४८ ॥ दिवुधातोरपि क्रीडाद्यर्थकत्वाद्विशेषतः । वासुश्चासौ देवश्चेति ( वासुदेवः ) प्रकीर्तितः ॥ २४९ ॥ सर्वभूतेष्वपि वसन् स्वस्मिन् भूतानि वासयन् । यः क्रीडति मुदा यद्वा ( वासुदेव ) स्स उच्यते ॥ २५० ॥ सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततस्स ( वासुदेवे ) ति विद्वद्भिः परिपठ्यते ॥ २५१ ॥

(३३५) बृहद्भानुः

ॐ बृहद्भानवे नमः ।

भा०—(२) "वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः । वासुदेवस्ततो ज्ञेयः सर्वेषामपि पठ्यते" भा० उ० ६८—३।

(३) "सर्वत्रासौ समस्तश्च वसत्यत्रेति वै यतः । ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते" इति, सर्वशास्त्रे. वि० १—२—१२।

गुह्यमिति, नातिव्यज्यते. ❀

तदेव व्याचिकीर्षति. तत्र यद्भोगविभूत्या द्योतमानत्वं तदाह-

(बृहद्भानुः)-बृहन्तो भानवो नित्यदीप्ताः अस्येति. ❀

निर्व०— यदा तु तत्रापि निरुक्तस्वातन्त्र्यम्. तदा न कोप्ययं यत्नः अन्यच्चाप्येवमूह्यम्. एवं निरुक्तप्रदेशे सर्वत्रापि. न्यरूपि चेदं प्रागेव. अन्यदप्यत्र वक्तव्यं सर्वशास्त्रगुह्यमिति. नातिव्यज्यते. ❀

तदेवव्याचिकीर्षति. तत्र धात्वर्थनिर्देशक्रमाविवक्षया यद् भोगविभूत्या द्योतमानत्वं तत् तावदुच्यते. बृहन्तो महान्तो विश्वदीप्ताः भानवः—किरणाः अस्येति—

(बृहद्भानुः).

(१) "भा, दीप्तौ" धा० अदा० कौ० पृ० ४४३

(२) "दा-भाभ्यां नुः" इति,नुः.अनिट्.उणा० पा० ३ कौ० पृ० ६२६

(३) "बृह बृहि, वृद्धौ" धा० भ्वादिः कौ० पृ० ४११

(४) "वर्तमाने पृषद् बृहन् महज्जगच्छतृवच्च" उणा० पा० ३ कौ० पृ० ६२२

इति, अतिप्रत्ययान्तो निपात्यते.

शतृवत् कार्यभाक् च भवति. तेनोगित्कार्यं गुणाभावश्च निपातनात्; बृहेरिदित्त्वान्नुमो नलोपोपि. जश्त्वम्. ❀

निरु०—३३५ बृहन्तो भानवो यस्य स (बृहद्भानु) रुच्यते ।

(३३६) आदिदेवः, (३३७) पुरन्दरः, ॥

ॐ आदिदेवाय नमः । ॐ पुरन्दराय नमः ।

भा०—यदवरविभूत्या क्रीडति; तदाह—

( आदिदेवः ); यथा.

(१)"संयोज्य वियोज्याऽयं कामकारकरः प्रभुः । क्रीडते भगवान्" अ० ३०—४० ।

( २ ) " अक्षमयोऽनिर्वाच्यश्च यत्र तत्तत्को हरी । सोऽयं भगवान् विष्णुर्बालः क्रीडनकैरिव" आ०म० ६२—३४।

छादनात् यत् असद्बाधनिवारणं तदाह चतुर्भिः. असुरपुराणि दारयतीति—

( पुरन्दरः ).

निर्व०— अथ, यदवरविभून्या क्रीडनं तदुच्यते. संयोज्य वियोज्य च,कामकारकरणतया, आदिः-प्रथमबीजभूतश्चासौ देवः क्रीडंश्चेति ( आदिदेवः ).

( १ ) " दिवु, क्रीडादौ" धा० दिवा० कौ० पृ० ४५२

पचाद्यच्. गुणः. आदिशब्दो व्युत्पादितः.

छादनाद्यत् बाधनिवारणं तदुच्यते चतुर्भिः. पुराणि असुरपुराणि तदुपलक्ष्याणि आधिदैविकानि असुरपिशाचाशनिग्रहादिभयानि तानि दारयति— भेदयति इति—

( पुरन्दरः ).

( १ ) " दॄ,विदारणे"णिच्. वृद्धिः. धा०क्र्यादिः कौ० पृ० ४७६ रपरत्वम्.

निरु०—३३६ यः क्रीडती (त्यादिदेवः)सादात्मकविभूतिभिः ॥२५२॥ ३३७ ( पुरन्दर ) इति ख्यातस्त्रिपुराणां विदारणात् ।

## श्लो० ॥ ३७ ॥ ( ३३८ ) अशोकः,

### ॐ अशोकाय नमः ।

गा०—( १ ) " वाचंयमपुरन्दरौ च " इति, निपातितः.६।३।६९॥ कौ०पृ०५७७

असुरपिशाचाऽशनिग्रहाद्याधिदैविकभयहरणप्रदर्शनमेतत्. ❀ आध्यात्मिकानां शोकमोहाशनायादीनां विरोधी—( अशोकः ). ❀

निर्व०—( २ )"पॄ,पालनपूरणयोः"धा०क्र्यादिः का०पृ०४७६

( ३ )"भ्राज भास०"इत्यादिना क्विप्.३।२।१७७॥कौ०पृ०६०७

( ४ )"उदोष्ठ्यपूर्वस्य" इति, किति ७।१।१०२॥कौ०पृ०४४९

ऋतः उत्त्वं. रपरत्वम्. अगुणः. एवं निष्पन्ने पूर्युपपदे,

( ५ )"पूःसर्वयोर्दारिसहोः" ३।२।४१॥कौ०पृ०५७७

इति, दारेः खच्.

( ६ ) "खचि ह्रस्वः" इति, खच्परे णौ.६।४।९४॥कौ०पृ०५७७

उपधाह्रस्वः. णिलोपः.

(७)"वाचंयमपुरन्दरौ च" इति,व्युत्पा—६।३।६९॥कौ०पृ०५७७

दितस्य पुरोऽमन्तत्वं निपात्यते. अनुस्वारपरसवर्णौ. ❀ शोकस्य तदुपलक्ष्याणामाध्यात्मिकानां शोकमोहाशनायादीनां विरोधीति—( अशोकः ).

( १ ) " शुच, शोके" धा०भ्वादिः कौ०पृ०३९०

( २ ) " ईशुचिर्, पूतीभावे" वा, धा०दिवा० कौ०पृ०४५५

पूतीभावः क्लेदः. भावे घञ्. गुणः.

(३)"चजोः०"इति, कुत्वम् कः,विरोधार्थे७।३।५२॥कौ०पृ०५६०

नञ्. तत्पुरुषः. नञो नलोपः.

निरु०—३३८(अशोकः) शोकमोहादिनाशकः पङ्क्तीर्तिनः॥२५३॥

(३३९) तारणम्, {३४० / ९६८} तारः, {३४१ / ६५१} शूरः,

ॐ तारणाय नमः । ॐ ताराय नमः । ॐ शूराय नमः ।

भा०—आधिभौतिकेभ्यश्च वैरिचोरव्याध्यादिभयेभ्यस्तारयतीति— (तारणः). ❀

सन्निधानाच्च सर्वसंसारभयात्तारयतीति— (तारः). अथर्वशिरसि,

(१) "गर्भजन्मजरामरणसंसारमहाभयात्तारयतीति तस्मादुच्यते तारः" इति. अ० ।

(२) "अपहतपाप्मा विजरः" छा० ८-१-५ ।

इत्यादिका च श्रुतिरेतत्प्रकरणप्रवणा. ❀

यद्विजिगीषुत्वम्; तदाह शूर इति— (शूरः). समर्थो जैत्रः.

निर्व०—आधिभौतिकेभ्यश्च वैरिचोरव्याघ्रादिभयेभ्यः तारयतीति— (तारणः).

(१) "तॄ, प्लवनतरणयोः" णिच्. धा० भ्वादिः कौ० पृ० ४२७

(२) "अचो ञ्णिति" इति, वृद्धिः. रपरत्वम्. ७।२।११५॥ कौ० पृ० ४२

नन्द्यादिल्युः; ल्युड्वा. बाहुलकादित्यादि. योरनः. णेर्लोपः.

(३) "अट्कुप्वाङ्०" इति णत्वम्. ❀ ८।४।२॥ कौ० पृ० ३२

सन्निधानाच्च सर्वसंसारभयात्तारयतीति— (तारः). पूर्ववत् धातुः. णिच्. वृद्धिः. रपरत्वम्. पचाद्यच्. णिलोपः. ❀

यद्विजिगीषुत्वम्; तदुच्यते. शूरः समर्थः जैत्र इति— (शूरः).

निरु०—३३९ य (स्तारण) स्तारयति वैरिव्याध्यादिभीतितः ।
३४० (तारः) संसारभयतो नित्यं तारयतीति सः ॥ २५४ ॥
३४१ विजिगीषुतया जैत्रः समर्थः (शूर) उच्यते ।

{३४२ / ६९०} शौरिः,

ॐ शौरये नमः।

भा०—(१) "शु, गतौ" ॥सौत्रोयम्॥ कौ०पृ०
(२) "शुसिचिमीनां दीर्घश्च" इति,उणा०पा०२कौ०पृ०६२०
क्रन्प्रत्ययो दीर्घश्च. ❀
यद्विशेषतो भक्तान् गच्छति तत्प्रदर्शयति—
(शौरिः)— शूरस्य वसुदेवस्यापत्यम्.
(१) "अत इञ्" ❀४।१।९५॥कौ०पृ०२०९

निर्व०—(१) "शु, गतौ" ॥सौत्रोयं धातुः॥ कौ०पृ०
(२) "सु-सूधा-गृधिभ्यः क्रन्" उणा०पा०२कौ०पृ०६२०
इति वर्तमाने,
(३) "शुसिचिमीनां दीर्घश्च" उणा०पा०२कौ०पृ०६२०
इति क्रन्. धातोश्च दीर्घः. अनिट्. ❀
यद्विशेषतो भक्तान्प्रति गमनं तत्प्रदर्श्यते
शूरस्य वसुदेवस्य अपत्यमिति— .
(शौरिः).
(१) "शु, गतौ" प्राग्वदेव सर्वम् ॥सौत्रोयं धातुः॥ कौ०पृ०
एवं निर्व्यूढाच्छूरशब्दात्,
(२) "अत इञ्" तदपवादे च, ४।१।९५॥कौ०पृ०२०९
(३) "ऋष्यन्धकवृष्णिकुरुभ्यश्च" ४।१।११४॥कौ०पृ०२१३
इति, वृष्णिलक्षणेऽणि प्राप्ते, तदपवादो,
(४) "बाह्वादिभ्यश्च" इति, बाह्वादेरा-४।१।९६॥ कौ०पृ०२०९
कृतिगणत्वात् इञ्. असंज्ञायाम्,
(५) "यस्य०" इति, लोपः.६।४।१४८॥कौ०पृ०५६

निरु०—३४२ शूरस्य वसुदेवस्य योऽपत्यं (शौरि)रुच्यते ॥२५५॥

( ३४३ ) जनेश्वरः, । ( ३४४ ) अनुकूलः,

ॐ जनेश्वराय नमः । ॐ अनुकूलाय नमः ।

भा०—एवं सर्वसंप्लावनोज्ज्वलैश्वर्यमहौघः—

( जनेश्वरः ). ❀

अथ च, निसर्गमहत्त्वेन विस्मयमदमानवर्जनादनुद्रेलः—

( अनुकूलः )—कूलमनुवर्तत इति; यथा.

( १ ) " वीर्यवान्न च वीर्येण महता स्वेन विस्मितः"

भक्तभव्यो वा—

( अनुकूलः ).

निरु०—( ६ ) "तद्धितेष्वचामादेः" ७।२।११७।कौ०पृ०२०४

इति, आदिवृद्धिरैकारः. ❀

एवं सर्वसंप्लवनोज्ज्वलैश्वर्यमहौघतया, जनानाम् ईश्वरः इति—

( जनेश्वरः ).

( १ ) "ईश,ऐश्वर्ये" धा०अदा०कौ०पृ०४३८

( २ ) " स्थेशभास०"इत्यादिना.३।२।१७५।।कौ०पृ०६०६

वरच् प्रत्यय इत्यादि.

( ३ ) " जनी,प्रादुर्भावे"धा०दिवा०कौ०पृ०४७४

पचाद्यच्. सांहितिको गुणः. ❀

अथ च, नैसर्गिकमहत्त्वेन, विस्मयमदमानवर्जनात् अनुद्वेलतया,

अनुकूलः— कूलमनुवर्तमान इति वा, भक्तभव्य इति वा,—

( अनुकूलः ).

निरु०—३४३प्लवनोज्ज्वलैश्वर्यमहौघस्त्वा ( जनेश्वरः )।

३४४ स्वभावतो महत्त्वेऽपि मदविस्मयवर्जनात् ॥ २५६ ॥

भक्तैकप्रवणो नित्यम् ( अनुकूल ) इति स्मृतः ।

१ संप्लवनो ।

## (३४५) शतावर्तः,

ॐ शतावर्ताय नमः ।

भा०—(१) " हस्तावलम्बको ह्येको भक्तिक्रीतो जनार्दनः "
(२) "यदि शक्नोषि गच्छ त्वमतिचञ्चलचेष्टित" वि० पु० ५६-१५।
इत्यादि. ❀

तथा,

(शतावर्तः)— शतमावर्ता अस्येति. आवर्तशब्देनैश्वर्यविजृम्भितानि लक्ष्यन्ते. अतिवेलमप्यनुवेलीक्रियमाणनिदर्शनैश्वर्यं संकटगतिक्षोभसमुद्भवत्सरिदावर्तवत् विजृम्भते. एवम्.

निर्व०—(१) " कूल, आवरणे " धा० भ्वादिः कौ० पृ० ४०४
इगुपधलक्षणः कः. अनुपूर्वो गतिसमासः. तत्पुरुषः.
(२) " परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः " २।४।२६॥ कौ० पृ० १५६
इति, परवल्लिङ्गतायां प्राप्तायाम्,
(३) " द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः " २।४।२६॥
कौ० पृ० १५६
इति, तन्निषेधः. ❀

तथा शतम्, आवर्तविशेषाः अतिवेलत्वेप्यनुवेलीक्रियमाणतया संकटगतिक्षोभसमुद्भवत्सरिदावर्तवत् तद्दुपलक्ष्याण्यैश्वर्यविजृम्भितानि, अस्येति—
(शतावर्तः).
(१) " वृतु, वर्तने " आङ्पूर्वः. धा० भ्वादिः कौ० पृ० ४१२
भावे घञ्. लघूपधगुणः रपरः.
(२) " दृश, दर्शने " धा० भ्वादिः कौ० पृ० ४३१

निरु०—३४५ ऐश्वर्यजृम्भिताभिख्या आवर्ता यस्य नित्यशः॥ २५७॥
शतं सन्ति (शतावर्तो) वरवर्णो भुक्तिमुक्तिदः ।

( ३४६ ) पद्मी,

ॐ पद्मिने नमः ।

ना०—( १ ) "शान्तोदितविज्ञानमाणाय" इति परमन्त्रालिङ्गसमर्थितम्. ❀

एवं वासुदेवत्वं गुणतो विवृत्य, रूपतोपि विव्रियते. लीलापद्मेन नित्ययोगात्—

( पद्मी ). ❀

निर्व०—( ३ ) " कनिन्युवृषि० " उणा०पा०१कौ०पृ०६१८ इत्यतः कनिन्निति वर्तमाने,

( ४ ) " तुदंशेर्गुणश्च " इति, कनिन्.

( ५ ) " अनिदिताम्० " इति, नलोपः ६।४।२४॥कौ०पृ०७६ पुनरपि स एवावर्तते. ततः,

( ६ ) "पञ्चद्दशतौ वर्गे वा" ५।१।६०॥ कौ०पृ०३०१

इति संख्यायाः क्नोपवादतया, पाक्षिकडत्वन्तो निपातः. डित्वाट्टिलोपः. कर्मधारयः. नलोपः एवं सिद्धात् दशदशच्छब्दात्,

( ७ ) " तदस्य परिमाणम् " इत्यर्थे ५।१।५७॥कौ०पृ०३००

( ८ ) " पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् " इति, तप्रत्ययः. ५।१।५९॥कौ०पृ०३००

प्रकृतेश्शभावश्च निपात्यते; यद्वा. लाघवाद् रूढिशब्दा एव निपात्यन्ते. बहुव्रीहिः. ❀

इत्थं वासुदेवत्वं गुणतो विवृतम्; अथ, रूपतोपि विव्रियते. लीलापद्मेन नित्ययोगात्. पद्मं नित्यमस्यास्तीति,—

( पद्मी ) व्युत्पादितो हि, पद्यतेर्मन्प्रत्यये पद्मशब्दः १

निरु०—३४६ गुणतो वासुदेवत्वमुक्तं रूपादिरुच्यते ॥ २५८ ॥

लीलापद्मधरो नित्यं ( पद्मी ) ति परिकीर्त्यते ।

(३४७) पद्मनिभेक्षणः, ॥ श्लो०॥३८॥

{४८ / १९८} ( ३४८ ) पद्मनाभो,

ॐ पद्मनिभेक्षणाय नमः। ॐ पद्मनाभाय नमः।

भा०— अमलकमलास्फालननिभं श्रमापहं वीक्षणमस्येति— ( पद्मनिभेक्षणः ). ❀ नाभिश्च पद्मनिभोऽस्येति— ( पद्मनाभः ). ❀

निर्व०— ततो नित्ययोगे, मत्वर्थीयोऽत्र इनिः.

( १ ) " यस्य० " इति, लोपः. ६।४।१४८॥कौ०पृ०५६

( २ ) " सौच " इतीनन्तलक्षणो दीर्घः. इत्यादि. ❀ ६।४।१३॥ कौ०पृ०६४

तथा, पद्मनिभम्, अमलकमलास्फालनसदृशम्, ईक्षणम् श्रमापहवीक्षणम्, अस्येति— ( पद्मनिभेक्षणः ).

( १ ) " ईक्ष. दर्शने " धा०भ्वादिः कौ०पृ०४०६

( २ ) " ल्युट् च " इति, भावे ल्युट् योरनः. णत्वम्.३।३।११५॥ कौ०पृ०६६२

( ३ ) " भा, दीप्तौ " निपूर्वः. धा०अदा०कौ०पृ०४४३

( ४ ) " आतश्चोपसर्गे " इति, कः. आल्लोपः. ३।१।१३६॥ कौ० पृ०५६८ पद्मशब्दो व्याकृतः. एवमुत्तरत्रापि. गुणः. ❀

तथा पद्मम्, पद्मनिभा, नाभिः अस्येति— ( पद्मनाभः ).

( १ ) " णह. बन्धने " धा०दिवा०कौ०पृ०४५५

निरु०— ३४७ स्वच्छाम्बुजातसदृशमीक्षणं श्रमहारि च ॥२५९॥
यस्यास्ति भक्तरक्षायां स स्यात् ( पद्मनिभेक्षणः )।
३४८ नाभिश्च पद्मवद्यस्य ( पद्मनाभः ) स उच्यते ॥२६०॥

१ शीतलम् ।

( ३४९ ) अरविन्दाक्षः,

ॐ अरविन्दाक्षाय नमः ।

भा०—अरविन्दसुन्दरे, अक्षिणी. अस्येति—( अरविन्दाक्षः ). ❀ स्वसदृशेन सुरभिकोमलेन आसनपद्मेन, उपासकमानसमरसिजेन वा, गीयते स्वान्तरवस्थाप्यत इति—

निर्वे०—( २ )" णोनः " ६।१।६५॥कौ०पृ० ३८६

( ३ ) "नंहतम् " इति इत्रि मकारे च उणा०पा०४कौ०पृ०६३८ अन्नादेशे.वृद्धौ च नासिशब्दो न्यन्तादिनः. बहुव्रीहिः, नञः,

( ४ ) "अच् प्रत्यन्वव०" इत्यत्र, ५।४।७५॥कौ०पृ०१८३ अजिति योगविभागात् अच्समासान्तः.

( ५ )" यस्य०" इति, लोपः. ❀ ६।४।१४८॥कौ०पृ० ५६

तथा, अरविन्दे तद्वत् सुन्दरे, अक्षिणी, अस्येति— ( अरविन्दाक्षः ). न्युदसादि सुगेराक्षिशब्दः ?

( १ )" विद्लृ, लाभे " धा०तुदा० कौ०पृ० ४७०

( २ )"गवादिषु विन्देस्संज्ञायाम्" इति, ३।१।१३८॥कौ०पृ०५६८ शः—तत्तनुदादिलक्षणस्य किन्वाद्गुणः.

( ३ )" शेमुचादीनाम्" इति, नुम्. ७।१।५९॥कौ०पृ०४७० अनुस्वारप सवर्णौ. परस्रूप.

( ४ )" ऋ, गतौ " पचाद्यच्. गुणः. रपरः, दीर्घः. ननो धा० जुहो०कौ०पृ० ४५२

(५)"बहुव्रीहौसक्थ्यक्ष्णोः०"इति. षच्.५।४।११३॥कौ०पृ० १६६ प्रागुक्तन्यायात्तत्समासौ,

( ६ )"अक्ष्णोऽदर्शनात्" इत्यज्वा. ५।४।७६॥कौ०पृ० १८३

( ७ )" यस्य० " इति, लोपः. ❀ ६।४।१४८॥कौ०पृ० ५६

स्वसदृशेन सुरभिकोमलेन पद्मेन आसनपद्मेन, उपासक—

निरु०—३४९ स्फारविन्दनयन ( स्त्वरविन्दाक्ष ) ईरितः ।

१ यस्य सः ।

## (३५०) पद्मगर्भः, (३५१) शरीरभृत्।

### ॐ पद्मगर्भाय नमः। ॐ शरीरभृते नमः।

भा०—(पद्मगर्भः).

(१) "अर्तिगृभ्यां भन्" यथा. उणा०पा०३को०पृ०६३१

(२) "दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकम्" नै०ना० ६–१०–२३।

(३) "दहरं पुण्डरीकं वेश्म" इत्यादि. छा०८–१–१।

(४) "सरसिजासनसन्निविष्टः" ❀

इदृशेन शुभाश्रयेण स्वशरीरभूतमुपासकं पुष्णातीति—(शरीरभृत्)—उपास्यगुणैर्हि तेषां पोषः?

निर्व०—मानससरसिजेन वा, गर्भिते स्वान्तरवस्थाप्यते, इति—(पद्मगर्भः).

(१) "गॄ, निगरणे" धा०तुदा० को०पृ०४३८

(२) "अर्तिगृभ्यां भन्" उणा०पा०३को०पृ०६३१

इति. कर्मणि भन्. गुणः स्वरः.

(३) "नेड्वशि०" इति नेट्. पद्मशब्दः ७।२।८॥को०पृ०५८१ प्राग्वत्. ❀

इदृशेन शुभाश्रयेण शरीरं स्वशरीरभूतं उपासकं बिभर्ति पुष्णातीति—(शरीरभृत्).

(१) "डुभृञ्, धारणपोषणयोः" धा०जुहो० को०पृ०४५०

निरु०—३५० योगिहृत्पुण्डरीकस्थः (पद्मगर्भः) स उच्यते ॥२६१॥
३५१ योगिहृत्कञ्जमध्यस्थः स्वदेहं तं बिभर्ति यः।
(शरीरभृत्) स कथितो वर्णी भुक्तिमुक्तिदः ॥ २६२ ॥

## ( ३५२ ) महर्द्धिर्,

ॐ महर्द्धये नमः।

भा०– ( १ ) " वसति हृदि सनातने च तस्मिन् भवति पुमान् जगतोऽस्य सौम्यरूपः " वि० पु० ३–७–२४ ।
( २ ) " ब्रह्मविद इव सोम्य ते मुखं भाति " इति च. छा० ।
उपासको हि तस्यात्मवच्छरीरवच्च ?
( ३ )" रक्षेन भगवान् विष्णुर्भक्तानात्मशरीरवत् " इति. ❀
अथ, विभूतितोऽपि स एव विव्रियते. तद्योगक्षेमक्षमानिस्सीमविभूतिः–
( महर्द्धिः ).

निर्व०– ( २ ) "वासरूपोऽस्त्रियाम्" ३।१।९४॥ कौ०पृ०५७५
इति, वासरूपविधिना क्विपि तुक्. अगुणः.
( ३ ) " शॄ. हिंसायाम् " धा० क्र्यादिः कौ०पृ०४७६
( ४ ) " कॄशॄकटिपटिशौटिभ्य ईरन् " उणा०पा०
इति, ईरन्. गुणः रपरः. ❀
अथ विभूतितोऽपि, वासुदेव एव विव्रियते. तद्योगक्षेमक्षमा, महती निस्सीमा ऋद्धिः– विभूतिः, अस्येति–
( महर्द्धिः ).
( १ ) " ऋधु. वृद्धौ " धा० स्वा० कौ०पृ०४६१
(२)"स्त्रियां क्तिन्"इति. भावे क्तिन्, ३।३।९४॥ कौ०पृ०६५८
अगुणः.
( ३ ) " तितुत्र० " इति, नेट्. ७।२।९॥ कौ०पृ०६०८
( ४ )"झषस्तथोर्धोऽधः"इति, तस्य धः. ८।२।४०॥ कौ०पृ०३८५

निरु०– ३५२ स एव वासुदेवोथ भूतितश्च विव्रियते। तद्योग-क्षेमवहननिर्मर्यादविभूतितः ॥ २६३ ॥ ( महर्द्धिम् )

## ( ३५३ ) ऋद्धो,

ॐ ऋद्धाय नमः ।

गा०—तत्समृद्ध्या स्वयमपि समृद्धः—
( ऋद्धः ). यथा,
( १ ) " अभिषिच्य च लङ्कायाम् " इत्यादि. ❀ रा० बा० १-२५।
इमम्महान्तम्महिमानञ्चुलकयन्निव प्रवृद्ध आत्मा स्वरूपम्. अस्येति—

निर्व०—( ५ ) "झलां जश् झशि" इति पूर्वस्य धस्य दः. ८।४।५३॥
कौ० पृ० ९ व्युत्पादित एव हि महच्छब्दः, ततः स्त्रियाम्, वर्तमाने पृषदित्यत्र शतृवदित्यातिदेशिक उगिल्लक्षणो ङीप्. ततः,
( ६ ) " स्त्रियाः पुंवत्० " इत्यादिना ६।३।३४॥ कौ० पृ० १६०
तस्य पुंवद्भावः.
( ७ ) "आन्महतः०" इत्यात्वम्. दीर्घः. ६।३।४६॥ कौ० पृ० १५५
( ८ ) "ऋत्यकः" इति, प्रकृतिभावस्य पाक्षिकतया, ६।१।१२८॥
कौ० पृ० १६ तदभावे आद्गुणः. रपरत्वम्. ❀
तत् समृद्ध्या स्वयमपि, ऋद्धः समृद्ध इति—
( ऋद्धः ). पूर्ववत् धातुः.
( १ ) " गत्यर्थ० " इत्यादिनाऽकर्मकात्कर्तरि क्तः. ३।४।७२॥
कौ० पृ० ५९६
( २ ) "उदितो वा" इति क्त्वायामिड्—७।२।५६॥ कौ० पृ० ६६८
विकल्पान्निष्ठायां नेट्. ततः, प्राग्वदेव धत्वम्. जश्त्वम्. गुणाभावश्च.
नाम्नोः संहितायां सोरुत्वम्. ❀
इमं महान्तं महिमानं चुलकयन्निव वृद्धः— प्रवृद्धः आत्मा स्वरूपम् अस्य इति—

निरु०—३५३ तत्समृद्ध्या यस्समृद्ध ( स्त्वृद्ध ) उच्यते ।

**( ३५४ ) वृद्धात्मा. ( ३५५ ) महाक्षो,(३५६)गरुडध्वजः,॥**

**ॐ वृद्धात्मने नमः। ॐ महाक्षाय नमः।ॐ गरुडध्वजाय नमः।**

भा०—( वृद्धात्मा ). ❀
महाक्षः—महान् पूज्यः, अक्षो, यस्य सः—
(महाक्षः). वहनेन रथावयवसाम्यात् अक्षः त्रयीमयः तार्क्ष्यः, स हि,
गरुडवाहनस्य आरवाहः ? ❀
स एव ध्वजो, यस्य सः—
( गरुडध्वजः )—तद्धि, सर्वेश्वरस्यासाधारणं चिह्नम् ? ❀

निर्व०—( वृद्धात्मा ). आत्मशब्दो ह्यनन्तव्युत्पादितः ?
( १ ) "वृधु, वृद्धौ" प्राग्वत् क्तः. अगुणः. ❀ धा०भ्वादिः
कौ०पृ०४१२
उदित्वान्निष्ठायामनिट्. ध्रत्वजश्त्वादि. दीर्घः, ततो नान्तलक्षणो
दीर्घ इत्यादि. महान् पूज्यः, अक्षः वहनेन रथावयवसाम्यात्,
आम्नायत्रयीमयस्तार्क्ष्यः अस्येति—( महाक्षः ).
( १ )"अक्षू, व्याप्तौ" पचाद्यच्. धा०भ्वादिः कौ०पृ०४०८
प्राग्वत् व्युत्पादितान्महत आत्वमित्यादि. ❀
स एव गरुडो, ध्वजः केतुः स्वासाधारणं चिह्नम्, अस्येति—
( गरुडध्वजः ).
( १ ) "ध्वज, गतौ" पचाद्यच्. धा०भ्वादिः कौ०पृ०३९१
( २ ) "गॄ, निगरणे" धा०तुदा० कौ०पृ०४६८

निरु०—३५४ महिमानं चुलकयन् प्रवृद्धस्सर्वताधिकम् ॥ २६४ ॥
आत्मा स्वरूपं यस्येति स ( वृद्धात्मे ) ति कथ्यते ।
३५५ अक्षस्तु तार्क्ष्यो वहनाद्रथावयवसाम्यतः ॥ २६५ ॥
महान् पूज्यस्स यस्यास्ति स ( महाक्ष ) इति स्मृतः ।
३५६ स एव तु ध्वजो यस्य स उक्तो ( गरुडध्वजः ) ॥ २६६ ॥

श्लो० ॥ ३९ ॥ (३५७) अतुलश्, (३५८) शरभो,

ॐ अतुलाय नमः । ॐ शरभाय नमः ।

भा०— एवम्,—

(अतुलः)—अनुपमः,

(१) "न तस्य प्रतिमा अस्ति" इति. ❀ तै० २।

स्वमर्यादातिवर्तिनः शृणातीति— (शरभः).

(१) "कृशृशलिकलिगर्दिभ्योऽभच्" इति. अभच्. ❀ उणा० पा० ३ कौ० पृ० ६३०

निर्व०— (३) "गिर उडच्" इति, उडच्. गुणः रपरः. ❀ उणा० पा० ४ कौ० पृ० ६३९

इत्थमप्रतिमतया, नास्ति तुला उपमा अस्येति— (अतुलः).

(१) "तुल, उन्माने" चुरादिः णिच्. धा० चुरा० कौ० पृ० ४८१

(२) "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" २।३।७२॥ कौ० पृ० १२४

" इति, निपातनात्, स्त्रियाम् अङ्. णिलोपश्च. ततो न गुणः. अतष्टाप्. दीर्घः. नञ्पूर्वो बहुव्रीहिः. नञो नलोपः.

(३) "गोस्त्रियोः०" इति. उपसर्जनह्रस्वः. ❀ १।२।४८॥ कौ० पृ० १२९

स्वमर्यादातिवर्तिनः शृणाति हिनस्तीति— (शरभः).

(१) "शॄ, हिंसायाम्" धा० क्र्यादिः कौ० पृ० ४७६

(२) "कृशृशलिकलिगर्दिभ्योऽभच्" उणा० पा० ३ कौ० पृ० ६३० इति, अभच्. गुणो रपरः. ❀

निरु०— ३५७ गरुडध्वजवत्त्वा (द्व्यतुलो) निरुपमस्स्मृतः ।
३५८ स्वाज्ञातिलङ्घिनः पुंसः शिक्षणा (च्छरभः) स्मृतः ॥ २६७ ॥

(३५९) भीमः

ॐ भीमाय नमः ।

भा०—अतः ते तस्मात् बिभ्यतीति—

(भीमः).

(१) "भियष्षुग्वा" इति, मक्प्रत्ययः. उणा० पा० १ कौ० पृ० ६१७

(२) "भीमादयोऽपादाने" इति, ३।४।७४।। कौ० पृ० ६४५

तन्नीता हि, वाय्वादयो देवाः स्वमर्यादां नातिवर्तन्ते. यथा,

(३) "भीषास्माद्वातः पवते" इत्यादि[1] तै० अ० ८।

(४) "यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्महद्भयं वज्रमुद्यतम्" कठो० २-६-२।

(५) "भयादेवाग्निस्तपति, भयात्तपति सूर्यः, भयादिन्द्रश्च वायुश्च, मृत्युर्धावति पञ्चमः" कठो० २-६-३।

(६) "कम्पनात्" ॐ ब्र० १-३-४०।

निर्व०—अतः ते बिभ्यत्यस्मात् इति—(भीमः),

(१) "ञिभी. भये" धा० जुहो० कौ० पृ० ४४९

(२) "इषियुधीन्धिदसिश्याधूसूभ्यो मक्" उणा० पा० १ कौ० पृ० ६१७ इति मकरणे,

(३) "भियः षुग्वा" इति. मक् नात्र तस्य. उणा० पा० १ कौ० पृ० ६१७ विभाषितः षुक्. कित्वान्न गुणः.

(४) "भीमादयोऽपादाने" इत्यपादाने साधुः. ॐ ३।४।७४।। कौ० पृ० ६४५

यथापूर्वकल्पनेन तेषां समयमधिकारिनियमम्, अभयप्रदानव्रतनिरततया, भक्तेभ्यः स्वात्मदानावसरं वा, जानाति वेत्तीति—

निरु०—३५९ (भीमो) यस्माद्बिभ्यति तु शरभात् पवनादयः।

१ द्यतम् ।

(३६०) समयज्ञो,

ॐ समयज्ञाय नमः।

भा०— अतस्तेषामग्न्यादीनाम् ऊर्ध्वज्वलनादिसमयमधिकारनियमं जानातीति—(समयज्ञः).

(१) "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" तै०६–१–३८। इति,यद्वा, भक्तेभ्यः स्वात्मदानावसरस्समयः,तदभयदानज्ञानं वेति. ❀

(२)"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये"इति,श्रुतिसिद्धं समयं ज्ञात्वा, तेभ्यो दीयते, छा०६।१४–२।

तैरादीयते चेति—

(हविः).

(१) "हु, दानादानयोः" धा०जुहो० कौ०पृ०४४९

(२)"अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः"उणा०पा०२कौ०पृ०६२४ इति, इसिः. ❀

---

निर्व०— (समयज्ञः).

(१) "ज्ञा, अवबोधने"धा०क्र्यादिः कौ०पृ०४७७

(२)"आतोनुपसर्गे कः"इति कः. आल्लोपः. ३।२।३॥कौ०पृ०५७०

(३) "इण्, गतौ" संपूर्वः. धा०अदा०कौ०पृ०४४१

(४) "एरच्" इत्यच्. ३।३।५६॥कौ०पृ०६५६

(५) "पुंसिसंज्ञायाम्०"इति,घो वा. ३।३।११८॥कौ०पृ०६६३ गुणायादेशौ. ❀

समयं ज्ञात्वा तेभ्यो दीयते तैरादीयते च इति—

(हविः).

(१)"हु, दानादानयोः"आदाने च प्रीणनेपि,धा०जुहो०कौ०पृ०४४९

---

निरु०—३६०अग्न्यादीनां च समयमूर्ध्वाग्रज्वलनादिकम् ॥२६८॥
यो जानात्यधिकारं च (समयज्ञः) स कीर्तितः।

(३६१) हविर्हरिः, ।

ॐ हविर्हरये नमः ।

भा०—तद्विघ्नमपहरतीति—( हरिः ).

(१) "सर्वधातुभ्य इन्" इति, हरतेरिन्. यथा, उणा०पा०४ कौ०पृ०६३७

(२) "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः" ? इति.

( हविर्हरिः ). इत्येकं नाम.

(१)"इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् । वर्णश्च मे हरिः श्रेष्ठस्तस्माद्धरिरहं स्मृतः" इति. ❁ भा०शा० ३४३—३९ ।

निर्व०—(२) "अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः" उणा० पा०२कौ०पृ० ६२४

इति, इसिः. गुणावादेशौ. आदिष्टलिङ्गोयम्. इत्यादि. ❁

तद्विघ्नं हरतीति—( हरिः ).

(१) "हृञ्, हरणे" धा०भ्वादिः कौ०पृ० ४२३

(२) "सर्वधातुभ्य इन्" इति वर्तमाने, उणा०पा०४कौ०पृ०६३७

(३) "अच इः" इत्यस्यापवादः, उणा०पा०४कौ०पृ० ६३८

(४) "हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च" उणा०पा० ४ कौ०पृ० ६३७

इति इन्. गुणः रपरः. ❁

यद्वा क्रतुभागहरतया, हविः उपहूतं हरतीति—( हविर्हरिः ).

निरु०—३६१ समयं श्रुतिसिद्धं यो ज्ञात्वा तेभ्यः श्रियं मुदा॥२६९॥
दत्ते हुतं हविस्तैश्च दीयते स हविस्स्मृतः ।
हरतीति हरिर्विघ्ना नब्ददानेषु नित्यशः ॥ २७० ॥
( हविर्हरि ) रिति प्रोक्तो ह्यष्टार्णश्चैकनामतः

## ( ३६२ ) सर्वलक्षणलक्षण्यो.

### ॐ सर्वलक्षणलक्षण्याय नमः ।

ना०—अथ, लक्ष्मीपतिमूर्तिः—साक्षाल्लक्ष्मीसननालिङ्गनसौभाग्यसूच-केस्सर्वैर्लक्षणैर्लक्षणे ज्ञाने साधुः—( सर्वलक्षणलक्षण्यः ).

( १ ) " तत्र साधुः " इति, यत्. तानि लक्षणानि. यथा. ४।४।९८॥ कौ०पृ० २८९

( २ ) " ध्यायेत्कमलगर्भाभं देवं[1] लक्ष्मीसमन्वितः ।
कमलालयहस्तीश विभूतिरकरद्वयम् " तन्त्रं च.

( ३ ) " पुण्डरीकाक्ष ! सकलसुखसौभाग्यवारिधे " इति. ✿

---

निरु०-एकन्नाम,जुहोतिरिह दानमात्रकर्मा. अन्यत् सर्वं पूर्ववत्. णत्वम्. अथ, लक्ष्मीपतिमूर्तिः प्रकम्प्यते. साक्षाल्लक्ष्मीसननालिङ्गनसौभाग्य-सूचकैः कमलगर्भाभत्वपुण्डरीकाक्षत्वादिभिः सर्वैर्लक्षणैः लक्षणे ज्ञाने साधुरिति—( सर्वलक्षणलक्षण्यः ).

( १ ) " लक्ष, दर्शनाङ्कनयोः " चुरादिः णिच्. धा०चु०ग० कौ०पृ० ४७९

( २ ) " ल्युट् च " इति, भावे ल्युट्. ३।३।११५॥ कौ०पृ०६६२ अनः. णिलोपः. णत्वम्.

( ३ ) " तत्र साधुः " इति यत्. ४।४।९८॥ कौ०पृ० २८९

( ४ ) "यस्येति च" इति लोपः. ण्यन्तः. ६।४।१४८॥ कौ०पृ० ५६ पुनरपि स एव धातुः.

( ५ ) " करणाधिकरणयोश्च" इति करणे, ल्युट्. ३।३।११७॥ कौ०पृ० ६६२

अन्यत् समं. यदभावो विशेषः. यद्वा, तत एव धातोर्ण्यन्तात्,

---

निरु०—३६२ ( सर्वलक्षणलक्षण्यो ) लक्ष्मीचरणचिह्नितः ॥२७१॥

---

१ ध्येयम् ।

( ३६३ ) लक्ष्मीवान्,

ॐ लक्ष्मीवते नमः ।

भा०— तथाच—

( लक्ष्मीवान् ). तथैव लक्ष्म्या नित्ययोगवान् ? यथा,

( १ ) "द्वयं देवीपरिणये लीलयैव समर्पयन् । प्रकाशयन्ननादित्य-
मात्मना प्रकृतेर्महः ॥ मत्कृतेरनुविद्धेयं प्रकृतिः प्राकृतेरहम् ।
यनेहनाश्विनश्वान्या मूर्तिर्मय्येतदात्मिका " ॥ इति. प्रकृतिः
जगतामाता श्रीः, ❀

निर्व०— (६) "धावृवस्यज्यतिभ्यो नः " इति वर्तमाने, उणा० १०
पा० ३ कौ० पृ० ६२५

( ७ ) "लक्षेरट् च " इति, नः. तस्याडागमश्च. उणा० पा० ३
कौ० पृ० ६२५ णिलोपः. णत्वम्. व्युत्पादि सर्वशब्दः. ❀
तथाच. लक्ष्मीः नित्यमस्यास्ति; अस्मिन् वा. इति—
( लक्ष्मीवान् ).

( १ ) " लक्ष, दर्शनाङ्कनयोः" धा० चुरा० कौ० पृ० ४७९

( २ ) " अविनृस्तृतन्त्रिभ्य ईः" उणा० पा० ३ कौ० पृ० ६३२
इति वर्तमाने,

( ३ ) " लक्षेर्मुट् च " इति, ईप्रत्ययः. उणा० पा० ३ कौ० पृ० ६३२
तस्य मुडागमश्च णिलोपः. एवं निष्पन्नाल्लक्ष्मीशब्दात् २०
नित्ययोगे मतुप्.

(४) "मादुपधायाश्चमतोर्वोऽयवादिभ्यः" ८।२।९॥ कौ० पृ० ३२५
इति मोपधान् मतोर्मस्य वः. अत्वन्तलक्षणो दीर्घः. ततो,
नुमादि. संयोगान्तलोपः. तस्यासिद्धत्वान्नलोपो न. ❀

निरु०—३६३ लक्ष्म्या च नित्ययुक्तत्वा (ल्लक्ष्मीवा)निति कथ्यते । २५

**( ३६४ ) समितिंजयः, ॥ श्लो० ॥ ४० ॥ ( ३६५ ) विक्षरो,**

**ॐ समितिंजयाय नमः । ॐ विक्षराय नमः ।**

---

भा०— तया जगत्पिता पितृवन्निर्वृतिकरोयं जीवानां स्वदास्यविवादक्लेशञ्जयतीति—
( समितिंजयः ).
( १ ) " संज्ञायां भृतॄवृजि० " इत्यादिना खच्. ३।२।४६॥ कौ० पृ० ५७८
( २ ) " अखिलदुःखजेयः " इति मन्त्रवर्णात्.
यथोक्तभक्तप्रणयाक्षरणात्—( विक्षरः ). ❀

---

निर्व०— दुःखशमनाश्रितया समितिं युद्धं जीवानां स्वदास्यविवादक्लेशं, जयति अभिभवति, इति—
( समितिंजयः ).
( १ ) " जि. अभिभवे " धा० भ्वादिः कौ० पृ० ४२६
(२) "संज्ञायां भृतॄवृजिधारिसहितपिदमः" ३।२।४६॥ कौ० पृ० ५७८ इति खच्. गुणायादेशौ.
( ३ ) " इण्, गतौ " संपूर्वः. धा० अदा० कौ० पृ० ४४१
( ४ ) "स्त्रियां क्तिन्" इति, क्तिन्. अगुणः. अनिट्. ३।३।९४॥ कौ० पृ० ६५८
(५) " अरुर्द्विषदजन्तस्य मुम् " इति, ६।३।६७॥ कौ० पृ० ५७५ अजन्तलक्षणो मुम्. अनुस्वारपरसवर्णौ. ❀
यथोक्तप्रणयाक्षरणात्, विगतःक्षरःप्रणयक्षरणम् अस्येति—(विक्षरः).

---

निरु०—३६४ चेतनानां स्वदासत्वविवादं जयतीति यः ॥ २७२ ॥
( समितिंजय ) आख्यातः सर्वदुःखशमाश्रयः ।
३६५ उक्तस्नेहस्याक्षरणाद् ( विक्षरः ) परिकीर्तितः ॥ २७३ ॥

---

१ शमनाश्रयः ।

## श्लो०॥४६॥ ( ४२७ ) विस्तारः

ॐ विस्ताराय नमः ।

शा०– " द्रुदक्षिभ्यामिनन् " उणा०पा०२कौ०पृ०६२१
अपकारिष्वप्यनिक्षमत्वं हि दाक्षिण्यम् ?
( १ ) " स इमं सकलं लोकं प्रसादमुपनेष्यति " इति.
शा० आर० १९०–१६ ।
सत्रा, अश्वमेधे. विश्वं विश्वं तस्य दक्षिणा अस्येति वा.
आरण्यपर्वणि.
( २ ) " ततश्चोरक्षयं कृत्वा द्विजेभ्यः पृथिवीमिमाम् । वाजिमेधे
महायज्ञे विधिवत्कल्पयिष्यति " इति. ❋ शा०आ०१९१–१।१०
कलिप्रबलसंहारेण कृतं प्रवर्तयतोऽस्माद्वेदमर्यादा प्रथत इति–
( विस्तारः ).

निर्व०–( १ )"दक्ष. वृद्धौ शीघ्रार्थे च" धा०भ्वादिः कौ०पृ०४०६
( २ ) " द्रुदक्षिभ्यामिनन् " इति, इनन्. उणा०पा०२कौ०पृ०६२१
णत्वम्. विश्वशब्दो व्युत्पादि. पूर्वत्र तत्पुरुषः. अपरत्र व्युत्पादिता-
दक्षिणशब्दात्. स्त्रियामजटाप्. दीर्घः. ततो विश्वपूर्वो बहुव्रीहिः.
( ३ ) " गोस्त्रियोः० " १।२।४८॥कौ०पृ०१२९
इति, उपसर्जनह्रस्वः. ❋
कलिप्रबलसंहारेण कृतयुगप्रवर्तनात्, वेदमर्यादा विस्तीर्णा प्रथतेऽ
स्मादिति– ( विस्तारः ).
( १ ) " स्तॄञ्, आच्छादने " धा०क्र्यादिः कौ०पृ०४७५
विपूर्वः.

निरु०–४२७ प्रबलं यः कलिं हत्वा प्रवर्त्य च कृतं युगम्
॥३२१॥
विस्तार्य वेदमर्यादां स्थितो ( विस्तार ) उच्यते ।

## (४२८) स्थावरस्थाणुः,

ॐ स्थावरस्थाणवे नमः ।

भा०—"प्रथने वावशब्दे" इति, घञ्. यथा, ३।३।३३॥कौ०पृ०६५०

(१) "ततो धर्मविनाशो वै धर्मवृद्धिश्च भारत । भविष्यति कृते प्रामे क्रियावांश्च जनस्तथा" इति. ❀ भा०आ०१९१–७।

एवं धर्मं स्थावरीकृत्य शमे स्थास्यतीति–( स्थावरस्थाणुः ).

(१) "स्थापयित्वा स मर्यादां स्वयंभुविहितां शुभाम्" इत्यारण्यके. ०ॐ १९१–२।

अथ कार्तयुगानां हिताहितयोः.—

निर्व०—(२) "ऋदोरप्" इत्यत स्व इति वर्तमाने, ३।३।३२॥कौ० पृ०६५०

(३) "प्रथने वावशब्दे" इति, ३।३।३३॥कौ०पृ० ६५०

वौ अपादाने घञ्. वृद्धिः. रपरत्वम्. ❀

एवं स्थावरः स्थावरीकृतधर्मस्मिन् शमे स्थास्यतीति स्थाणुश्चेति–( स्थावरस्थाणुः )–एकं नाम.

(१) "ष्ठा" गतिनिवृत्तौ" पस्मः.धा० भ्वादिः कौ०पृ०४२४

(२) "दोस्तुः"

(३) "स्थोणुः" इति, बाहुलकात् उणा०पा०३कौ०पृ०६२६ भविष्यति णुः. अनिट्. भूयोऽप्ययमेव धातुः.

(४) "स्थेशभास०" इत्यादिना ३।२।१७५॥कौ०पृ०६०६ वरच्. अनिट्, कर्मधारयः. ❀

अथ, कार्तयुगानां हितमहितं च प्रमीयते व्यवस्थाप्यतेऽनेनेति–

निरु०—४२८ स्थावरीकृत्य धर्मान्यश्शमे स्थास्यति नित्यशः॥३२२॥
येन केनाप्यचाल्यस्स (स्थावरस्थाणु)रुच्यते ।

१ हिताम् ।

## {४२९ / ९८९} प्रमाणम्, (४३०) बीजमव्ययम्. ।

ॐ प्रमाणाय नमः । ॐ बीजायाव्ययाय नमः ।

भा०—(प्रमाणम्). व्यवस्थापकः. एतच्छक्तिमेपितं हि, प्रत्यक्षाद्यपि प्रमाणं भवति? यथा,

(१) "यच्छीलमनुवर्तन्ते मनुष्या लोकशासितः" इति. ॐ आ० १९१–३। एवं कलिकालाद्यवसानेषु पुनःपुनर्धर्मप्ररोहणात्—(बीजमव्ययम्). ३.

निर्व०—(प्रमाणम्).

(१) "माङ्, माने" धातुः. धा० जुहो० कौ०पृ० ४५०
करणे ल्युट्. अनः.

(२) "कृत्यचः" इति. णत्वम्. ८।४।२९॥कौ०पृ० ५५६

(३) "लिङ्गमशिष्यम्" इत्यादि. ॥ महाभाष्यम् ॥

एतच्छक्त्या हि, प्रत्यक्षाद्यपि प्रमाणम्? ॐ

इत्थं कलिकालाद्यवसानेषु पुनः पुनः धर्मप्ररोहणात् अव्ययम् अविनाशम् बीजं कारणम् इति—

(बीजमव्ययम्)-एकं नाम.

(१) "जनी, प्रादुर्भावे" धातुः. धा० दिवा० कौ०पृ० ४५४

(२) "उपसर्गे च संज्ञायाम्" इति, डः. डिलोपः. ३।२।९९॥
कौ० पृ०५८५ १

(३) "अन्येषामपि दृश्यते" ६।३।१३७॥ कौ०पृ० १६५
इति, वेरिकारस्य दीर्घः.

निरु०—४२९ हिताहितस्थापकत्वात्(प्रमाणं)स्यात्कृतादिषु॥३२३॥
४३० यो वै कलियुगस्यान्ते मुहुर्धर्मप्ररोहणम् । करोति मत्कर-
क्षार्थं सोच्यते (बीजमव्ययम्)॥ ३२४ ॥

१ प्रेरितम्।

(४३१) अर्थो,

ॐ अर्थाय नमः ।

ना०—एकभक्तैर्विशिष्टाधिकारिणस्सम्यग्ज्ञानिनस्स्वयंप्रयोजनत्वात्-(अर्थः). अर्तेः,

(१) "उषिकुषिगार्तिभ्यस्थन्" इति, थन् प्रत्ययः. यथा, उणा० पा० २ कौ०पृ० ६१८

(२) "ज्ञानवान्मां प्रपद्यते । वासुदेवस्सर्वम" इति. ॐ गी०७–१९।

मन्दसुकृतेनार्थार्थिना निर्व्याजं नार्थ्यत इति—

निर्व०—व्ययोर्भेदः. विशेषणं,

(४) "इण्, गतौ" विपूर्वः. धा०अदा० कौ०पृ० ४४१

(५) "एरच्" इति भावे अच् गुणा—३।३।५६।। कौ०पृ०६५३ यादेशौ. वेरिकारस्य यण् यकारः. नञ्पूर्वो बहुव्रीहिः. नञो नलोपः.

(६) "लिङ्गमशिष्यम्" इत्यादि. ॐ ॥ महाभाष्यम् ॥

एकभक्तैः विशिष्टाधिकारिणः सम्यग्ज्ञानिनः स्वयंप्रयोजनतया, तेनार्यते प्राप्यते इति—(अर्थः).

(१) "ऋ, गतौ" धा० जुहो० कौ०पृ०४५२

(२) "उषिकुषिगार्तिभ्यस्थन्" इति, थन्. उणा०पा०२ कौ० पृ० ६१८

गुणो रपरः. अनिट्. मन्दसुकृतेनार्थार्थिना तद्व्याजेन अभ्यर्थनात्; निर्व्याजं नार्थ्यते न प्राप्यत इति—

निरु०—४३१ परमैकान्तिभिर्नित्यमीषणत्रयवर्जितैः ।
स्वयंप्रयोजनतया प्राप्यमाणो(ऽर्थ)उच्यते ॥ ३२५ ॥

(४३२) ऽनर्था.

ॐ अनर्थाय नमः।

भा०—(अनर्थः)— स ह्यर्थव्याजेनैनमर्थयते यथा,

(१) "अर्थमेकपिङ्गः" इति.वि०ध०४३–४७।

(२) "ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः" इति च. ❀ भा०शां०३४२–३७।

सदा सर्वेभ्यस्सर्वथा दानेऽप्यक्षयत्वात, महान्तः शङ्खपद्मादिनिधिरत्नाकररोहणगिरिवरादयः कोशाः भाण्डागाराणि. अस्येति—

निर्व०—(अनर्थः).

(१) "अर्थ, उपयाञ्चायाम्" धा०चुरा०कौ०पृ०४९०

चुरादौ कथादिः णिच्. अतो लोपः. ततः,

(२) "अकर्तरि च कारके०" इति३।३।१९॥कौ०पृ०६४७

कर्मणि घञ्. यदा

(३) "नानुबन्धकृतमसारूप्यम्" ॥परिभाषेन्दुशेख०॥

इति न वासरूपविधिः; तदा तदनुवृत्तौ,

(४) "एरच्" इत्यच्. यदि तु, ३।३।५६॥कौ०पृ०६५३

(५) "बहुलमेतन्निदर्शनम्" चुरा०ग०सू०कौ०पृ० ४९१

इत्यस्य व्याख्याविकल्पनात्, अनित्यण्यन्ताश्चुरादयः; तदा तदभावे तेनैव वा घञ्.इत्थं परत्रापि बोध्यम्.नञ्समासः नञो नलोपः.नुट्. ❀

सदा सर्वेभ्यस्सर्वथा दानेऽप्यक्षयत्वात्, महान्तः शङ्खपद्मादिनिधिरत्नाकररोहणभूधरादयः कोशाः भाण्डागाराण्यस्येति—

निरु०—४३२ अर्थार्थिनाल्पभाग्येन निर्व्याजं नार्थ्यते यतः।
तस्मा(दनर्थनामा) सौ वेदविद्भिः प्रकीर्तितः॥३२६॥

( ४३३ ) महाकोशो, (४३४)महाभोगो,(४३५) महाधनः, ॥
ॐ महाकोशाय नमः।ॐ महाभोगायनमः।ॐ महाधनाय नमः।

भा०—( महाकोशः )—अर्थसाध्यः कामभोगोपि महानस्मादिति—( महाभोगः ).

( १ )" लभते च ततः कामान् मयैव विहितान् हितान्" इति. ❀ भ० गी० ७—२२।

अनिरूप्यातिरूपणप्रदेयमनन्तं धनमस्येति—( महाधनः )—सर्वचैतत् महादः साह,

निर्व०—( महाकोशः ).कुशिस्तोत्रः. ततो देवमेषादिवत् पचाद्यच्.

( १ ) " हलश्च " इति, घञ्सूत्रा. ३।३।१२१॥कौ०पृ०६६३

गुणः. व्युदपादि हि महच्छब्दः? अन्यच्च-एवमुत्तरत्रापि. ❀

महान्, भोगः अर्थसाध्यः कामोपभोगोपि, अस्मादिति—( महाभोगः).

( १ ) " भुज, पालनाभ्यवहारयोः" धा०रूपा०कौ०पृ०४७१

भावे घञ्. गुणः.

( २ ) " चजोः०" इति, कुत्वम्. ७।३।५२॥कौ०पृ०५६०

गः. अन्यत् प्राग्वत्. ❀

महदनन्तम्, अतिरूपणप्रदेयं धनं राः, अस्येति—( महाधनः ).

निरु०—४३३ शङ्खपद्मादिनिधयो महान्तो रोहणो गिरिः ।
कोशा भाण्डगृहा यस्य ( महाकोशः ) स उच्यते॥३२७॥
४३४ अर्थसाध्यः कामभोगो यस्मादेषां महानिति ।
( महाभोगः ) स विज्ञेयो ह्यष्टार्णश्चिन्तितार्थदः ॥३२८॥
४३५ अनिरूप्यातिरूपणप्रदेयं धनमक्षयम् ।
यस्यैवास्तीति सततं स ( महाधन ) ईरितः॥३२९॥

( ४३७ ) स्थविष्ठो,

ॐ स्थविष्ठाय नमः ।

भा०—अथानिर्वेदोदाहरणं, स्वाध्यायब्राह्मणोत्तमानुवाके वैष्णवे च पुराणे प्रसिद्धम्. ताराशिशुमाराकृतिः ताराप्रकारेण स्थौल्यात्- ( स्थविष्ठः ); यथा,

(१)"तारामयं भगवतः शिशुमाराकृति, प्रभोः" वि०पु०२-९-१ । इति. ॐ

निर्व०—( १ ) "विद. विचारणे" सिद्धेः.धा०क०धा०कौ०पृ०४७३

( २ )"गत्यर्थ०" इत्यादिना कर्तरिक्तः. ३।४।७२॥कौ०पृ०५९६ भवन्ति हि, अविवक्षितकर्माणोप्यकर्माणः? निहतत्वान्नेट्.

(३)"रदाभ्यां निष्ठातो नः पूर्वस्य च दः" ८।२।४२॥कौ०पृ०५८६ इति प्रकरणे,

( ४ ) "नुदविदोन्दत्राघ्राह्रीभ्योन्यतरस्याम् " ८।२।५६ ॥ कौ० पृ०५८९

इति, वैकल्पिकं निष्ठातस्य नत्वम्; पूर्वस्य च दकारस्य. गैधादिकेनो-न्दिना साहचर्यात् तादृशस्य विन्देरेव ग्रहीतुमुचितत्वात्.

(५)"कृत्यचः" इत्यचः परत्वाभावात् ८।४।२९॥कौ०पृ०५५६ अप्राप्ते णत्वे,

( ६ )" निर्विण्णस्योपसंख्यानम्" इति, ८।४।२९॥कौ०पृ०५५६ औपसंख्यानिको णः. पूर्वस्य तु नकारस्य ष्टुत्वेन, णः नञ्-समासः. नञो नलोपः. ❀

अथ, अनिर्वेदोदाहरणम्- तत्र श्रुतिपुराणप्रसिद्धशिशुमाराकृतिताराप्रकारेणातिस्थूल इति- ( स्थविष्ठः ).

निरु०—४३७ स्थौल्यात् (स्थविष्ठ)स्त्वंप्रोक्तः मनार्णः पापनाशनः ।

## (४३८) भूर, (४३९) धर्मयूपो,

### ॐ भुवे नमः । ॐ धर्मयूपाय नमः ।

भा०— ध्रुवानुबन्धेन सर्वाधारो भवतीति—
(भूः).
(१) "तस्य पुच्छे ध्रुवः स्थितः" इति.वि०पु०२ ।
धर्मतत्त्वं शिरोवयवतया यौतीति—
(धर्मयूपः).
(१) "यु, मिश्रणे" धा० अदा० कौ०पृ०४३९

निर्व०—(१)"स्थूल, परिबृंहणे" धा० चुरा० कौ०पृ०४९०
चुरादौ कथादिः णिच्- अतो लोपः ततः पचाद्यच्. णिलोपः
एवं निष्पन्नात् स्थूलशब्दात् आतिशायनिक इष्ठन्. तत्र,
(२)"स्थूलदूर०" इत्यादिना यणादिपर-६।४।१५६॥कौ०पृ०३४२
लोपः. पूर्वस्य च गुणः. अव्. ❀
ध्रुवानुबन्धेन सर्वाधारो भवतीति—(भूः).
(१) "भू, सत्तायाम्" धा० भ्वादिः कौ०पृ०३६८
(२) "भुवः संज्ञान्तरयोः" ३।२।१७९॥ कौ०पृ०६०७
इति, संज्ञायां क्विप्.तस्य सर्वस्य लोपः. ❀
स एव धर्मं धर्मतत्त्वं शिरोवयवतया यौति मिश्रयतीति—(धर्मयूपः).
(१)"यु, मिश्रणे" अन्तर्भावितण्यर्थः.धा० अदा०कौ०पृ०४३९
(२)"पानीविषिभ्यः पः" "च्युवःकिच्च" उणा०पा० ३कौ०पृ०६२६

निरु०—४३८औत्तानपादिसंबन्धात् सर्वाधारतया तथा॥३३१॥
भवतीति च (भूः) प्रोक्तो भक्तानां भूतिदो मनुः ।
४३९ उत्तमाङ्गतया धर्मतत्त्वं यौतीति सर्वदा॥ ३३२ ॥
(धर्मयूप) स्समाख्यातो ह्यष्टार्णो धर्मदायकः ।

(४४०) महामखः, । (४४१) नक्षत्रनेमिर्,

ॐ महामखाय नमः । ॐ नक्षत्रनेमये नमः ।

भा०— "कुयुत्याञ्च" इति घप्रत्ययः. बहुलवचनाद्दीर्घश्च.
(२) "धर्मो मूर्धानमाश्रितः"
(३) "तच्छिरो धर्मः" इति च. ❀
धर्मशरीरतया पूज्यो यज्ञोऽस्यावयव इति— (महामखः). यथा.
(१) "यज्ञो धर्मश्च विज्ञेयः" इति. ❀
ज्योतिश्चक्रस्य नेमि—
(नक्षत्रनेमिः). "नियो मिः" इति मिः यथा.

निर्व०— इति वर्तमाने, "कुयुत्याञ्च" इति,वः. कित्. उणा० पा० ३ कौ० पृ० ६२६
(३) "श्युकः किति" इति, नेट्. बहुलवचनात् ७।२।११ ॥ कौ० पृ० ४२५
दीर्घः. कित्त्वान्न गुणः. धर्मशब्दो हि धरतेः
(४) "अर्तिस्तुसुहु०" उणा० पा० २ कौ० पृ० ६२३
इत्यादिना मनि व्युदपादि? ❀
महान् पूज्यः, मखो यज्ञोऽवयवोऽस्येति—
(महामखः). मखिर्गत्यर्थः. पचाद्यच्. महच्छब्दोन्यत्रापि. अन्यच्च ज्योतिषां निर्वाहकतया, नक्षत्राणि ज्योतींषि नयति निर्वहतीति—
(नक्षत्रनेमिः).

निरु०— ४४० धर्मदेहतया पूज्यो यज्ञोऽस्यावयवो यतः ॥ ३३३ ॥
ततो (महामखः) प्रोक्तो ह्यष्टार्णः कर्मकारकः ।
४४१ यन्नक्षत्रात्मकं चक्रं ज्योतीरूपमनामयम् ॥ ३३४ ॥
यस्मिन्नित्यं भ्रामयति भ्रमन्तमनुयाति च ।
(नक्षत्रनेमि) विज्ञेयो नवार्णो भ्रमनायकः ॥ ३३५ ॥

( ४४२ ) नक्षत्री.

ॐ नक्षत्रिणे नमः ।

भा०–(१)"अलातचक्रवद्यान्ति वातचक्रेरितानि तु । यस्माज्ज्योतींषि वहति प्रवहस्तेन स स्मृतः" इति. वि०पु०२–१२–२८ । (२) " एष भ्रमन् भ्रामयति चन्द्रादित्यादिकान् ग्रहान् । भ्रमन्तमनु ते यान्ति नक्षत्राणि च चक्रवत्" इति. ❀ वि०पु०२–९–२ । (३ )"शिशुमाराकृति प्रोक्तं यद्रूपं ज्योतिषां दिवि । नारायणो नयन्नाम्नां तस्याधारः स्वयं हरिः" इति–वि०पु०२–९–४ । ( नक्षत्री ). ❀ एवमखिलभुवनभारमनायासेन क्षमते वहतीति–

निर्व०–(१) "णीञ्, प्रापणे" णी नः.धा०भ्वादिः कौ०पृ०६०३ (२) "नियो निः" इति, निः. गुणः.अनिट् उणा०पा०४ कौ० पृ०६३४

प्रकरणान्तरेपि तु. अयं धात्वन्तरादपि व्युत्पादयिष्यते. (३) " णक्ष, गतौ" नः.धा०भ्वादिः कौ०पृ०४०१ (४) " अमिनक्षियजिवधिपतिभ्योऽत्रन्" उणा०पा०३ कौ० पृ०६२९ इति.अत्रन्. ❀ स्वस्याधारतया नक्षत्रं शिशुमाराकृति ज्योतिश्चक्रम् अस्मिन्नस्तीति- ( नक्षत्री ). (१) " णक्ष,गतौ " नः दन्त्यः, धा० भ्वादिः कौ०पृ०४०१ प्रागिव व्युत्पन्नान्नक्षत्रशब्दात् मत्वर्थीयः– ❀ अत इनिः. (२) " यस्य० " इति, लोपः. इन्नन्तलक्षणो–दीर्घ इत्यादि ६।४।१४८॥ कौ०पृ०५६ ❀ एवमखिलभुवनभारमनायासेन क्षमते वहतीति–

निरु०–४४२ शिशुमाराकृति प्रोक्तं यद्रूपं ज्योतिषां दिवि ।
तद्यस्यास्ति स ( नक्षत्री ) सनातो लोकपावनः ॥ ३३६ ॥

(४४३) क्षमः, (४४४) क्षामः,

ॐ क्षमाय नमः । ॐ क्षामाय नमः ।

भा०– ( क्षमः ).
( १ ) " यस्माज्ज्योतींषि वहति प्रवहस्तेन स स्मृतः" वि० पु०२–१२–२२ ।
इति. ❀
अवान्तरक्षये नक्षत्रान्तरैः क्षीणस्तिष्ठतीति– ( क्षामः ).
( १ ) " क्षै, क्षये " धा० भ्वादिः कौ०पृ०४२४
( २ ) " क्षायो मः" यथा,८।२।५३ ॥ कौ०पृ०५८८
(३)"तारकाशिशुमारस्य नास्तमेति चतुष्टयम्" वि०पु०२–९–५।
इति.

निर्व०– ( क्षमः ).
( १)"क्षमूष्, सहने " पचाद्यच्. ❀ धा०भ्वादिः कौ०पृ०३९९
अवान्तरक्षये नक्षत्रान्तरैः क्षामः क्षीण इति–( क्षामः ).
( १ ) " क्षै, क्षये " धा०भ्वादिःकौ०पृ०४२४
( २ )" आदेच उपदेशेऽशिति " इत्यैच आत्वम्. ६।१।४५॥ कौ० पृ०४२३
( ३ ) " गत्यर्थ०" इत्यकर्मकात् कर्तरि क्तः.३।४।७२॥कौ० पृ०५९६ निष्ठात इत्यनुवृत्तौ,
( ४ ) " क्षायो मः " इति, मः. ८।२।५३ ॥ कौ०पृ० ५८८
अनिट्. ❀

निरु०– ४४३ अनायासेन निखिलभारं च भुवनस्य यः ।
सहते स ( क्षमः ) प्रोक्तः षडर्णः क्षान्तिदायकः ॥ ३३७॥
४४४ अवान्तरलये कैश्चित् क्षीणस्तारागणैः स्मृतः ।
( क्षामो ) ध्रुवसमीपस्थश्चतुर्नक्षत्रसंयुतः ॥ ३३८ ॥

(४४५) समीहनः,॥

ॐ समीहनाय नमः।

भा०—(४) "यावन्मात्रे प्रदेशे तु मैत्रेयावस्थितो ध्रुवः। क्षयमायान्ति तावत्तु भूमेराभूतसंप्लवे" इति. ※ वि०पु०२-८-९७।
अथ सृष्टौ सर्वान् सर्वदा स्वेषु अधिकारेषु समीहयतीति—
(समीहनः).
(१) "त्वां भूतान्युपपर्यावर्तन्ते" इति. आरणम् २।
उद्योगे,
(२) "पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः। विचेष्टयति भूतानि क्रीडन्निव जनार्दनः" इति. भा०उ०६७-१०।
(३) "ध्रुवो यत्र प्रतिष्ठितः। एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम्" इत्यारभ्य, वि०पु०२-८-९८।
ध्रुवज्योतिर्मेघवृष्ट्यादिपरम्परया
(४) "इज्याफलस्य भूरेषा इज्या चात्र प्रतिष्ठिता"
(५) "ततश्चाज्याहुतिद्वारा पोषितास्ते हविर्भुजः" वि०पु० २-८-१०९।
इति यज्ञतत्साधनतत्फलावधित्वेन प्रतिपादितः; अतः—

निर्व०—अथ, सृष्टान् सर्वान् सर्वेष्वधिकारेषु समीहयति प्रेषयतीति—
(समीहनः).
(१) "ईह, चेष्टायाम्" धा०भ्वादिः कौ०पृ०४०७
संपूर्वः. णिच्. नन्द्यादिल्युः; ल्युड्वा बाहुलकादित्यादि
अनः. णिलोपः. यज्ञतत्साधनतत्फलसाधनतया प्रतिपादिततया यज्ञरूपोऽयमिति—

निरु०—४४५ स्वस्याधिकारे सर्वान् हि यस्समीहेत सृष्टिषु।
(समीहन) स्सविज्ञेयस्त्वष्टार्णः कार्यदायकः॥ ३३९॥

श्लो० ॥ ४८ ॥ {४४६ / ९७१} यज्ञ,(४४७) इज्यो,

ॐ यज्ञाय नमः । ॐ इज्याय नमः ।

भा०—( यज्ञः ).

(१) "यजयाचयतविच्छप्रच्छरक्षोनङ्" ३।३।९०॥ कौ० पृ० ६५८

(२) " यज्ञो वै विष्णुः " इति. ❀ य० वे० ।

कामाधिकारैरिन्द्रादिद्वारा इज्यामर्हतीति—( इज्यः ).

(१) " ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् । सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते " भा० शा० ३४६—२१ ।

(२) " येऽप्यन्यदेवताभक्ताः " गी० ९—२३ ।

(३) " वर्णाश्रमाचारवतो " इत्यादि. ❀ म० स्मृ० ।

निर्व०—( यज्ञः ).

(१) "यज, देवपूजासङ्गतिकरणदानेषु" भावे, धा० भ्वादिः कौ० पृ० ४३२

(२) "अकर्तरि च कारके०" इत्यनुवृत्तौ, ३।३।१९॥ कौ० पृ० ६४७

(३) "यजयाचयतविच्छप्रच्छरक्षो नङ्" इति, नङ्. निहतत्वान्नङ्. ३।३।९०॥ कौ० पृ० ६५८

(४) " स्तोश्चुनाश्चुः " इति, चुत्वेन नस्य ञः. ❀ ८।४।४०॥ कौ० पृ० १८

इन्द्रादिद्वारा इज्यां कामाधिकारयजनम् अर्हतीति—( इज्यः ). धातुः. प्राग्वत्. तत्स्त्रियामित्यनुवृत्तौ,

(१) " व्रजयजोर्भावे क्यप्" इति, स्त्रियां- ३।३।९८॥ कौ० पृ० ६५९ भावे क्यप्, संप्रसारणसंज्ञायाम् प्रागुक्तायाम्,

(२) " वचिस्वपियजादीनां किति " ६।१।१५॥ कौ० पृ० ४३२ इति, संप्रसारणं. यकारस्य इकारः.

निरु०—४४६ महायज्ञतया ( यज्ञः )—
४४७ ( इज्यः ) कर्मभिरर्चितः ॥ ३४० ॥

१ इन्द्रा ।

(४४८) महेज्यश्च,

ॐ महेज्याय नमः।

भा०—अकामहता महती इज्या अस्याव्यवधानेनेति—
(महेज्यः). ५
(१) "ये तु सर्वाणि कर्माणि" गी०१२—६।
(२) "मयि सर्वाणि कर्माणि" इत्यादि. ॐ गी०३—३०।
निर्व०—(२) "संप्रसारणाच" इति, पूर्वरूपम् ६।१।१०८॥
कौ०पृ०६०
एकादेशः. किन्वादगुणः. अदन्तलक्षणटाप्. दीर्घः. १
एवन्निष्पन्नात् इज्याशब्दात्,
(३) "तदर्हति" इत्यधिकारे, ५।१।६३॥कौ०पृ०२०१
(४) "दण्डादिभ्यो यः" इति, अर्हार्थे यस्ताद्धितः. ५।१।६६॥
कौ०पृ०३०१
अथवा. "छन्दसि च" इति प्रातिपदिकयक्तनिकः. अयं हि, १
पञ्चमवेदः ?
(५) "यस्य०" इत्यालोपः ६।४।१४८॥कौ०पृ०५६
(६) "हलो यमां यमि लोपः" इति, ८।४।६४॥कौ०पृ०१०
पाक्षिकः प्रथमयलोपः. ॐ
तथा महती अकामहता इज्या अव्यवधानेन यजनमस्येति— २
(महेज्यः)
प्राग्वदेव धातुप्रत्ययादि. सर्वं यप्रत्यय वर्जम्. व्युत्पादितान्-
[illegible] शिकः स्त्रियाम् उगिल्लक्षणो ङीप्. ततः,
(१) "स्त्रियाः पुंवद्०" ६।३।३४॥कौ०पृ०१६०
इत्यादिना पुंवद्भावः ततो महत आत्वादि. सांहितिक आद्गुणः. २

निर्व०—४४८ इज्या हि महती यस्य स (महेज्य) उदाहृतः।

## (४४९) क्रतुः,

ॐ क्रतवे नमः ।

---

भा०—पञ्च महायज्ञाः औपासनादयः; सप्त पाकयज्ञाः श्रौताग्निहोत्रादयः; सप्त हविर्यज्ञाश्च यज्ञपदेनोपात्ताः अग्निष्टोमादयः; सप्त सोमसंस्थाः क्रतवः, तैराराध्यः
क्रियते इति—
(क्रतुः). "कृञः कतुः" इति कतुः. उणा०पा०१ कौ०पृ०६१४
दीर्घकालबहुयजमानकर्मासचोदनालक्षणं सत्रम् तत्र चाराध्यतया सततं सीदतीति—

---

निर्व०—(२) "गोस्त्रियोः०" १।२।४८॥कौ०पृ०१२९
इति, उपसर्जनह्रस्वः. ❀
देवयज्ञादयः पञ्च महायज्ञाः; औपासनादयस्सप्त पाकयज्ञाः; अग्निहोत्रादयः सप्त हविर्यज्ञाः; अग्निष्टोमादयस्सप्त सोमसंस्थाः क्रतवः; ते च परिगणितयज्ञाः; तैर्यज्ञक्रतुभिराराध्यः क्रियत इति—
(क्रतुः).
(१) "डुकृञ्, करणे" धा०तना०कौ०पृ०४७३
(२) "कृञः कतुः" इति. कतुः. किद्वाद्गुणः. उणा०पा०१
कौ०पृ०६१४
(३) "इकः०" इति यण् ऋकारस्य रेफः. ❀ ६।१।७७॥कौ०
पृ०८
दीर्घकालबहुयजमानकर्मासोपवासचोदनालक्षणे सत्रे समाराध्यतया, सततं सीदति संगच्छत इति—

---

निरु०—४४९ अग्निष्टोमादयस्सप्त संस्थाः क्रतव ईरिताः ॥ ३४१ ॥
आराध्यः क्रियते तैस्तैरिति (क्रतु) रुदीरितः ।

(४५०) सत्रम्, (४५१) सतांगतिः, ।

ॐ सत्राय नमः । ॐ सतांगतये नमः ।

शा०—(सत्रम्). सीदतेः गतिकर्मणः,
(१)"गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः"उणा०पा०४कौ०पृ०६४०
एवमेष प्रवृत्तिधर्मनिष्ठानां गतिः. ॐ
अथ निवृत्तिधर्मनिष्ठानां—(सतांगतिः); तत्रैव,
(१) "निर्धूतदोषपङ्कानां यतीनां संयतात्मनाम् । स्थानं तत्परमं विप्र पुण्यपापपरिक्षये" इति. ॐ वि०पु०२—८—९९।

निर्व०—(सत्रम्).
(१)"षद्लृ, विशरणगत्यवसादनेषु" षस्तः.धा०भ्वादिःकौ०पृ०४२०
(२) "गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः" उणा०पा०४
कौ०पृ०६४० इति, त्रः. अनिट्.
(३) "खरिच" इति, चर्त्वम्. ८।४।५५॥कौ०पृ०२०
दस्य तः. आविष्टलिङ्गोयमि"त्यादि. एवमेष प्रवृत्तिधर्मनिष्ठानां गतिः.
अथ सतां निवृत्तिधर्मनिरतानां गतिः प्राप्य इति—
(सतांगतिः). गतिशब्दो हि,
(१) "गम्लृ, गतौ" ततः,धा०भ्वादिः कौ०पृ०४३०
(२) "अकर्तरि च कारके०" इत्यनुवृत्तौ, ३।३।१९॥कौ० पृ०६४७ स्त्रियां कर्मणि क्तिनि निहतत्वादिडभावे,
(३) "अनुदात्तोपदेश०" इत्यादिना अनुनासिक- ६।४।३७।
कौ०पृ०४३५

निरु०—४५० बहुकालानेकयजमानके विधिचोदिते ॥ ३४२ ॥
सत्रे सदाराध्यतया (सत्रं)स्यात्सीदतीति च ।
४५१ प्रवृत्तिधर्मनिष्ठानां गतिर्यस्य (सतांगतिः) ॥ ३४३ ॥
निवृत्तिधर्मनिष्ठानां गतिर्यस्य (सतांगतिः) ।

(४५२) सर्वदर्शी, (४५३) निवृत्तात्मा,

ॐ सर्वदर्शिने नमः । ॐ निवृत्तात्मने नमः ।

शां०—सर्वौ द्विविधावपि धर्मौ अध्यक्षयितुं शीलमस्येति—(सर्वदर्शी).
(१) "सुप्यजातौ णिनिस्ताच्छील्ये" इति. णिनिः. ❋ ३।२।७८॥ कौ० पृ० ५८२
तत्र निवृत्तिधर्माचार्यो नरनारायणादिः. परमवैराग्य-ख्यापनाय विषयेभ्यः प्रत्याहृतमनाः—(निवृत्तात्मा)—तद्वान्.

निर्व०—लोपं च व्युत्पादितः. प्रागेव अनन्तरादि व्युत्पादितात् सच्छ-ब्दात् आम्. संहितायाम् अनुस्वार पाक्षिकपरसवर्णावुक्तौ. ❋ सर्वौ द्विविधावपि प्रवृत्तिनिवृत्तिधर्मौ द्रष्टुमध्यक्षयितुं शीलमस्येति—(सर्वदर्शी).
(१) "दृशिर्, प्रेक्षणे" धा० भ्वादिः कौ० पृ० ४३०
(२) "सुप्यजातौ णिनिस्ताच्छील्ये" इति, णिनिः. ३।२।७८॥ कौ० पृ० ५८२
गुणो रपरः सर्वशब्दो व्युत्पादितः. तत इन्नन्तलक्षणो दीर्घ इत्यादि.
तत्र निवृत्तिधर्माचार्यो नरनारायणादिः.
निवृत्तो विमुक्तो वा, परमवैराग्यप्रख्यापनाय विषयेभ्यः प्रत्याहृतः, आत्मा— मनः, अस्येति—
(निवृत्तात्मा).

निरु०—४५२ धर्माधर्मौ च तौ सर्वावध्यक्षयितुमादरात्॥ ३४४ ॥
सर्वदा शीलमस्येति (सर्वदर्शी) ततः स्मृतः ।
४५३ निवृत्तिधर्माचार्यत्वात् विषयेभ्यो निवृत्तिमत् ॥ ३४५ ॥
मनो यस्य (निवृत्तात्मा) नरनारायणात्मकः ।

१ विमुक्तात्मा ।

{ ४७४ / ८२८ } सर्वज्ञो.

ॐ सर्वज्ञाय नमः।

भा०—(१) "अन्तर्निविष्टभावं च" मन्त्रं च.
(२) "आत्मध्यानपरायणाय" इति.
(३) "शान्तं हृत्स्थानिलमानन्दम्" इति च.
तथा सर्वात्मनात्मानं जानातीति—( सर्वज्ञः ).
(१) "तु ज्ञानं च स्वमात्मानं [illegible]" इति.

निरु०—(१) "अत, सातत्यगमने" धा०भ्वादिः कौ०पृ०३८३
अतो मनिनि व्युत्पादितो ह्यात्मशब्दः ? पूर्वत्र.
(२) "वृतु, वर्तने" निरुक्तः.धा०भ्वादिः कौ०पृ०४१२
(३) "गत्यर्थ०" इत्यादिना कर्तरि क्तः. ३।४।७१॥कौ०पृ०५९६
(४) "उदितो वा" इति, क्त्वायामिड्विकल्पात्. ७।२।५६॥कौ० पृ०६६८
(५) "यस्य विभाषा" इति निष्ठायां नेट्. अन्यत्र, ७।२।१५॥ कौ०पृ०५८७
(६) "मुच्लृ, मोक्षणे" निरुक्तः. धा०तुदा०कौ०पृ०४७०
ततः सापेक्षत्व अविवक्षितकर्मतया. अकर्मकात् क्तः.
इह कर्मणि वा अनिट्.
(७) "चोः कुः" इति झलि कुत्वम्. कः उभयत्रापि अगुणः. ततो—८।२।३०॥कौ०पृ०६८
बहुव्रीहिः. दीर्घः. ततो नान्तलक्षणो दीर्घ इत्यादि.
तथा आत्मानं सर्वं सर्वात्मानं जानातीति—( सर्वज्ञः ).
(१) "ज्ञा, अवबोधने" धा०क्र्यादिः कौ०पृ०४७७

निरु०-४७४ सर्वात्मना स्वमात्मानं यश्च जानाति केवलम्।३४६।२५
( सर्वज्ञ )स्स तु विज्ञेयस्समार्गो ज्ञानदो मनुः।

१ सर्वात्मानं, सर्वात्मनि। २ सुज्ञानश्च।

(४५५) ज्ञानमुत्तमम्, ॥ श्लो०॥४१॥ {८५६ / ४२८} सुव्रतः,

---

ॐ ज्ञानायोत्तमाय नमः। ॐ सुव्रताय नमः।

---

भा०—ज्ञायतेऽस्मिन् सर्वः परो वैष्णवो धर्म इति—
(ज्ञानमुत्तमम्).
(१) " पठन्तमनिशं शास्त्रं पञ्चरात्रपुरस्सरम् "
इति.
(२) " न मे पार्थास्ति कर्तव्यम् " ❀ गी०३–२२।
इति न्यायेन केवलपरार्थत्वात्. शोभनं व्रतमस्येति—
(सुव्रतः).

---

निर्व०—(२) "आतोऽनुपसर्गे कः" इति, कः. आल्लोपः.
३।२।३॥कौ०पृ०५७०
व्युत्पादि हि सर्वशब्दः? ❀ तथैव च—
उत्तमम् अत्युत्कृष्टं. सर्वः परो वैष्णवो धर्मः, ज्ञायतेऽस्मिन्निति
ज्ञानमिति—(ज्ञानमुत्तमम्).
एकन्नाम.
(१) " ज्ञा. अवबोधने " धा०त्र्या०कौ०पृ०४७७
अधिकरणे ल्युट्. अनः. दीर्घः. उत्कृष्टवाचिनः
उच्छब्दात् अतिशायने तमप्. चर्त्वम्.दस्य तः.
आविष्टलिङ्गोऽयमि"त्या"दि. ❀
स्वार्थकर्तव्याभावेन केवलपरार्थतया,
सु-शोभनं, व्रतं नियमोऽस्येति—(सुव्रतः).

---

निरु०—४५५ परश्च वैष्णवो धर्मः सर्वऽस्मिन् ज्ञायते यतः॥३४७॥
सर्वेषां श्रेयसां मूलं तज्ज्ञेयं (ज्ञानमुत्तमम्).
४५६ भक्तार्थं व्रतवान् योऽसौ (सुव्रत) स्स प्रकीर्तितः॥३४८॥

(४५७) सुमुखः,

ॐ सुमुखाय नमः।

भा०-(१)"एकपादेन तिष्ठन्तमाहरन्तं च मारुतम्। पक्षमासोपवासांश्च दिशन्तमनुचिन्तयेत्" इति. ❀

जपादावविकृतप्रसन्नमनोहरमुखत्वात्-(सुमुखः).

(१)"ओंकारलक्षणं मन्त्रं जपन्तान्तरलक्षितम्" इति.

(२)"कृष्णाय कमलदलामलनेत्राय" इति,

तन्मन्त्रवर्णः. ❀

निर्व०-व्रतिस्तौत्रः. अज्विधौ,

(१)"भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्" इत्यच्. ३।३।५६॥कौ०पृ०६५३

सुपूर्वो बहुव्रीहिः. ❀

जपादावविकृतप्रसन्नमुखतया वा,

वीरबाहुरित्यादावुत्तरत्र

प्रस्तोष्यमाणस्य अमृताहरणकर्मणोऽत्रापि

प्रतिपाद्यत्वेन तदानीमानन्दामृत-

संपूर्णवदनतया वा सु-मनोहरं. मुखमस्येति-(सुमुखः).

(१)"खनु. अवदारणे" धा०भ्वादिः कौ०पृ०४२१

(२)"अदिदणातेरजलो०" इति वर्तमाने, उणा०पा०५कौ०पृ०६४३

(३)"डित्खनेर्मुट् चोदात्तः" इत्यच्.अल् वा डित्. धातोः उणा०पा०५कौ०पृ०६४३

निर्व०-४५७ ध्यातॄणां विषये यस्य सुप्रसन्नं मनोहरम्।

मुखमस्तीति (सुमुखः)-

१ जपमानम, जपमानम। २ अमलिन। ३ वर्णात्।

(४५८) सूक्ष्मः,

ॐ सूक्ष्माय नमः ।

शा०—निरुपाधिकसमाधिसाक्षात्कृतसुसूक्ष्मत्वरूपत्वात्—( सूक्ष्मः ).

(१) " सूचेः स्मन् " उणा०पा०४कौ०पृ०६४०

इति, स्मन् प्रत्ययः.

(२) " सर्वे ब्रह्मपरायणाः "

इति. ❋

निर्व०—मुट् च. उदात्तः, टिलोपः. सुपूर्वो बहुव्रीहिः. ❋

निरुपाधिसमाधिसाक्षात्कृतसुसूक्ष्मरूपतया,

अन्यत्रासुरेषु निरूढाभिसन्धितया वा,

सूचयतीति—( सूक्ष्मः ).

(१) "सूच, पैशुन्ये" चुरादौ कथादिः. धा०चुरा०कौ०पृ०४८९

णिच्. अतो लोपः.

(२) "सूचेः स्मन् " इति, स्मन्—बाहुलकात्—उणा०पा०४कौ० पृ०६४०

(३) "लिङ्शिषि" इत्यत्र ३।४।११६॥कौ०पृ०३७४

लकारस्यैव स्मन्निति द्विसकारकनिर्देशमाश्रित्य, अयं तादिरेवेति व्याख्यानान्नेट्. एवमेवान्यत्रापीदृशे प्रदेशेऽवधेयम् णिलोपः.

(४) " चोः कुः" इति, झलि कुत्वम्. चस्य कः. ततः,८।२।३०॥ कौ०पृ०६८

(५) " आदेशप्रत्यययोः " ८।३।५९॥कौ०पृ०३४

इति, कोः परस्य प्रत्ययावयवस्य सस्य षः. ❋

निरु०—४५८ ( सूक्ष्म ) स्सूक्ष्मस्वरूपतः ॥ ३४९ ॥ अथवा ॥

असुरेषु निगूढाभिप्रायत्वात् ( सूक्ष्म ) उच्यते ।

(४५९) सुघोषः, (४६०) सुखदः,

ॐ सुघोषाय नमः। ॐ सुखदाय नमः।

भा०—औपनिषदः स्वाध्यायघोषः अस्येति—
(सुघोषः). ❀
एवं सदाचारसमाध्यनुष्ठापनेन तन्निष्ठेभ्यः फलं परमसुखं ददातीति—
(सुखदः). ❀

निर्व०—सु—शोभनो घोषः औपनिषदस्वाध्यायघोषः
मथनाद्भुतगोचरसुरासुरादिघोषो वाऽस्येति—
(सुघोषः).
(१) " घुषिर्, अविशब्दने " धा० चुरा० कौ० पृ० ४८५
चुरादिः.
(२) " अनित्यश्चास्य णिच् "
(३) " घुषिरविशब्दने " ७।२।२३॥ कौ० पृ० ५९३
इति निष्ठायामिण्निषेधाल्लिङ्गात् तदभावे. अत्र लघूपधगुणः णिचि तु,
(४) " एरच् " इति भावे अच्. णिलोपो विशेषः ३।३।५६॥
कौ० पृ० ६५३
सुपूर्वो बहुव्रीहिः. ❀
एवं सदाचारसमाध्यनुष्ठापनेन तन्निष्ठेभ्यः. सुखं परमं फलम्,
अमृतदानादिना सुरेभ्यः सुखं वा ददातीति—(सुखदः).
(१) " डुदाञ्, दाने " धा० जुहो० कौ० पृ० ४५१
(२) " आतोनुपसर्गे कः " ३।२।३॥ कौ० पृ० ५७०

निरु०—४५९ स्वाध्यायघोषो यस्यास्ति (सुघोषः) स तु कीर्तितः
॥ ३५० ॥
समाध्यनुष्ठापनेन तदनुष्ठानशीलिनाम्।
४६० सुखं बहु ददातीति (सुखदः) परिकीर्तितः ॥ ३५१ ॥

(४६१) सुहृत्, ।

ॐ सुहृदे नमः ।

भा०—कुत इदं परोपकारव्यसनित्वम्; यतः,

(सुहृत्).

अनुपकारिण्यपि किमस्य भविष्यति?

किं करवाणीति शुभाशंसि शोभनहृदयत्वं सुहृत्त्वम्. ❀

निर्व०—इति, कः.

आल्लोपः.

(३) "खनु, अवदारणे" धा०भ्वादिः कौ०पृ०४२१

सुपूर्वः.

(४) "अन्येष्वपि दृश्यते" ३।२।१०१॥कौ०पृ०५८५

इत्यपिशब्दात् सर्वोपाधिव्यभिचारार्थात् उपपदान्तरकारकान्तरयोः धात्वन्तरादपि डः.

टिलोपः.

उभयत्रापि. ❀

कुत इदं परोपकारव्यसनित्वम्. तत्रोच्यते,

यतोऽनुपकारिण्यपि सु-शोभनं किमस्य भविष्यति; किं वा करवाणीति शुभाशंसि, हृदयमस्येति—

(सुहृत्).

(१) "हृञ्, हरणे" धा०भ्वादिः कौ०पृ०४२३

(२) "वलिमलितनिभ्यः कयन्" उणा०पा०४कौ०पृ०६३६

इति वर्तमाने.

निरु०—४६१ किमस्मिन् करवाणीति ह्यपकारिणि शोभनम् ।
यस्यास्ति हृदयं सोयं (सुहृदि) त्यभिधीयते ॥ ३५२ ॥

(४६२) मनोहरो,

ॐ मनोहराय नमः।

भा०— एवं निसर्गसौहार्देन तेषां मनो हरतीति—
(मनोहरः).
(१) "हरतेरनुद्यमनेऽच्" ॐ ३।२।९॥कौ०पृ० ५७२
जिनाश्च तेषां क्रोधादयोऽनेनेति—

निर्व०—(३) "वृहोष्पुक्दुकौच" उणा०पा०४कौ०पृ०६३६
इति, कयन्. धातोः दुगागमश्च. कित्त्वान्न गुणः.
इत्थं निष्पन्नस्य हृदयशब्दस्य सुपूर्वस्य इह बहुव्रीहौ,
(४) "सुहृद्दुर्हृदौमित्रामित्रयोः" ५।४।१५०॥कौ०पृ०१७१
इति,मित्रार्थे हृद्भावो निपात्यते.
पाक्षिकमवसाने चर्त्वम्.ॐ
एवं निसर्गसौहार्देन, असुरव्यामोहनीयनिजरूपत्वेन वा तेषां मनोऽन्तःकरणं हरतीति—
(मनोहरः).
(१) "हृञ्,हरणे" धा०भ्वादिः कौ०पृ० ४२३
(२) "हरतेरनुद्यमनेऽच्" ३।२।९॥कौ०पृ०५७२
इति, अच्. गुणः रपरः.
(३) "मन,ज्ञाने" धा०दिवा० कौ०पृ० ४५६
(४) "सर्वधातुभ्योऽसुन्" उणा०पा०४ कौ०पृ०६४०
इति, असुन्. सोरुत्वम्.

निरु०—४६२ एवं निसर्गसौहार्दात्तेषां हृदयहारकः।(मनोहरः)
समाख्यातो ह्यष्टार्णः शान्तिदायकः॥३५३॥

(४६३) जितक्रोधो,

ॐ जितक्रोधाय नमः ।

भा०—( जितक्रोधः ).

अथवा, अमृताहरणे.

(१) "आनन्दामृतसंपूर्णवदनेनेन्दुकान्तिना ।
कलशाकृतिरूपेण करस्थेन विराजितम्"

इति. ❀

( सुमुखः ).

असुरेषु गूढाभिप्रायत्वात्—

( सूक्ष्मः ). ❀

सुरासुरादिघुष्यमाणमथनाद्भुतत्वात्—

( सुघोषः ). ❀

अमृतदानादिना सुरेभ्यः सुखं ददातीति—

( सुखदः ). ❀

तत्र हेतुः—

( सुहृत् ). ❀

असुरव्यामोहनीयरूपत्वात्—

( मनोहरः ). यथा,

(१) "त्रैलोक्यविस्मयकरं कान्ताकृतिधरं स्मरेत्"

इति. ❀

तेन विस्मयविहस्तचेतसामसुराणां सुरेषु क्रोधो जित इति—

निर्व०—(५) "हशि च" ६।१।११४॥ कौ० पृ० २७

इति, उत्वम्. आद्गुणः. ❀

निरु०—४६३ रक्षसां देवविषये येन क्रोधो विनिर्जितः ।
स (जितक्रोध) आख्यातो ह्यष्टार्णः क्रोधनाशकः ॥ ३५४ ॥

१ हावहनिज्ञ ।

(४६४) वीरबाहु र्,

ॐ वीरबाहवे नमः।

भा०—(जितक्रोधः).
स्फुरत्कटककेयूरमालमथनखेलाऽहमहमिकाव्यतीहारविक्रान्तबाहवः सहस्रमस्येति—
(वीरबाहुः). ३

निर्व०—तथा जितः क्रोधः. तदुपलक्ष्यः क्रोधलोभादिः.
विस्मयविहस्तचेतोऽसुरकर्तृकसुरकर्मकक्रोधो वा अनेनेति—
(जितक्रोधः).
(१) "क्रुध, क्रोधे" धा० दिवा० कौ० पृ० ४५७
भावे घञि गुणः.
(२) "जि, जये" कर्मणि क्तः. धा० भ्वादिः कौ० पृ० ४०५
अनिट्. अगुणः. ॐ
अथ केवलममृताहरणधर्माः वीराः. मथनखेलाऽहमहमिका व्यतीहारविक्रान्ताः बाहवः भुजाः सहस्रम्. अस्येति—
(वीरबाहुः).
(१) "बाधृ, विलोडने" धा० भ्वादिः कौ० पृ० ३८२
(२) "कुर्भ्रश्च" इतिप्रकरणे. "अर्जिदृशिकम्यमिपंसिबाधामृजिपशि तुग् धुग् दीर्घहकाराश्च" उणा० पा० १ कौ० पृ० ६१०
इति, कुः. धस्य हश्च,
(३) "वीर, विक्रान्तौ" चुरादौ कथादिः अदन्तः. कौ० पृ० ४९०
(४) "आधृषीयः" णिच्. अतो लोपः.

निरु०—४६४ विक्रान्ता बाहवो यस्य (वीरबाहु) स्तु स स्मृतः।

(४६५) विदारणः,॥ श्लो० ॥ ५० ॥ (४६६) स्वापनः,

---

ॐ विदारणाय नमः । ॐ स्वापनाय नमः ।

---

भा०—दिव्यहेतिभिः राहुमुखान् विदारितवानिति—
(विदारणः).
(१) "समग्रोग्रभयविदारणाय"
इति, मन्त्रवर्णात्. ❀
नष्टशिष्टानपि चारुचतुरस्मितमधुरकटाक्षभ्रुविलासैः स्वापयति
परवशयतीति—
(स्वापनः).

---

निर्व०—ततः पचाद्यच्. णिलोपः.
बहुव्रीहिः. ❀
दिव्यहेतिभिः राहुप्रमुखान् विदारयतीति—
(विदारणः).
(१) "दॄ, विदारणे" धा०क्र्यादिः कौ०पृ०४७६
विपूर्वः. णिच्. वृद्धिराकारः. रपरत्वम्.ततो ल्युः,
ल्युड् वा बाहुलकादित्या[॥६६॥]दि. अनः.
णिलोपः. णत्वम्. ❀
नष्टशिष्टानपि चारुचतुरस्मितमधुराक्षिभ्रूविभ्रमैः स्वापयति शाययति
परवशयतीति—
(स्वापनः).
(१) "ञिष्वप्, शये" षस्सः. धा०अदा०कौ०पृ०४४५

---

निरु०—४६५ हेत्याद्यैरायुधैर्दिव्यैर्दारणाच्च (विदारणः) ॥३५५॥
४६६ कटाक्षभ्रूविलासाद्यैः नष्टशिष्टाञ्जनानपि ।
योऽसौ सम्यङ्मोहयति (स्वापनः) परिकीर्तितः ॥ ३५६ ॥

(४६७) स्ववशो,

ॐ स्ववशाय नमः।

भा०—(१) "मदविह्वलनेत्रं च देवमुन्निन्नयौवनम्" इति. ❋

तेषु सुतेषु स्वकीयैस्सह स्वैरविहारात्—

(स्ववशः).

(१) "सर्वेश्वराय" इति.तन्त्रे.

निर्व०—णिच्. उपधावृद्धिः.

ततो ल्युः, ल्युड्वा बाहुलकादित्यादि. अनः.

णिलोपः. ❋

तेषु सुतेषु स्वकीयैस्सह स्वैरविहारात् स्वेषामात्मीयानां वा अनन्याधीनतया स्वस्य वा नान्यस्य वशोऽधीन इति—

(स्ववशः).

(१) "वश, कान्तौ" धा०अदा० कौ०पृ० ४४८

पचाद्यच्.

(२) "अकर्तरि च कारके०" ३।३।१९॥ कौ०पृ०६४७

इत्यनुवृत्त्या घञपवादस्य

(३)"वशिरण्योरुपसंख्यानम्" इत्यौपसंख्यानिकस्य. ३।३।५८॥ कौ०पृ०६५३

अपः-अत्रानवकाशात्. कर्तृत्वाविवक्षायां तु स एवाप्.

(४) "स्वृ, शब्दोपतापयोः" धा०भ्वादिः कौ०पृ०४२५

(५) "अन्येष्वपि०" इति, डः टिलोपः. ❋६।२।१०१॥ कौ०पृ०५८५

निरु०—४६७ स्वकीयैस्सह सुतेषु तेषु स्वैरविहारवान्।
भवति (स्ववश) स्सोऽपि नान्याधीनत्वदो मनुः॥३५७॥

## (४६८) व्यापी, (४६९) नैकात्मा,

ॐ व्यापिने नमः। ॐ नैकात्मने नमः।

भा०— सुरासुरमन्दरवासुकिप्रभृतिषु शक्त्याप्यायनाय व्यापनात्—
( व्यापी ). ❀
तदाननैः ब्राह्मकौर्ममोहिनीमुखै रूपैः—
( नैकात्मा ). ❀

---

निर्व०— सुरासुरमन्दरवासुकिप्रभृतिषु शक्त्याप्यायनाय व्याप्तुं शीलमस्यास्तीति—.
( व्यापी ).
( १ ) " आप्लृ, व्याप्तौ " विपूर्वः. धा० स्वादिः कौ०पृ०४६२
( २ ) " सुप्यजातौ णिनिस्ताच्छील्ये " ३।२।७८॥कौ०पृ०५८२
इति. णिनिः.
वेः इकारस्य यण्. यकारः.
इन्नन्तलक्षणो दीर्घ इत्यादि. ❀
तदाननाः नैके ब्राह्मकौर्ममोहिनीमुखाः
इह चात्मानो रूपाण्यस्येति—
( नैकात्मा ).
( १ ) " अत, सातत्यगमने " धा०भ्वादिः कौ०पृ०३८३
अतो मनिणि व्युत्पादित आत्मशब्दः. एतेः,
( २ ) " इणशीकापा० " उणा०पा०३ कौ०पृ०६२७

---

निरु०—४६८ देवरक्षोमन्दरेषु वासुकिप्रभृतिष्वपि। आप्यायनाय
शक्त्या च ( व्यापी ) स्याद्व्यापनादसौ। ३५८॥
४६९ तदाननैर्ब्रह्मकौर्ममोहिन्याद्यवतारकैः।
( नैकात्मे ) ति श्रुतस्सम्यङ्मुन्यर्णो बहुरूपदः॥ ३५९॥

## ( ४७० ) नैककर्मकृत्, ।

ॐ नैककर्मकृते नमः ।

भा०—मथनधारणवैरिविदारणसुधादानाद्यनेककर्मा—( नैककर्मकृत् ). ❀

अथ धर्मात्मा पुरुषार्थव्यवस्थापनाय सर्वान्तर्वसतीति—

निर्व०—इत्यादिना कनि गुणे च व्युत्पादितो नैकशब्दः. नञः, नशब्दस्य वा समासः. पूर्वत्र.

( ३ ) " नभ्राण्नपात्० " ६।३।७५॥ कौ०पृ०१४८

इत्यस्योपलक्षणतया नञः प्रकृतिभावः.

अन्यत्र तु, अनञ्त्वादप्रसक्त एव नलोपः. वृद्धिः. दीर्घः. ततो नान्तलक्षणो दीर्घ इत्यादि. ❀

तथानैकानि अनेकानि मथनधारणवैरिवारणसुधादानादीनि कर्माणि कार्याणि करोतीति—( नैककर्मकृत् ).

( १ ) " डुकृञ्, करणे " धा०तना० कौ०पृ०४७३

( २ ) " सुकर्मपाप० " ३।२।८९॥कौ०पृ०५८४

इत्यादिना क्विपि तुक्.

अगुणः.पुनरप्ययमेव धातुः.

( ३ ) " सर्वधातुभ्यः० " उणा०पा०४कौ०पृ०६३१

इति, मनिन्. गुणो रपरः. अनिट्. नलोपः. नैकशब्दः प्राग्वत्. कर्मधारयः. ❀

अथ धर्मात्मा मन्त्रवर्णानुरोधात् पुरुषार्थव्यवस्थापनाय सर्वान्तर्वसतीति—

निरु०—४७० समुद्रमथने नैककर्मकृ ( नैककर्मकृत् )।

१ वारण ।

## ( ४७१ ) वत्सरो, ( ४७२ ) वत्सलो,

### ॐ वत्सराय नमः । ॐ वत्सलाय नमः ।

ना०—( वत्सरः ).
( १ ) "वसेश्च" इति, सरन् प्रत्ययः. उणा०पा०३ कौ०पृ०६२८
( २ ) " सर्वान्तश्चारिणे धर्मात्मने "
इति हि तन्मन्त्रवर्णः. ❁
तत्र हेतुः.
( वत्सलः ).
वत्सान् स्वोत्सुकान् कामयते इति—
( १ ) " वत्सांसाभ्यां कामबले " ५।२।९८॥कौ०पृ०३२७
इति, लच् प्रत्ययः.
स हि चिरं परिचीयमानेष्वपि शरणागतेषु, कस्यापि हेतोः

---

निर्व०—( वत्सरः ).
( १ ) " वस, निवासे " धा०भ्वादिः कौ०पृ०४३२
( २ ) " अशेस्सरन् " " वसेश्च " उणा०पा०३कौ०पृ०६२८
इति, सरन्. अनिट्.
( ३ ) " सस्सि ० " इति, तः. ❁ ७।४।४९॥कौ०पृ०४१०
तत्र हेतुरुच्यते. वत्साः तदुपलक्ष्याः स्वोत्सुकाः काम्यमानाः
शरणागताः अस्य सन्तीति—
( वत्सलः ).

---

निरु०—४७१ पुरुषार्थस्थापनाय सर्वान्तर्वसनाच्च यः ॥ ३६० ॥
धर्मात्मा ( वत्सर ) स्स स्यान्मुन्यर्णोऽजीश्वरो मनुः ।
४७२ सर्वस्यान्तर्निवसने हेतुस्स्याद् ( वत्सलः ) स्मृतः ॥ ३६१ ॥
वत्से धेनोरिव यतो वत्सलश्शरणागते ।

( ४७३ ) वत्सी,

ॐ वत्सिने नमः ।

भा०—सद्यः प्रसूतेष्विव वत्सेषु,
सहुंकाराः,
सपयस्संस्नवस्तनवेदनाः,
किंकर्तव्यताऽकुलाः धेनव इव, संभाव्यतीति, रावणेऽपि प्रसिद्धम्;
(२)“विदितस्सहि धर्मज्ञः शरणागतवत्सलः” रा०सुं०२०—२०।
इति.
तच्छीलभगवदुपकरणत्वाद्धि प्रसिद्धस्यापि धर्मस्य ताच्छील्यम्? ❀
एवं नित्यपोष्यात्मवर्गवत्सभूयस्त्वात्— ( वत्सी ). ❀

निर्व०—( १ )“वद, व्यक्तायां वाचि” धा०१वादिः कौ०पृ०४३४
(२)“वृतृवदिहनिकमिकषिभ्यस्सः”उणा०१।०३कौ०पृ०६२७
इति, सः,
( ३ )“ नितुत्र० ” ७।२।९॥कौ०पृ०६०८
इति, नेट्, चर्त्वम्.
एवंव्युत्पन्नात् वत्सशब्दात्,
( ४ )“ वत्सांसाभ्यां कामबले ” ५।२।९८॥कौ०पृ०३२७
इति, कामवति मत्वर्थीयो लच्.
प्रसिद्धं हि, वात्सल्यं भगवतश्शरणागतेषु
धेनूनामिव सद्यः प्रसूतेषु वत्सेषु?
वात्सल्यशीलभगवदुपकरणत्वात् धर्मोऽपि तच्छीलः. ❀
तथा वत्साः तद्वुलक्ष्याः नित्यपोष्याः आत्मवर्गाः
भूयांसोऽस्य सन्तीति—( वत्सी ).

निरु०— ४७३ नित्यपोष्यात्मगुणवद्वत्सभूयस्त्वतस्सदा॥३६२॥
( वत्सी ) स्याद्धि विशेषेण षडर्णो गोप्रदो मनुः ।

(४७४) रत्नगर्भो,

ॐ रत्नगर्भाय नमः।

भा०—(१) "अत इनिठनौ" इति भूमानित्ययोगयोः इनिः, ❀ ५।२।११५॥ कौ०पृ० ३३०

तेषु ❀ धनायद्भ्यः प्रदेयधनाधिक्यात्— ❀ ७।४।३४॥

(रत्नगर्भः).

यथा,

(१) "कामार्थानुद्वहन्तं च शङ्खचक्रच्छलेन तु"

इति. ❀

तत्तदिष्टधनादाने आशुकारित्वात्—

निर्व०—(१) "वद, व्यक्तायां वाचि" धा०भ्वादिः कौ०४३४

ततो व्युत्पादितात् वत्सशब्दात् ❀ भूमनित्ययोगयोः

मत्वर्थीयोऽत्र इनिः.

(२) "यस्य०" ६।४।१४८॥ कौ०पृ०५६

इति, लोपः. इन्नन्तलक्षणो दीर्घ इत्यादि. ❀

रत्नं तदुपलक्ष्यं धनायद्भ्यः. ❀

प्रदेयमाधिक्यं धनं गर्भोऽस्य तद्गर्भः

तद्वाद्ध्रियमाणमनेनेति वा—

(रत्नगर्भः).

(१) "गॄ, निगरणे" धा०क्र्यादिः कौ०पृ०४७६

(२) "अर्तिगॄभ्यां भन्" उणा० पा० ३ कौ०पृ०६३१

इति भनि व्युत्पादितः अयं शब्दः.

निरु०—४७४ धनायद्भ्य यथाकामं प्रदेयधनवत्त्वतः ॥ ३६३ ॥

(रत्नगर्भ) स्समाख्यातो ह्यष्टार्णो धनदो मनुः।

१ वृपबर्हं च।

(४७८) धनेश्वरः, ॥

ॐ धनेश्वराय नमः।

---

भा०—(धनेश्वरः).
आशुकर्मणि ह्यश्नोतेर्वरट्! ❀
दत्ताख्यर्थकामो दुर्विपयान्निवर्त्य नाग्यां हिनधर्मरक्षणात्—

---

निर्व०—(१) "धनु,क्रीडायाम्" धा०भ्वादिः कौ०पृ०४२०
अन्तर्भावितण्यर्थश्च- अत्रास्य.
(२) "धापृवस्यज्यतिभ्यो नः" उणा० पा०३ कौ०पृ०६२५
इति प्रकरणे,
(३) "रमेस्त च" उणा०पा०३ कौ० पृ० ६२५
इति, नः. तश्चान्तादेशः. अनिट्. ❀
क्षिप्रकारितया धनस्य तत्तदिष्टविषयस्य ईश्वरः दाने
आशुकारीति—
(धनेश्वरः).
(१) "अशू,व्याप्तौ संघाते च" धा० स्वादिः कौ०पृ०४६३
(२) "क्लिशेरीच्चोपधायाः०" उणा०पा०५ कौ०पृ०६४४
इति वर्तमाने,
(३) "अश्नोतेराशुकर्मणि वरट् च" उणा०पा०५,कौ०पृ०६४४
इति,वरट्.चादुपधाया ईत्वं च.
(४) "नेट्०" इति,नेट्. ७।२।८॥कौ०पृ०५८१
(५) "धन, धान्ये" धा० जुहो०कौ०पृ०४५२
च्छान्दसश्चायम्. अस्त्येव चात्र च्छन्दस्त्वम्. उक्ता वा अस्य

---

निरु०— ४७५ तत्तदिष्टद्रव्यदाने शीघ्रकारी (धनेश्वरः) ॥३६४॥

श्लो०॥८१॥ ( ४७६ ) धर्मगुब्, ( ४७७ ) धर्मकृद्,

ॐ धर्मगुपे नमः। ॐ धर्मकृते नमः।

भा०– ( धर्मगुप् )–
( १ ) " साधुमार्गे स्थितानां च संयच्छन्तं धिया च तौ " इति.
एवं सर्वान् धार्मिकयन्नकारणादनुग्रहहेतुं धर्मं
करोतीति–( धर्मकृत् ).

निर्व०– आपावानपि प्रयोगे गतिः. पचाद्यच्. गुणः. ❀
दत्तावप्यर्थकामौ दुर्विषयान्निवर्त्य. ताभ्यां हितधर्मरक्षणात् धर्मं गोपायति रक्षतीति– ( धर्मगुप् ).
( १ ) " गुप्, रक्षणे " क्विप्. धा० भ्वादिः कौ० पृ० ३९७
( २ ) " गुपूधूपविच्छिपणिपनिभ्य आयः " इत्यायप्रत्ययो न भवति. ३।१।२८॥ कौ० पृ० ३९७
( ३ ) " आयादय आर्धधातुके वा " ३।१।३१॥ कौ० पृ० ३९७
इति तस्य आर्धधातुकविवक्षायां वैकल्पिकतया, इह तदभावपक्षाश्रयणात्. अगुणः.
( ४ ) " धृञ्, धारणे " धा० भ्वादिः कौ० पृ० ४२३
( ५ ) " अर्तिस्तुसुहु० " उणा० पा० १ कौ० पृ० ६१६
इत्यादिना मन्. गुणो रपरः. अनिट्. ❀
इत्थं सर्वान् धार्मिकयन् अकारणादनुग्रहदेहं धर्मं करोतीति– ( धर्मकृत् ).

निरु०–४७६ कामं दत्वाऽप्यर्थकामौ निवर्त्य विषयान्तरात्।
ताभ्यां हि तस्य धर्मस्य रक्षणाद् ( धर्मगुप् ) स्मृतः ॥ ३६५ ॥
४७७ सर्वं जनं धार्मिकयन् लीलानुग्रहलक्षणम्।
धर्मं करोति यस्माद्धि तस्माद् ( धर्मकृदु ) च्यते ॥ ३६६ ॥

१ देहम्।

## (४७८) धर्मी, (४७९) सत्.

ॐ धर्मिणे नमः । ॐ सते नमः ।

भा०—"धर्मसामान्यममलमनादिनिधनं विभुम् । दुर्लभं यत्प्रबुद्धानां तत्प्रसादधिया विना" इति. ❀

प्रसिद्धोऽपि धर्मोऽस्य सर्वसाधारणोपकरणमिति—

(धर्मी). ❀

उक्तधर्मप्रशस्तत्वात्—(सत्).

निर्व०—(१) "डुकृञ्, करणे" धा०तना०कौ०पृ०४७३

क्विपि तुक्. अगुणः. धर्मशब्दो व्युत्पादितः. ❀

सर्वसाधारणोपकरणं प्रसिद्धोऽपि धर्मोऽस्यास्तीति—

(धर्मी).

व्युत्पादिताद्धर्मशब्दात् प्रशंसायाम्.

(१) "संज्ञायां मन्माभ्याम्" ५।२।१३७॥कौ०पृ०३३३

इति मत्वर्थीयः इनिः इह ठनः असमावेशार्थः.

(२) "यस्य०" इति. लोपः. ६।४।१४८॥कौ०पृ०७६

इन्नन्तलक्षणो दीर्घ इत्यादि. ❀

इत्थं प्रशस्तधर्मतया, धर्मिणां सताम् अपक्षयविनाशादिरहिततोपहितनिरुपाधिकसद्भावसाद्गुण्याभ्यां सत् सदिति वेदनार्हमिति—

(सत्).

(१) "अस्, भुवि" धा०अदा०कौ०पृ०४४४

ततः, "वर्तमाने लट्" ३।२।१२३॥कौ०पृ०३६६

---

निरु०—४७८ साधारणोपकरणं धर्मो यस्यास्ति केवलम् ।
स वै (धर्मी) ति विज्ञेयष्षड्वर्णो धर्मदो मनुः ॥ ३६७ ॥
४७९ निरुपाधिकसद्भावान्नित्यसाद्गुण्ययोगतः ।
(स) च्छब्देनोच्यते विष्णुर्वेदवेदान्तपारगः ॥ ३६८ ॥

(४८०) (सत्) अक्षरम्,

---

ॐ अक्षरसते नमः।

---

भा०—(१) "प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते" इति. गी०१७-२६।
तस्य च प्राशस्त्यं साध्यस्य भगवतस्सत्त्वात्;
तस्य च सत्त्वं निरुपाधिकात् सद्भावात्, साद्गुण्याच्च.
(२) "सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते" इति. ❀ गी०१७-२६।
एवम् नित्यनिरुपाधिकसद्भावसाद्गुण्याभ्याम्—
{सत् / अक्षरम्} अस्य च विशेषणम्.
क्षरं हि क्वचिद्देशे काले वा व्याहन्यते?
ताद्रूप्यं यथा;
(१) "अपक्षयविनाशाभ्यां परिणामर्धिजन्मभिः। वर्जितश्शक्यते वक्तुं यस्सदाऽस्तीति केवलम्" इति.वि०पु०-४-३०।

---

निर्व०—इत्यतो लडिति वर्तमाने,
(२) "लटश्शतृशानचौ०" ३।२।१२४॥कौ०पृ०५९९
इति पुनर्लड्ग्रहणात् अधिकविधानार्थात् क्वचित् प्रथमासामानाधिकरण्येऽपि शता इत्यादि. शेषं पुरस्तादेव न्यरूपि.
(३) "लिङ्गमशिष्यम्" इत्यादि. ॥ भाष्ये ॥ ❀
तथा अधर्मिणाम् असताम् अप्रशस्तपापातिप्रसक्त्यनुगुणनित्यनिरवधिकभवदुरितप्रदतया,तेषां कुमनीषिकया संगत्या असदिति वेदनार्हमिति-

---

निरु०—४८०अपक्षयविनाशादिवर्जितो (ऽक्षर) उच्यते।
तस्मा(दक्षरसदि)ति ह्येकनामा च शस्यते॥ ३६१॥

---

१ निरुपाधिकसद्भावनित्य। २ अस्यैव। सदसत्क्षरमक्षम्. सत्—अक्षरम्—अक्षरसत्. । सदक्षरमसत् क्षरम् इति केषांचित्पाठः-(सत्) पदमर्थवशान्मूले द्विरावृत्तम् सकृदेव पाठ्यम्।

(४८१) (असत्), (४८२) असत्क्षरम्, ।

ॐ असते नमः । ॐ असत्क्षराय नमः ।

भा०– एतदेव हि श्रूयते,

(२) "सदेव सोम्येदमग्र आसीत्" इति. ❋ छां०उ०६–२–१।

अप्रशस्तपापप्रसक्तेषु–

{असत्, क्षरम्.} च

असतां नित्यनिरवधिकभवदुरितप्रदत्वात्. आम्नातं हीदं द्वयम्.

(१) "एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति, एष एवाऽसाधुकर्म कारयति तं यमधो निनीषति" कौ०उ०३–९।

(२) "असच्च सच्चैव च यद्विश्वं सदसतः परम्" इति. ❋

तत्र साधुष्वपराधाननन्तानपि दृष्ट्वा न दण्डयति क्षमते चेति नैतावदेव, किंतु तेषाम्–

निर्व०– (असत्).

प्राग्वदेव धातुप्रत्ययादि; नेलोपस्त्विहेति तु विशेषः. नाम्नोः सांहितं जश्त्वम्.

इदमेव द्वयं विशेष्यते. तत्र च प्रतियोगिप्रक्रमप्रकरणात्, विपरिवृत्तिप्रत्यासत्त्या च प्रथमम् असद्विशेष्यते.

येषाम् असत् तेषां तत एव क्षरम्– क्षरणार्हमिति–

(क्षरम्).

(१) "क्षर,संचलने" धा०भ्वादिः कौ०पृ० ४१९

पचाद्यच्. लिङ्गं प्राग्वत्. ❋

निरु०– ४८१ असतां यस्सदाऽनन्तभवाख्याऽघप्रदानतः ।
(असदि) त्युच्यते सद्भि (४८२) स्तस्मादेव(क्षरं)च सः॥३७०॥

१ असत्यानित्य । २ परम् ।३ (असत्)पदं सत्पदवत् । नञ्समासनलोपा-विह विशेष इति ध्येयम् ।

(४८३) अविज्ञाता.

ॐ अविज्ञात्रे नमः।

भा०– (अविज्ञाता)–

(१)"उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते" रा०अ०१–१०। इतिवत्, प्रपन्नापराधापरिगणनं गुण एव. अतो हि तत्प्रसादाः,

(२) "सर्वज्ञतामिवमुपालभामहे त्वं ह्यज्ञ एवाश्रितदोषजोषणः" इति.

ये पुनः ज्ञप्तिमात्रत्वात् सर्वज्ञस्य सर्वथा अज्ञत्वपरं व्याचक्षते; ते श्रुत्याचार्यसेवौचित्यन्यायबधिराः शोच्याः न निरसनार्हाः.

---

निर्व०– अथ पारिशेष्यात्. सद्विशेष्यते. येषां सत्; तेषां तत एव क्षरं नेति–

(अक्षरम्).

क्षरशब्दो हि निरुक्तः? ततो नञ्समासः. नञो नलोपः. लिङ्गं भागवत्. यद्वा. सविशेषणे इमे द्वे नामनी, अक्षरं- सत्. क्षरम्– असत्. इति उक्त एवार्थः- अस्मिन् पक्षेऽत्र उभयत्रापि अर्थवशात् विशेषण-विशेष्ययोः यथासंख्यं नेष्यते. ❀

तत्र साधुष्वपराधाननन्तानपि दृष्ट्वा न दण्डयति क्षमते चेति. नैतावदेव परंतु तदपराधेष्वपेक्षया परुषभाषणेऽपि प्रत्युत्तरादानेन तेषां विज्ञाता नेति–

(अविज्ञाता).

---

निरु०–४८३ प्रपन्नकृतपापानां किञ्चिदप्यविचारणात्।
(अविज्ञाने)ति कथितः बुधैस्तद्गुणपारगैः ॥ ३७१ ॥

---

१ नामैव ।

## ( ४८४ ) सहस्रांशुः,

ॐ सहस्रांशवे नमः ।

भा०— अथ च सर्वज्ञः—( सहस्रांशुः )—

सहस्रम्- अपरिमिताः, अंशवः- ज्ञानानि, अस्येति. ननु आश्रितापराधस्यनिरिक्तसर्वज्ञ इति विप्रतिषिद्धम्, न तैरपराधेष्वतात्पर्येणापेक्षा स्वज्ञानं विवक्षिता ? उपेक्षते हि तेषां दोषम्

( १ ) " दोषो यद्यपि तस्य स्यात् " इति. रा०यु०१८—३ ।

(२)"अपि चेत्सुदुराचारो भजते मामनन्यभाक्" इति.गी०९-३०।

न चैवं पापफलनियतन्नियामकयमतद्यातनाद्यो भगवत्क्षमायामपि कृतापराधं बाधेरन्, तेषामपि तदधीनत्वात् इत्यभिप्रेत्याह—

निर्व०—( १ ) " ज्ञा, अवबोधने विपूर्वः, तृच्. धा०क्र्यादिः कौ०पृ०४७७

अनिट्. नञ्समासः, नञो नलोपः. अनड्वादि. ❀

अथ सर्वज्ञः सहस्रं सहस्रसंख्याकाः अपरिमिताः, अंशवः तद्रूपलक्ष्याणि ज्ञानानि, अस्येति—( सहस्रांशुः ).

( १ ) " अश ,व्याप्तौ " धा०स्वादिः कौ०पृ०१६३

( २ ) "कुर्भश्च " इति प्रकरणे, उणा०पा० १कौ० पृ०६१०

(३)"स्वरुशङ्कंशुपीयुनीलङ्गुलिगु" उणा०पा०१कौ०पृ०६११

इति कुः; नुम् च निपात्यते. अनुस्वारः. यदि त्वंशुशब्दः. प्रायेणात्र न पठ्यते; तदा बाहुलकात् , " कुर्भश्चे " ति चकाराद्वा अश्नोतेरपि कुः. पृषोदरादित्वात् वर्णागमः. सहस्रशब्दो व्युत्पादितः,दीर्घः. यथोक्तव्याख्याने

निरु०—४८४अंशवो बुद्धयः प्रोक्ताः सहस्रं सन्ति यस्य ते ।
(सहस्रांशु) रिति ख्यातो ह्यज्ञार्णो धीप्रदो मनुः॥३७२॥

१ नतावदपराधेष्वतात्पर्यरूपोपेक्षाद्य ।

(४८५) विधाता,

---

ॐ विधात्रे नमः ।

---

भा०– ( विधाता )–आह हि यम एव,

( १ ) " अहममरवरार्चितेन धात्रा सम इति लोकहिताहिते नियुक्तः " इत्यादि. वि०पु०३–७–१५ ।

अत्र, ब्राह्म, वैष्णव, वामन, नारसिंह, लैङ्ग, वैष्णवधर्म, श्रीविष्णुतत्त्व, भागवतप्रभृतिषु, यमकिंकरसंवादस्सर्वो द्रष्टव्यः.

यद्येष दोषसहः, किं तर्हि हेयाद्वर्गादुपादेयस्य व्यावर्तकम्; तत्राह.

---

निर्व०– नाम्नोरविरोधः. ❀

प्रपन्नापराधविषये, सत्यां हि स्वक्षमायां, पापफलनियततन्नियामकयमतद्यातनादीनामकिञ्चित्करतायै, तेषाम् आर्थिस्वाधीनताप्रख्यापनाय तानपि विदधातीति–( विधाता ).

( १ ) " डुधाञ् , धारणपोषणयोः " धा०जुहो०कौ०पृ०४५१

विपूर्वः.तृच्. अनिट्. अनङित्यादि.

यद्येष दोषसहः.

किं तर्हि हेयादुपादेयस्य व्यावर्तकं; तत्रोच्यते कृतमुपादेयानां लक्षणम् आभिमुख्यमात्रलक्षणं चिह्नमनेनेति–

---

निरु०–४८५ तादधीन्याद्यमादीनां (विधाते) त्युच्यते बुधैः ॥३७३॥

(४८६) कृतलक्षणः, ॥

---

ॐ कृतलक्षणाय नमः ।

---

भा०—( कृतलक्षणः ).
कृतं हि तेन लक्षणमुपादेयानाम्,
(१) " मित्रभावेन संप्रामम् " रा०यु०—१८—३ ।
(२) " सम्यग्व्यवसितो हि सः " इति. गी०९—३० ।
स्वाभिमुख्यमात्रं.श्रीहरिवंशे, भा०हरि० ।
(३) " चक्राङ्किताः प्रवेष्टव्या यावदागमनं मम । नामुद्रिताः प्रवेष्टव्या यावदागमनम्मम " भा०हरि० ।
श्रीविष्णुधर्मे.
(४) " भवतां भ्रमतामत्र विष्णुसंश्रयमुद्रया । विनाऽऽज्ञाभङ्गकृन्नैव भविष्यति नरः कश्चित् " ॥
श्रीविष्णुतत्त्वे,
(५) "चक्रादिधारणं पुंसां परसंबन्धवेदनम् । पतिव्रतानिमित्तं हि वलयादि विभूषणम् " । पां०वि०त० ।
इति.

---

निर्व०—( कृतलक्षणः ).
(१) " लक्ष, दर्शनाङ्कनयोः " चुरादिः. णिच्.धा०चुग०कौ० पृ०४८४
(२) " धापृवस्यज्यतिभ्यो नः " उणा०पा०३कौ०पृ०६२५
इति प्रकरणे,
(३) " लक्षेरट् च " उणा०पा०३कौ०पृ०६२५
इति, नः. तस्याडागमश्च. णिलोपः. णत्वम्.
(४) " डुकृञ्, करणे " धा०तना० कौ०पृ०४७३

---

निरु०—४८६ कृतं हि लाञ्छनं येन चोपादेयेषु जन्तुषु ।
परमात्मा हृषीकेशः स तु स्यात् ( कृतलक्षणः ) ॥ ३७४ ॥

## श्लो० ॥ ५२ ॥ (४८७) गभस्तिनेमिः,

---

### ॐ गभस्तिनेमये नमः ।

---

ता०—एवं वा वैष्णवलक्षणम् अन्यद्धेयलक्षणम्; अतो न वैषम्यनैर्घृण्यादिदोषप्रसक्तिः.
एवं कृतलक्षणाः यमतत्किंकराणाम् अप्रधृष्याः; यतस्तद्रक्षकोऽयम्.
(गभस्तिनेमिः). भास्वत्सहस्रारचक्रः.

---

निर्व०—कर्मणि क्तः. अगुणः. अनिट्. इदमुपादेयलक्षणम्;
अन्यच्च हेयलक्षणम्.
अतो न वैषम्यनैर्घृण्यप्रसक्तिः. एवं कृतलक्षणाः यमतत्किंकराणामप्रधृष्याः कुतः; यतस्तद्रक्षकोऽयम्. ❀
गभस्तिः मयूखः, तन्मयो भास्वरो नेमिः तदुपलक्षितं सहस्रारचक्रमस्येति—
(गभस्तिनेमिः).
(१) "णमु, प्रह्वत्वे शब्दे च" धा०भ्वादिः कौ०पृ०४३०
(२) "णो नः" ६।१।६५॥कौ०पृ०३८६
छन्दोभावानाकलनेन. ❀
(३) "-किकिनौ लिट् च" ३।२।१७१॥कौ०पृ०६०६
इति वर्तमाने,
(४) "भाषायां धाञ्कृसृगमिजनिनमिभ्यः" वार्ति० कौ०पृ०६०६
इति, किकिनौ. स्वरे भेदः. तौ च लिड्वत्. ततः,
(५) "लिटिधातोरनभ्यासस्य" ६।१।८॥कौ०पृ०३६९

---

निरु०—४८७ ज्योतिर्विशिष्टनेम्या यल्लक्षितं चक्रमुत्तमम् ।
(गभस्तिनेमि) र्यस्यास्ति नवार्णः पापनाशकः ॥ ३७५ ॥

भा०—गभस्तिः दीप्यते ज्योतिर्मयं नेमिलक्षितं चक्रं, यस्येति—
यथा;
( १ ) " वसति मनसि यस्य सोऽव्ययात्मा पुरुषवरस्य नतस्य हृष्टिगते। तव गतिरथ वा ममास्ति चक्रप्रतिहतवीर्यबलस्य सोऽन्यलोक्यः " वि०पु०३–७–३५।
इति. ❀

---

निर्द०—इति द्वित्वम्.
अभ्यासमंज्ञायां हलादिःशेषः. ततः,
( ६ ) " अत एकहल्मध्येऽनादेशादेर्लिटि " ६।४।१२०॥कौ० पृ०३८२
इति लिण्निमित्तकादेशरहितत्वात् एत्वाभ्यासलोपौ. यद्वा,
( ७ ) " णीञ् प्रापणे " धा०भ्वादिः कौ०पृ०४२३
( ८ ) " णो नः " ६।१।६५॥कौ०पृ०३८६
( ९ ) " नियो मिः " उणा०पा०४ कौ०पृ०६३४
इति.मिः.गुणः. अनिट्. ❀
( १० ) " भस, भर्त्सनदीप्त्योः " धा०जुहो०कौ०पृ०४५२
ह्वादिः छान्दसश्चायम्.
( ११ ) " अस्त्येव हीह च्छन्दोभावः" धनवदस्यापि उक्तयुक्त्या भाषायामपि वा प्रयोगः
( १२ ) " वसेस्तिः " उणा०पा०४ कौ०पृ०६४०
इति, तिः बाहुलकात् भसेरपि भवति.
( १३ ) " तितुत्र० " ७।२।९॥कौ०पृ०६०८
इति, नेट्.
पृषोदरादित्वात् वर्णागमेन गः. ❀

(४८८) सत्त्वस्थः,

---

ॐ सत्त्वस्थाय नमः ।

---

भा०—किं च कर्मणो निमित्तस्याऽप्यभावाच्च यमाद्यप्रधृष्याः कुतस्तदभावः यस्मादेष तेषाम्—

(सत्त्वस्थः).

(१) "सुपि स्थः" इति, कः. ३।२।४॥ कौ० पृ०५७१

(२) "हृदये स्थितः"

(३) "हृदि यदि भगवाननादिरास्ते हरिरपि चक्रगदाधरोऽव्ययात्मा। तदघमघविघातकर्तृभिन्नं भवति कथं सति चान्धकारमर्के" वि०पु० २-२-२५॥ ॥अभियुक्तः॥

(४) "स्फटिकमणिशिलाऽमलः क्व विष्णुर्मनसि नृणां क्व च मत्सरादिदोषः" वि०पु०-३-७-२२।

इत्यादि. तथा श्रीविष्णुधर्मे.

(५) "किंकरा दण्डपाशौ वा न यमो न च यातनाः। समस्तास्तस्य यस्यात्मा केशवालम्बनस्सदा" वि०पु० २-२-२८।

श्रीवामने प्रह्लादः. पं०वि०ध०

---

निर्व०—इतोप्येते यमादेरप्रधृष्याः. यदेष तेषां तत्प्रधर्षणहेतुकर्मनिर्लुञ्छनाय सत्त्वे हृदये तिष्ठतीति—

(सत्त्वस्थः).

(१) "ष्ठा, गतिनिवृत्तौ" षस्सः. धा० भ्वादिः कौ०पृ०४२४

"तोः ष्टुः"

(२) "आतोऽनुपसर्गे कः" ३।२।३॥ कौ०पृ०५७०

---

निरु०—४८८ सत्त्वे हृदि स्थितत्वाद्धि (सत्त्वस्थः) समुदीरितः।

(४८९) सिंहो,

ॐ सिंहाय नमः ।

भा०—(१) " तथाऽन्यदुक्तं नरसत्तमेन इक्ष्वाकुणाभक्तियुतेन नूनम् । ये विष्णुभक्ताः पुरुषाः पृथिव्यां यमस्य ते निर्विषया भवन्ति " वा०पु० ।
इति. ❀
यदिदमविदन्तो यमादयः तान् प्राकृतवत् धर्षयेयुः;
तान् हिनस्तीति—
(सिंहः). यथा,

निर्व०—इत्यतः कः इत्यनुवृत्तौ,
(३) " सुपि स्थः " ३।२।४॥कौ०पृ०५७१
इति, कः. आल्लोपः.
(४) " अस्, भुवि " धा०अदा०कौ०पृ०४४४
अतश्शतरि व्युत्पादितो हि सच्छब्दः ? ततः,
(५) " तस्य भावस्त्वतलौ " ५।१।११९॥कौ०पृ०३०९
इति, त्वस्तद्धितः—
जश्त्वचर्त्वे. ततो मत्वर्थीयः अर्शआद्यच्.
(६) " यस्य० " ६।४।१४८॥कौ०पृ०५६
इति, लोपः. ❀
यदिचेदमविदन्तः, यमादयः स्वभक्तान् प्राकृतवत् प्रधर्षयेयुः ?
तदा तानपि सिञ्चति हिनस्ति वा हन्तीति—
(सिंहः).

निरु०—४८९ हरिभक्तानविज्ञाय दण्डे प्रयतयानसान् ॥ ३७६ ॥
हिनस्ति च यमादीन् यः स (सिंहः) परिकीर्तितः ।

आ०—( १ ) " प्रभवति संयमने ममापि विष्णुः " इति.
वि०पु०३—७—१५ ।

अतश्च लैङ्गे मार्कण्डेयः,

( २ ) " वासुदेवपरं दृष्ट्वा वैष्णवं दग्धकिल्बिषम् । देवा विनीतास्संयान्ति प्रणिपत्य यथागतम् ॥ दृष्ट्वा यमोपि वै भक्तं वैष्णवं दग्धकिल्बिषम् । उत्थाय प्राञ्जलिर्भूत्वा ननाम रविनन्दनः ॥ तस्मात् संपूजयेद्भक्त्या वैष्णवान् विष्णुवत्परः । स याति विष्णुसालुक्यं नात्र कार्या विचारणा " लै०पु० ।

तत्रैव कौशिकोपाख्याने भगवद्गायकान्;

( ३ ) " कौशिकादींस्तथा दृष्ट्वा ब्रह्मा लोकपितामहः । प्रत्युद्गम्य यथान्यायं स्वागतेनाभ्यपूजयत् " लै०पु० ।

इत्युपक्रम्य प्रस्तुतम्. यथेष्टं द्रष्टव्यम्.

श्रीविष्णुतत्त्वे नरकप्रस्तावे,

( ४ ) " हरिपादप्रपन्नानां दूरीभूताः स्वभावतः । तेषां तु सर्वभूतानां हरिरेव पतिर्यतः ॥ वैष्णवेभ्योपि बिभ्यन्ति देवा नरकरक्षकाः । अवमानक्रिया तेषां संहरत्यखिलं जगत् ॥ कालेनैतावता तेषु नरकेषु हि कश्चन । न दृश्यते महावीर्यप्रभावात्परमेष्ठिनः " पं०वि०त० । इति.

---

निर्व०—( १ ) " षिच, क्षरणे " धा०तुदा० कौ०पृ०४७०
पस्सः.

( २ ) " हिसि, हिंसायाम् " वा. धा०रुधा०कौ०पृ०४७१
पूर्वत्र धातूनामनेकार्थत्वादुक्तार्थोपपत्तिः.
अन्यत्र न यत्नः- उभयत्रापि यथासंख्यम्.

( ३ ) " सिचेस्संज्ञायाम्० " उणा०पा०५कौ०पृ०६४४
इति. के. हे च अन्तादेशे नुमि, तथा पृषोदरादिलक्षणे.

---

१ प्रणता भू. ।

(४९०) भूतमहेश्वरः, ।

ॐ भूतमहेश्वराय नमः ।

भा०— श्रीविष्णुधर्मे—

(१) " नरके पच्यमानस्तु यमेन परिभाषितः । किं त्वया नार्चितो देवः केशवः क्लेशनाशनः " इत्यादि.

यथोक्ते समर्थः यस्मात्—

( भूतमहेश्वरः ).

निर्व०— वर्ण विपर्यये, इदित्त्वान्नुमि, पचाद्यचि च, उभयत्राप्यनुस्वारे सिंहशब्दः प्रागेव हि व्युदपादि ? ❋

यतो भूतानां ब्रह्मयमादय ईश्वराः;

अयं तु तेषामपि ईश्वरतया

महांश्चासौ ईश्वरो नियन्ता चेति—

( भूतमहेश्वरः ).

(१) " ईश,ऐश्वर्ये " धा०अदा०कौ०पृ०४३८

(२) " स्थेशभास० " ३।२।१७५ ॥ कौ०पृ०६०६

इत्यादिना वरच्.

(३) " नेड्० " ७।२।८॥ कौ०पृ०५८१

इति, नेट्. महच्छब्दो व्युत्पादितः. भूतशब्दोपि. संहितायां गुणः. ❋

निरु०—४९० भूतेश्वराणां सब्रह्मयमादीनां नियन्त्रणात्॥३७७॥

कारणं जगतां यश्च स स्याद् ( भूतमहेश्वरः ) ।

(४९१) आदिदेवो, (४९२) महादेवो,

---

ॐ आदिदेवाय नमः। ॐ महादेवाय नमः।

---

भा०— भूतेश्वराणां ब्रह्मयमादीनामपि नियन्ता तेषामपि कारणं तदभिभवपटुप्रतापश्च.

(आदिदेवः).

आदिः द्योतमानश्चेति.

(१) "भीषास्माद्वातः पवते" तै०उ०आ० ८—१।

इत्यादि. श्रुतेः

तैः क्रीडनकैः कन्दुकादिभिरिव क्रीडतीति—

(महादेवः).

---

निर्व०—तेषामप्यादिः कारणं च असौ देवः तदभिभव-पटुप्रतापतया द्योतमानश्चेति—

(आदिदेवः).

(१) "दिवु,क्रीडादौ०" धा०दिवा०कौ०पृ०४५२

पचादिपाठादच्. गुणः.

(२) "डुदाञ्,दाने" आङ्पूर्वः. धा०जुहो०कौ०पृ०४५१

(३) "उपसर्गे घोः०" ३।३।९२॥ कौ०पृ०६७८

इति किप्रत्यये आल्लोपे चायमवस्तादेव न्यरूपि.

महानत्यधिकः, पूज्यो वा स चासौ देवः तैः क्रीडनकैः क्रीडं-श्चेति—

(महादेवः).

---

निरु०—४९१ (आदिदेवो) हि भवति ब्रह्मादिभ्यो विशेषतः॥३७८॥

४९२ ब्रह्मादिभिः क्रीडति यो (महादेव) स्स उच्यते।

(४९३) देवेशो, (४९४) देवभृत्, (४९५) गुरुः, ॥

ॐ देवेशाय नमः । ॐ देवभृते नमः । ॐ गुरवे नमः ।

भा०—तेषां स्वामी च—
(देवेशः). ❀
तेषां यथार्हविनियोगक्षमः तान् बिभर्तीति—
(देवभृत्). ❀
तेषां वेदैः स्वस्वाधिकारबोधनात्—
(गुरुः).

निर्व०—प्राग्वदेव धात्वादि सर्वं. न्यरूपि च महच्छब्दः. ❀
तेषां च यथार्हविनियोगक्षमतया देवानां ब्रह्मादीनाम् ईशः स्वामीति—
(देवेशः).
(१) "ईश, ऐश्वर्ये" धा०अदा०कौ०पृ०४३८
इगुपधलक्षणः कः. व्युत्पादि हि देवशब्दः ? एवमुत्तरत्रापि.
गुणः. ❀
तथा तान् देवान् बिभर्तीति—
(देवभृत्).
(१) "डुभृञ्, धारणपोषणयोः" धा०जुहो० कौ०पृ०४५०
क्विपि तुक्. अगुणः. ❀
तेषां वेदैस्स्वाधिकारबोधनाद्गुरुराचार्य इति वा,
कालेनानवच्छेदात्, सर्वेषामपि गुरुः अधिक इति वा—
(गुरुः).

निरु०—४९३ ब्रह्मादीनां च (देवेशो) यथार्हविनियोजकः॥३७९॥
४९४ ब्रह्मशक्रयमादीनां भरणाद् (देवभृत्) स्मृतः ।
४९५ ब्रह्मेन्द्रवरुणादीनां (गुरु) र्वेदोपदेशनात् ॥ ३८० ॥

श्लो० ॥ ९३ ॥ ( ४९६ ) उत्तरो,

ॐ उत्तराय नमः ।

भा०—(१) "यो वै देवांश्च प्रहिणोति तस्मै" श्वे० उ० ५–१–१४।
(२) "हरिगुरुवशगोऽस्मि" इत्यादि; वि० पु० ३–७–१५।
(३) "अग्निस्सुवर्णस्य गुरुः" इत्यादि च.
(४) "सर्वेषामपि गुरुः कालेनानवच्छेदात्" इति. पातं० सू० १-१-२७।
इदं गुरुत्वं हयशिरोपाख्याने प्रसिद्धम्.
(५) "जग्राह वेदानखिलान् रसातलगतान् हरिः। प्रादाच्च ब्रह्मणे राजन् ततः स्वां प्रकृतिं गतः" इति; "रसातलाद्येन पुरा समाहृतास्समस्तवेदाः" इत्यादौ च. ❀
एवं ब्रह्मादेरापदुत्तारणात्—
( उत्तरः ).

निर्द०— (१) "गॄ, निगरणे" धा० तुदा० कौ० पृ० ४६८
कुम्भकरणे,
(२) "कृग्रोरुच्च" उणा० पा० १ कौ० पृ० ६१०
इति, गुः. उकारश्चान्तादेशः. रपरत्वम्. अगुणः. ❀
एवं ब्रह्मादेरापदुत्तारणतया, ते विपदमुत्तरन्त्यस्मादिति वा, ब्रह्मादिस्तुत्यनन्तरं देवकार्यार्थमुत्थिततर इति वा—
( उत्तरः ).
पूर्वत्र,
(१) "तॄ, प्लवनतरणयोः" धा० भ्वादिः कौ० पृ० ४२७
उत्पूर्वः,
(२) "अकर्तरि च कारके०" इत्यनुवृत्तौ; ३।३।१९॥ कौ० पृ० ६४७

निरु०—४९६ आपदुत्तारणाद्योऽसौ ब्रह्मादे ( रुत्तरः ) स्मृतः ।

१ पूर्वेषा ।

(५४६) गुह्यो,

ॐ गुह्याय नमः।

भा०— नित्ययोगे इनिः, कनकशब्दः अप्राकृतयथोक्तविलक्षणद्रव्यपरकल्पकः. ❀

एवं परमोपनिषद्विषयेण वपुषा—

(गुहः).

(१) "शंसिदुहिगुहिभ्यो वेति वक्तव्यम्" ३।१।१०९॥कौ० पृ०५५९

इति क्यप्. ❀

निर्व०— अनेकार्था हि धातवः, तद्योगं चान्यथापि. अतः उक्तार्थोपपत्तिः. फलितार्थकथनं चेदम्.

(२) "आतोनुपसर्गे०" इति, ३।२।३॥कौ०पृ०५७०

कः. आलोपः. अङ्गिर्गत्यर्थः. इदित् नुम्. अनुस्वारपरसवर्णौ. पचाद्यच्.

(३) "कनी, दीप्तिकान्तिगतिषु" धा० भ्वादिः कौ०पृ०४०१

(४) "कुन् शिल्पिसंज्ञयोरपूर्वस्यापि" उणा०पा०२कौ०पृ०६२१

इति कुन्. कनकः. दीर्घः. ततो नित्ययोगे मत्वर्थीयो अत इनिः, "न कर्मधारयान्मत्वर्थीयः" इति न्यायो हि न नियत इत्युक्तम्.

(५) "यस्य०" इति लोपः. ६।४।१४८॥कौ०पृ०५६

इन्नन्तत्वात् दीर्घः इत्यादि. ❀

एवं परमोपनिषद्विषयेण वपुषा गुह्यते संव्रियत इति—

(गुह्यः).

(१) "गुहू, संवरणे" धा० भ्वादिः कौ०पृ०४२२

(५४७) गभीरो,

ॐ गभीराय नमः ।

भा०— तदभिव्यक्तैश्वर्यमहागाम्भीर्यः—

(गभीरः).

(१) "गभीरगम्भीरौ" उणा० पा०४ कौ०पृ०६३३ इति गाहेरीरन् प्रत्ययः. ह्रस्वत्वम् . भकारादेशश्च निपात्यते. तत्संपृक्तो हि . कतकसंकलितमिव सलिलम् , अनाद्यविद्याकलुषोपि संसारी प्रसीदति? किं पुनः स्वभाव- दीप्तो भगवान्. ❋

निर्व०—(२) "शंसिदुहिगुहिभ्यो वा०" ३।१।१०९॥कौ०पृ०५५९ इति काशिकानुरोधात् क्यप्. अगुणः.

(३) "प्रशस्यस्य श्रः" ५।३।६०॥ कौ० पृ०३४३

(४) "ईडवन्दवृशंसदुहां ण्यतः" इति,६।१।२१४॥कौ०पृ०७२७

सूत्रद्वयबलात् शंसेस्सिद्धम्. इतरयोस्तु मूलं मृग्यम्. अस्य तु अयं निर्देश एव वा मूलम्. ❋

तदभिव्यक्तैश्वर्यमहागाम्भीर्य इति—

(गभीरः).

(१) "गम्लृ, गतौ" ईरन्प्रकरणे, धा०भ्वादिः कौ० पृ० ४३०

(२) "गभीरगम्भीरौ" इति, ईरन् उणा० पा०४कौ०पृ०६३३ भश्चान्तादेशः. पक्षे नुम् च निपात्यते. इह च नुम्वर्जमन्यत्सर्वम्. तत्संपर्के कतकसंकलितसलिलवत् अनाद्यविद्याकलु- षस्यापि संसारिणः प्रसादे, किमु वक्तव्यम् [illegible] भगवतः. ❋

निरु०— ५४७ महागाम्भीर्ययुक्तत्वाद् (गभीर) इति कथ्यते ।

१ परम ।

(५४८) गहनो . (५४९) गुप्तश्च .

**ॐ गहनाय नमः। ॐ गुप्ताय नमः।**

भा०— अथ च—
( गहनः ). दुरवगाहः. नहि स्वच्छसुमहान्तर्वृत्तोपि रत्नाकरो जानुदघ्नः? ॐ
( गुप्तः ). च तद्धारकैः सुगुप्तिः. ॐ
कुत्र किंवा लक्षणो गुप्तः;
( १ ) " तमसः परमो धाता शङ्खचक्रगदाधरः " इति.गा० गु० ११४–१५।

**निर्व०—अथ यथा स्वाच्छयसुमहान्तर्वृत्तोपि रत्नाकरो न जानुदघ्नः; तथा गहनः दुरवगाहो भवतीति—( गहनः ).**
( १ ) " गाहू , विलोडने " धा० भ्वादिः कौ० पृ०१०७
( २ ) " बहुलमन्यत्रापीति युच्" उणा०पा०३ कौ०पृ०६२६
बाहुलकाद्ध्रस्वश्च. अनः. ॐ
तथैव च तद्धारकैः गुप्तः सुरक्षितो भवतीति—( गुप्तः ).
( १ ) " गुपू, रक्षणे " कर्मणि क्तः. धा०भ्वादिः कौ०पृ०३६७
( २ ) " यस्य विभाषा " इति तेनात्र नडभावः. ७। २।१५॥ कौ० पृ० ५८७
( ३ ) " आयादयः० " ३ । १ ।३१ ॥ कौ०पृ०३९७
इति वैभाषिकतया नायप्रत्ययः. अगुणः. ॐ
कुत्र किंलक्षणो गुप्तः. तदेवोच्यते-चक्रगदे तदुपलक्ष्याणि च पूर्वोक्तनित्यरूपविभूषणवत् पञ्चशक्तिमयदिव्यायुधानि तानि धरतीति—

निरु०—५४८ चार्ल्दुरवगाहत्व द् (गहनः) परिकीर्तितः॥४२३॥
५४९ अन्यदुरवबोधो यो ( गुप्त ) इत्यभिधीयते ।

(५५०) चक्रगदाधरः, ॥ श्लो० ॥५१॥ (५५१) वेधाः,

ॐ चक्रगदाधराय नमः । ॐ वेधसे नमः ।

भा०—(चक्रगदाधरः). उक्तनित्यरूपविभूपणवत् पञ्चशक्तिमयनित्यदिव्यायुध इत्यर्थः. ❀

एवं विविधमनन्तमहाविभवं नित्यं विदधातीति—
(वेधाः).

निर्व०—(चक्रगदाधरः).

धरतेः पचाद्यचि व्याख्यातोयं शब्दः.
(१) "गद, व्यक्तायां वाचि" धा० भ्वादिः कौ०पृ०३८६ पचाद्यच्. स्त्रियामतष्टाप्. ईत्यादि.
(२) "चक, तृप्तौ, प्रतिघाते च" रक्प्रकरणे, धा० भ्वादिः कौ०पृ०३८८
(३) "चकिचम्योरुच्चोपधायाः" उणा०पा०५ कौ० पृ० ६४३
इति, रक्. बाहुलकादत्रोत्वं न नेडिति नेट्. यद्वा, करोतेः क इति, वर्तमाने करोतेश्च चेति कः. कृञो द्वित्वं च. बाहुलकादभ्याससंज्ञा. उरदत्वं- रपरत्वं- हलादिश्शेषः, अगुणः. यण्. ऋतो रेफः. अथवा तत एव बाहुलकात् भिचेस्संज्ञायां कोन्यत्रापि भवति. द्वित्वं च. उताहो चञर्थे कविधानमिति कः. द्वित्वप्रकरणे,
(४) "के कृञादीनामुपसंख्यानम्"
इति द्वित्वमित्यादि. ❀
एवंविधमनन्तमङ्गलं महाविभवं विदधातीति—
(वेधाः).

निरु०—५५०पञ्चशक्तिमद्दिव्यहेतिः स स्या-(चक्रगदाधरः) ॥४२४॥
५५१ महाविभवकल्याणं सततं विदधाति यः ।
भक्तेभ्यः परमं (वेधाः) षडर्णो मङ्गलप्रदः ॥ ४२५ ॥

(५५२) स्वाङ्गो,

ॐ स्वाङ्गाय नमः ।

भा०—(१) " विधाञो वेध च " इति, उणा०पा० ४ कौ० पृ०६४२
असिप्रत्ययो वेधादेशश्च.
(२) "तमसः परमो धाता " इति, ❋ रा०यु०१२०—१४।
यथा तत्रैव समग्रस्वासाधारणमङ्गं छत्रचामरादिसर्वाधिराज्यपरिवर्हजातं नित्यमस्येति—
(स्वाङ्गः). ❋
प्राकृतैः उत्पत्तिमरणादिभिः न जिता

---

निर्व०— " डुधाञ्, धारणपोषणयोः " धा०जुहो०कौ०पृ०४५१
विपूर्वः.
(२) " मिथुनेऽसिः " इत्यतोऽसिरिति वर्तमाने, उणा० पा० ४ कौ०पृ०६४२
(३) " विधाञो वेध च " इति, उणा०पा०४ कौ०पृ०६४२
असिः असुनोपवादः स्वरे भेदः. उपसृष्टस्य वेधादेशश्च.
तत्राकार उच्चारणार्थः असन्तलक्षणो दीर्घः इत्यादि. ❋
तमसः परमो ह्ययं धाता, तत्रैव स्वमात्मीयं स्वासाधारणमङ्गं छत्रचामरादिसर्वाधिराज्यपरिवर्हजातमस्येति—
(स्वाङ्गः).
अङ्गिर्गत्यर्थः. इदित्. नुम्. अनुस्वारपरसवर्णौ. पचाद्यच्.
(१) " स्वृ, शब्दोपतापयोः " धा० भ्वादिः कौ०पृ०४२५
(२)"अन्येष्वपि०"इति डः.टिलोपः.३।२।१०१ ॥कौ०पृ०५८५

---

निरु०— ५५२ स्वासाधारणमङ्गं हि छत्रादिपरिवर्हणम् ।
यस्यास्ति नित्यं स (स्वाङ्गः) षडर्णः परिवारदः ॥ ४२६ ॥

(५५३) अजितः,

ॐ अजिताय नमः ।

भा०—यथोक्तद्रव्योपादाना पुरी अजिता अस्यास्तीति—(अजितः). अर्श आद्यजन्तं वा.

(१) "पुरं हिरण्मयीं ब्रह्मा विवेशापराजिता" इति. आ०१-११६ ।

तन्मयमेघमेचकचारुवर्णः—

निर्व०—उक्तं चैतत् प्रागेव. दीर्घः. बहुव्रीहिः. यद्वा,

(३) "तत्पुरुषः समानाधिकरणः०" १।२।४२ ॥ कौ० पृ०१४४

ततो नित्ययोगे मत्वर्थीयोर्श आद्यच्.

(४) "यस्य०" इति लोपः. ६।४।१४८॥कौ०पृ०५६

(५) "न कर्मधारयात्०" इति न्यायो ह्यनित्यः. ❋

यथोक्तद्रव्योपादानाऽपराजिताख्यपुरीकतया. न-नास्ति जिता, प्राकृतैरुत्पत्तिमारणादिभिः पराजितास्येति वा,

तैर्न जिता अजिता- अपराजिताख्यप्रख्याता पुरी सास्यास्तीति वा—(अजितः).

(१) "जि, जये" क्तः. अगुणः. अनिट्.धा०भ्वादिः कौ०पृ०४०५

(२) "स्त्रियाम्" अतष्टाप् ४।१।४ ॥ कौ०पृ०८८

दीर्घः. पूर्वत्र, नञ्पूर्वो बहुव्रीहिः. उपसर्जनह्रस्वः.

उत्तरत्र. तत्पुरुषः. उभयत्रापि नञो नलोपः.

तत्पुरुषपक्षे मत्वर्थीयः अर्श आद्यच्.

(३) "यस्य०" इत्यालोपः. ❋ ६।४।१४८॥ कौ०पृ०५६

आर्षनिर्वचनात् (कृष्णः) तन्मयमेघमेचकचारुवर्णो भवतीति—

निरु०—५५३ प्राकृतैर्न जिता या सा यस्यास्तीत्यजिता पुरी ।
(अजित) स्तेन विज्ञेयः सतार्णो मुक्तिदो मनुः ॥ ४२७ ॥

{५५४ / ५८} कृष्णो,

---

ॐ कृष्णाय नमः ।

---

भा०—( कृष्णः ).

(१) "कृषेर्वर्णे" इति, नक् प्रत्ययः. उणा०पा०३कौ०पृ०६२५ तन्मयरूप एव वारा ।ज्ववतारोपि इति च निरूचे.

(२) " कृषामि मेदिनीं पार्थ भूत्वा कृष्णायसो महान् । कृष्णो वर्णश्च मे यस्मात्तेन कृष्णोहमर्जुन " भा० शां०१४३—४९। इति. यथोक्तं सर्वं व्यनक्ति श्रीविष्णुतत्त्वादौ.

(३) " एकैव पञ्चधा भूता प्रधाना विग्रहात्मिका । सर्वशक्तिस- मेतापि पुरुषो नियतीरिमाः ॥ न जहाति स्वभावोत्थकारुण्येन समाश्रितः । परमेष्ठी पुमान् विश्वो निवृत्तिस्सर्व एव च ॥ पञ्चैताः शन्:ः प्रोक्ताः परस्य परमात्मनः " पा० विष्णुतत्त्वसंहिता । तेष। त्त्वं द्विविधमुक्त्वा.

(४) " मत्स्यकूर्मवराहाणामाविर्भावो महात्मनः । अनयैव द्वि- जश्रेष्ठ नान्यया तद्विरोक्तः " इति. ❋ पा० वि० त० सं० । अनयैव नित्यव्यक्तो, उपासकानामनुग्रहाय व्यूहोपि किञ्चित् स्थूलः—

---

निर्व०—( कृष्णः ).

(१) "कृष, विलेखने " नक् इत्यनुवृत्तौ. धा०तुदा०कौ०पृ०४६४

(२) " कृषेर्वर्णे " उणा० पा०३ कौ० पृ०६२५ इति, नक्. अगुणः. अनिट्.

(३) " रषाभ्यां० " इति णत्वम्. ❋ ८।४।१।।कौ०पृ०३९

अथ उपासकानामनुग्रहाय व्यूहेपि- किंचित् दृढः- स्थूलो भवतीति—

---

निरु०— ५५४ अधाकृतातिरुचिरमेचकः ( कृष्ण ) ईरितः ।

(५५५) दृढः, (५५६) संकर्षणो,

**ॐ दृढाय नमः। ॐ संकर्षणाय नमः।**

भा०— (दृढः).

(१) "दृह दृहि, वृद्धौ" धा० भ्वादिः कौ०पृ०४११

(२) "दृढः स्थूलबलयोः" इति निपातितः. ❀ ७।२।२०॥ कौ० पृ० ५९३

क एवम्— (संकर्षणः).

(१) "संसारे[1] चिदचितोरात्मनि समं कर्षणात् समं कर्म[2] नयति" इति, मौलाः. ❀ पाञ्च०मूलसंहिता।

निर्व०— (दृढः).

(१) "दृह दृहि, वृद्धौ" क्तः. धा० भ्वादिः कौ० पृ० ४११

(२) "दृढः स्थूलबलयोः" इति, ७।२।२०॥कौ०पृ०५९३

तस्येडभावः. लाघवात्तकारस्य ढः. हस्य लोपः. इदितस्त्विदित्त्वान्नुमो नलोपश्चास्मिन्नर्थे निपात्यते. अगुणः. ❀

क एवम्—संसारे चिदचितौ वात्मनि संकर्षति, समं कृषतीति वा, निरुक्तानुसारात् तयोस्संकर्षं समं कर्षं स्वात्मनि कर्षणं नयतीति वा—

(संकर्षणः). पूर्वत्र,

(१) "कृष, विलेखने" धा० तुदा० कौ०पृ०४६४

संपूर्वः ल्युः. ल्युड्त्या॥९७॥दि. अनः- लघूपधगुणः रपरः.

(२) "अट्कुप्वाङ्०" इति णत्वम्. ८।४।२॥ कौ०पृ०३२

समो मः. अनुस्वारः- पाक्षिकः परसवर्णः. अपरत्र,

निरु०— ५५५ स्थूलत्वाद्बलवत्त्वाच्च (दृढ) इत्यभिधीयते ॥ ४२८॥

५५६ यः कर्षते चिदचितौ स (संकर्षण) उच्यते।

१ संहारे। २ कर्षं।

{१०१ / ४२०} (५५७) ऽच्युतः, ।

ॐ अच्युताय नमः ।

भा०– व्यूहेपि,

(१) " च्यवनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु । यस्मान्न च्यवसे स्थानात् तस्मात् संकीर्त्यसेऽच्युतः "

इति–

(अच्युतः). ❀

(१) " येनावृतं खं च दिवं महीं च " तै० उ० १–१ ।

(२) " तेनेदमावृतम् " इति,

निर्व०–(३) "णीञ्, प्रापणे " णो नः. धा० भ्वादिः कौ० पृ० ४२

(४) " अन्येष्वपि० " इति डः. टिलोपः- ३।२।१०१॥ कौ० पृ० ५८५

कर्मण्युपपदे... ? क्षेर्गावे वञ्. अन्यत्पाग्वत्.

(५) " पूर्वपदात्संज्ञायामगः " ८।४।३॥ कौ० पृ० १६७ १

इति णत्वं. विशेषः. ❀

आर्षनिर्वचनात् व्यूहेपि हि नायं च्यवनधर्मा तत-श्च्युतो नेति–

(अच्युतः).

(१) " च्युङ्, गतौ " धा० भ्वादिः कौ० पृ० ४२७

कर्तरि क्तः. अनिट् अगुणः. नञ्समासे नञो नलोपः. ❀

तथा व्रियते आव्रियते सर्वमनेनेति वा, तत् वृणोत्यावृणोत्य-यमिति वा–

निरु०– ५५७ यस्मान्न च्यवते स्थानाद्ब्रह्मादिस्सो (ऽच्युतः) स्मृतः ॥ ४२९ ॥

(५५८) वरुणो, (५५९) वारुणो,

ॐ वरुणाय नमः। ॐ वारुणाय नमः।

भा०—( वरुणः ).
(३) "वृञ्, वरणे" धा०स्वादिः कौ०पृ०४६२
(४) "कृवृदारिभ्य उनन्" ❀ उणा०पा०३ कौ०पृ०६२७
तं स्वामित्वेन वृणुत इति वरुणः तत्र भवः—
( वारुणः ).
(१) "तेषु चाप्यहम्" इति, ❀ गी०९—२९।
तेषु छायातरुवदावृतानाम् उपजीव्यसर्वस्वः तत्कृतोपमर्दसहस्रसहो वृक्षत इति—

निर्व०—( वरुणः).
(१) "वृञ्, वरणे" धा०स्वादिः कौ०पृ०४६२
(२) "कृवृदारिभ्य उनन्" उणा०पा०३ कौ०पृ०६२७
इति उनन्. गुणः. रपरः, णत्वम्. ❀
तस्य वरणीयाधिष्ठानलब्धसत्ताकया वरुणेषु- तं स्वामितया वृणानेषूपासकेषु भव इति—
( वारुणः ).
वृञः -कर्तृकरणयोरुनन्नन्तो निरूचे हि वरुणशब्दः. ततः.
(१) "तत्र भवः" इति भवार्थे अण्. आदिवृद्धिः. ४।३।५३॥ कौ०पृ०२६१
(२) "यस्य०" इति लोपः. ❀ ६।४।१४८॥कौ०पृ०५६
तांश्च छायातरुवत्तदुपजीव्यसर्वस्वतया तत्कृतोपमर्दसहस्रसहश्च वृक्षते- वृणीत इति—

निरु०—५५८ यस्स्थितस्सर्वमावृत्य ( वरुणः ) स तु कथ्यते।
५५९ आपस्था वरुणास्तासु स्थितो ( वारुण ) ईरितः ॥४३०॥

(५६०) वृक्षः, {५६१ / ४०} पुष्कराक्षः,

ॐ वृक्षाय नमः । ॐ पुष्कराक्षाय नमः ।

भा०—( वृक्षः ).
( १ ) " वृक्ष, वरणे " धा० भ्वादिः कौ० पृ० ४०६
( २ ) " निवासवृक्षस्साधूनामापन्नानां परा गतिः " ग० ।
( ३ ) " वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः " तै०उ० ११–२० ।
( ४ ) " समाश्रिताद्ब्रह्मतरोरनन्तान्निःसंशयः पक्कफल-प्रपातः " इत्यादिवत्. ❀
तेषां प्रसादवर्षण पोषके अक्षिणी यस्य सः—
( पुष्कराक्षः ). पुष्करम्,
( १ ) " पुषः करन् " इति करन् प्रत्ययः, किद्भावः

निर्व० - ( वृक्षः ).
(१) "वृक्ष, वरणे " पचाद्यच्. ❀ धा० भ्वादिः कौ० पृ० ४०६
तेषां पुष्करे प्रसादवर्षण पोषक- अक्षिणी अस्येति—
( पुष्कराक्षः ).
अक्षेः क्सावक्षिशब्दः. प्रागेव हि निरुक्ते.
(१) "पुष, पुष्टौ" करन्नित्यनुवृत्तौ-धा० क्रयादिः कौ० पृ० ४७८
( २ ) " पुषः कित् " इति करन्. उणा० ५।० ४ कौ० पृ० ६३२
कित्. कित्त्वविधानान्न क इत् अगुणः. अनिट् दीर्घः. ततः

निरु०— ५६० साधूनामाश्रयत्वाच्च सर्वेनस्सहनादपि ।
सर्वसर्वोपजीव्यत्वाद् ( वृक्ष ) इत्यभिधीयते ॥ ४३१ ॥
५६१ सतां प्रसादवर्षण पोषके यस्य चाक्षिणी ।
( पुष्कराक्ष ) स्स विज्ञेयो ह्यष्टार्णः प्रीतिवर्धकः ॥४३२॥

१ सर्वसहः । २ भावाभ्याम् ।

(५६२) महामनाः, ॥ श्लो० ॥ ६० ॥ (५६३) भगवान्,

---

ॐ महामनसे नमः । ॐ भगवते नमः ।

---

भा०— तेष्वगाधोदारविस्मृतमनाः—
( महामनाः ).
एवमशेषदोषविद्वेषिकल्याणस्वरूपतया परमपूज्यः—
( भगवान् ).

---

निर्व०—(३) "बहुव्रीहौ सक्थ्यक्ष्णोः०" ५।४।११३॥ कौ० पृ० १६६ इति षच्- समासान्तः अन्यथापीति प्रागुक्तम्.
(४) "यस्य०" इति लोपः. ❀ ६।४।१४८॥ कौ० पृ० ५६
तेषु महत् अगाधोदारविस्मृतं मनोऽस्येति—
( महामनाः ).
(१) "मन, ज्ञाने" धा० दिवा० कौ० पृ० ४५६
(२) "सर्वधातुभ्यः०" इत्यसुन्. उणा० पा० ४ कौ० पृ० ६४०
महच्छब्दो निरुक्ते-अन्यच्च प्राग्वत्. असन्तत्वाद्दीर्घ इत्यादि. ❀
अथास्य स्वरूपतः परमपूज्यतोच्यते. अशेषदोषविद्वेषिकल्याणस्वरूपतया भगः गुणः- तदुपलक्ष्यं च स्वरूपमस्यास्तीति—
( भगवान् ).
(१) "भज, सेवायाम्" धा० भ्वादिः कौ० पृ० ४३१
(२) "खनो घ च" ३।३।१२५॥ कौ० पृ० ६६४
इति चकाराद् घित्करणाद्वा, अन्यतोपि यथायथं करणाधिकरणयोर्घः.

---

निरु०— ५६२ अगाधोदारविस्तारं मनो यस्य ( महामनाः )।
५६३ सर्वहेयप्रत्यनीककल्याणगुणवत्तया ॥ ४३३ ॥
पूज्यात्पूज्यतमो योऽसौ ( भगवान् ) इति शब्द्यते ।

(५६४) भगहा,

ॐ भगघ्ने नमः ।

भा०— गुणतोपि तथा—
(भगहा).
(१) "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" वि०पु०६—५—७४।
तं हन्ति गच्छतीति हन्तिर्गमनकर्मा अत्र वैष्णवे षष्ठेंशे भगवच्छब्दनिर्वचनप्रकरणं लेख्यम्. ❀

निर्व०—(३) "चजोः०" इति कुत्वम्. ग॰. ७।३।५२॥ कौ०पृ०५६०
एवं सिद्धात् भगशब्दात्
(४) "तदस्य०" इति मतुप्. ५।२।९४॥कौ०पृ०३२५
(५) "मादुपधायाः०" ८।२।९॥कौ०पृ०३२५
इति, मतोर्मस्य वः. अत्वन्तत्वाद्दीर्घः. उगित्त्वान्नुमित्यादि. ❀
अथ गुणतोपि सोच्यते. कल्याणगुणैकताननतया भगमैश्वर्यादिगुणं हन्ति गच्छति प्राप्नोतीति—
(भगहा).
(१) "हन, हिंसागत्योः" धा० अदा० कौ०पृ०४३५
गतिकर्[1]मेहायम्. उपपदनियमस्य प्रायोभिप्रायत्वात्
(२) "ब्रह्मभ्रूण०" ३।२।८७॥कौ०पृ०५८४
इति वा, सार्वकालिको वा क्विप्. वस्तुतस्तु ब्रह्मभ्रूणेति सूत्रे प्रकृत्युपपदप्रत्ययकालनियमाश्चत्वारो हि फलिताः. तत्र च प्रकृतिनियमादभूते चोक्तोपपदव्यावृत्तेः

निरु०—५६४ भगैस्तु कल्याणगुणैः सर्वं सर्वत्र गच्छति॥४३४॥
यश्चासौ (भगहा) प्रोक्तः षडर्णः सुखदायकः ।

१ गतिक ।

## (५६५) नन्दी, (५६६) वनमाली.



ॐ नन्दिने नमः । ॐ वनमालिने नमः ।

भा०— एवम् असौ व्यूहे संकर्षणः स्वावतारे नन्दगोपेन पितृमान्— (नन्दी). मधुवल्लवीसेवाऽनन्दवान् वा. ❋

स्वभूज्यभूतसूक्ष्मसारसौरभ्याभिमानिन्या वैजयन्त्या नित्ययोगी— (वनमाली). ❋

निर्व०— उपपदान्तेरपि भवतीत्यवधेयम्. तत्प्रकारस्तु स्पष्टमाकरे द्रष्टव्यः. प्रागीदमेवाचाम, भगशब्दो हि निरूपितः. इन्नन्तत्वाद्दीर्घः-इत्यादि. यथोक्तव्याख्यानेन नाम्नोरपुनरुक्तिः. ❋

एवमसौ व्यूहे संकर्षणः स्वस्यावतारे नन्दगोपेन पितृमत्तया नन्दः नन्दगोपः पितास्यास्तीति वा आनन्दी इति छित्त्वा तत्रानन्दः मधुवल्लवीसेनानन्दथुरस्यास्तीति वा—
(नन्दी). (आनन्दी) वा.

(१) "टुनदि, समृद्धौ" धा० भ्वादिः कौ०पृ०३८७

टुरित्. इदित्त्वान्नुमित्यादि. पूर्वत्र पचाद्यच्.

अपरत्र स एवधातुराङ्पूर्वः अन्यत्प्राग्वत्. भावे घञ्

विशेषः उभयत्रापि मत्वर्थीयोऽत इनिः

(२) "यस्य०" ६।४।१४८॥कौ०पृ०५६

इति लोपः. इन्नन्तत्वात् दीर्घ.इत्यादि. ❋

तथा वनमाला स्वभूज्यभूतसूक्ष्मसारसौरभ्याभिमानिनी वैजयन्ती नित्यमस्यास्तीति—
(वनमाली).

निरु०— ५६५ नन्दगोपेन पितृमान् (नन्दी)ति परिगीयते॥४३५॥

५६६ स्वभूज्यभूतसूक्ष्माणां मालया नित्ययोगतः ।

(वनमाली) समाख्यातो ह्यर्णो भूषणप्रदः ॥ ४३६ ॥

(५६७) हलायुधः, ।

ॐ हलायुधाय नमः ।

भा०— उक्तभूतसमृद्धिकृषीवलहलपरिकरः—
( हलायुधः ). यथा,
( १ ) " बलभद्रं समृद्ध्यर्थं सीरकर्मणि कीर्तयेत् " इति,

निर्व०— ( १ ) " माङ्, माने " धा० जुहो० कौ० पृ० ४५०
( २ ) " ऋज्रेन्द्राग्र० " उणा० पा० २ कौ० पृ० ६२०
इत्यादिना रन्नन्तो निपातः. अनिट्. रलयोरभेदः.
स्त्रियामतष्टाप्. दीर्घः.
( ३ ) " वन, षण, संभक्तौ " धा० भ्वादिः कौ० पृ० ४०१
पचाद्यच्. इत्थं सिद्धाद्वनमालाशब्दात्,
( ४ ) " व्रीह्यादिभ्यश्च " ५ । २ । ११६ ॥ कौ० पृ ३३०
इति, तस्याकृतिगणत्वात्, मत्वर्थीय इनिः.
( ५ ) " यस्य० " ६ । ४ । १४८ ॥ कौ० पृ० ५६
इत्यालोपः. इन्नन्तत्वाद्दीर्घ इत्यादि. ❋
उक्तभूतसमृद्धिकृषीवलहलपरिकरतया हलं सीरः
आयुधमस्येति—
( हलायुधः ).
( १ ) " युध, संप्रहारे " धा० दिवा० कौ० पृ० ४५६
आङ्पूर्वः.
(२) " घञर्थे कविधानम् " ३ । ३ । ५८ ॥ कौ० पृ० ६५३
( ३ ) " स्थास्नापाव्यधिहनियुध्यर्थम् "
इति, करणे कः. अगुणः.

निरु०— ५६७ हलं च सततं सीरं धत्ते योऽसौ ( हलायुधः ) ।
सीरकर्मसमृद्ध्यर्थी वस्त्वर्णो मन्त्रनायकः ॥ ४३७ ॥

{५६८ / ३७} आदित्यो ,

---

ॐ आदित्याय नमः ।

---

भा०— स्ववाचकात् आवर्णात् आतः इत्यः प्राप्यः इति— (आदित्यः).

(१) " एतिस्तुशास्वृदृजुषः क्यप् " ३।१।१०९॥कौ०पृ०५५९

आकारो हि संकर्षणवीजमन्त्रः.

भूतपूर्वाऽदितिभावायाः देवक्याः अपत्यमिति वा—

(आदित्यः).

---

निर्व०— (४) " हल , विलेखने " धा० भ्वादिः कौ०पृ०४१९

पचाद्यच्. दीर्घः. ❀

आकारस्य संकर्षणवीजमन्त्रतया स्ववाचकेन

आता तपरोयम् असन्देहार्थो निर्देशः पाक्षिकार्थान्तरलाभार्थश्च. आकारेण इत्यः प्राप्य इति वा. अदितेः आर्षवचनसिद्धभूतपूर्वादितिभावायाः देवक्याः अपत्यमिति वा—

(आदित्यः). पूर्वत्र ,

(१) इण् , गतौ " धा०अदा० कौ०पृ०४४१

(२)" एतिस्तुशास्वृदृजुषः क्यप् " ३ ।१। १०९ ॥कौ०पृ०५५९

इति क्यप्. अगुणः.

(३) " ह्रस्वस्य० " ६ । १ । ७१ ॥ कौ०पृ०५५९

इति, तुक्. तृतीयायाः सामासिको लुक्. पदत्वाज्जश्त्वम्.

अपरत्र,

---

निरु०— ५६८ आवर्णादेव प्राप्यो यः स ( आदित्यः ) प्रकीर्तितः ।
अदितिर्देवकी तस्याः ( आदित्यो ) वा ह्यपत्यतः ॥४३८ ॥

भा०— यथा, वैष्णवे धर्मे देवकीं प्रति भगवान्,
(१) "दाक्षायणी त्वमदितिः संभूता वसुधातले। नित्यैव त्वं जगद्धात्री प्रसादं ते करोम्यहम्" इति. ❋ भ० वि० ध० ९३–४४।
अथ नारायणविषयः. दिव्याश्चर्यज्योतिर्मयत्वात् अपूर्वः—

---

निर्व०— (४) "दो, अवखण्डने" धा० दिवा० कौ० पृ० ४५४
(५) "आदेचः०" इत्यनैमित्तिकमात्वम् ६।१।४५॥ कौ० पृ० ४२३
(६) "स्त्रियां क्तिन्" अनिट्. ३।३।९४॥ कौ० पृ० ६५८
(७) "द्यतिस्यति०" इति, इत्वम्. ७।४।४०॥ कौ० पृ० ५५४
अगुणः नञ्पूर्वो बहुव्रीहिः. नञो नलोपः. यद्वा,
(८) "इण्, गतौ" धा० अदा० कौ० पृ० ४४१
अदिति दान्ताव्ययपूर्वः. ततः क्तिन्. अनिट्. अगुणः.
अथवा,
(९) "अद, भक्षणे" धा० अदा० कौ० पृ० ४३५
(१०) "हृसृरुहियुषिभ्यः०" उणा० ४।० १ कौ० पृ० ६१५
इति बाहुलकादन्यतोपीति, इतिः. तत एव बाहुलकादन्यत्र क्वचिदन्त्योपीकारः नेट्. प्रागपीदमवोचाम. एवं सिद्धात् अदितिशब्दात्,
(११) "दित्यदिति०" इत्यादिना, ४।१।८५॥ कौ० पृ० २०५
अपत्यार्थे ण्यः. आदिवृद्धिः. भत्वम्,
(१२) "यस्य०" इति लोपः. ❋ ६।४।१४८॥ कौ० पृ० ५६
अथ नरनारायणविषयः. तयोश्च भवेन सह युध्यतोः सतोः तत्तेजसि सिद्धस्याप्यादित्यस्य तमायमानतया अयमपूर्वो ज्योतिः. दिव्याश्चर्यज्योतिर्मयश्चासौ आदित्यो भानुश्चेति—

(५६९) ज्योतिरादित्यः, { ५७० / १४६ } सहिष्णुर्,

ॐ ज्योतिरादित्याय नमः। ॐ सहिष्णवे नमः।

भा०– (ज्योतिरादित्यः).

प्रसिद्धो ह्यादित्यः तत्तेजसि तमायेत, श्रीनारायणीये,

(१) " तयोर्भवेन युध्यतोः " निष्प्रभाणि च तेजांसि ब्रह्मा चैवासनाच्च्युतः " इति. ❋ भा०शा० ३४४–९०।

तत्र तदपराधसहनात्–

(सहिष्णुः). तत्रैव,

(१) " प्रसादयामास भवो देवं नारायणं प्रभुम्। शरणं जगतामाद्यं वरेण्यं वरदं हरिम् ॥ तथैव वरदो देवो जितक्रोधो जितेन्द्रियः। प्रीतिमानभवत्तत्र रुद्रेण सह संगतः "

इति. ❋ भा० शा० ३४४–११९।

निर्व०– (ज्योतिरादित्यः).

एकन्नाम-निरुक्ते ह्यादित्यशब्दः.

(१) " द्युत दीप्तौ " धा० भ्वादिः कौ० पृ०४११

(२) "द्युतेरिसिन्नादेशश्च जः" इति. उणा०पा०२कौ०पृ०६२४

इसिन्नादेर्दस्य जश्च गुणः रुत्वम्. ❋

तत्र तदपराधं तच्छीलस्सहत इति–

(सहिष्णुः).

(१) " षह, मर्षणे " षस्सः. धा० भ्वादिः कौ०पृ०४१९

निरु०– ५६९ समस्ततेजोहरणज्योतिषा दीव्यते च यः।
स वै स्याज् (ज्योतिरादित्यो) नवार्णो ज्ञानदायकः ॥ ४३९ ॥
५७० ब्रह्मादिमन्तुसहनात् (सहिष्णु) रिति कथ्यते।

(५७१) मतिसत्तमः, ॥ श्लो० ॥ ६१ ॥ (५७२) सुधन्वा,

ॐ मतिसत्तमाय नमः । ॐ सुधन्वने नमः ।

भा०— स एव परमधर्माध्वदेशिकत्वेन—
(मतिसत्तमः).
मतौ प्रत्ययिततमः इति,
(१)"अहो ह्यनुगृहीतो ह्यधर्म एभिरसुरैरिह" भा०शा०३३५–१७।
इति. ❋
सुधानिमित्तसुराऽसुरसमरसंहारिशरासनत्वात्—
(सुधन्वा).

निर्व०—(२) "अलंकृञ्०" ३।२।१३६॥कौ०पृ०६०१
इत्यादिना प्रागुक्तसूत्रेण ताच्छीलिक इष्णुच्. ❋
स एव परमधर्माध्वदेशिकत्वेन मतौ सत्तमः अस्तितमः
प्रत्ययिततम इति—
(मतिसत्तमः).
अस्तेश्शतरि व्युत्पन्नात् सच्छब्दात् आतिशायनिके तमपि सत्तमशब्दः-
मनेः क्तिनि अनिटि, अनुनासिकलोपे, मतिशब्द-
श्च व्युत्पादिषाताम्. ❋
सुधानिमित्तसुराऽसुरसमरसंहारिशरासनतया सु-शोभनं धनुरस्येति—
(सुधन्वा).
(१) "धन, धान्ये" उसिरित्यनुवृत्तौ, धा० जुहो०कौ०पृ०४५२
(२) "अर्तिपृवपियजितनिधनितपिभ्यो नित्" उणा० पा० २
कौ०पृ०६२४
इति उसिः. नित्. नित्त्वादाद्युदात्तः. सुपूर्वो बहुव्रीहिः.

निरु०— ५७१ धर्मे प्रत्ययिततमो (मतिसत्तम) उच्यते ॥ ४४० ॥
५७२ सुशोभनं धनुर्यस्य (सुधन्वा) परिकीर्तितः ।

(५७३) खण्डपरशुः,

ॐ खण्डपरशवे नमः ।

आ०— (१) "धनुषश्च" इति समासान्तो नञ्. ❀ ५।४।१३२॥ कौ०पृ०१६९

(२) "तत्र दिव्यं धनुर्दृष्ट्वा नरस्य भगवानपि"

(३) "नरस्ततो वरकटकाद्यभूषणैर्महेषुभिः पवनपदं समावृणोत्" इति. ❀

परशुना रौद्रसंग्रामखण्डनात्— (खण्डपरशुः). तत्रैव,

(१) "अथ रुद्रविघातार्थमिषीकां नर उद्धरन् । मन्त्रैश्च संयुयोजाशु सोऽभवत् परशुर्महान् ॥ क्षिप्तश्च सहसा रुद्रे खण्डनं प्राप्तवांस्तदा । ततोऽहं खण्डपरशुस्ततः परशुखण्डनात्" इति. ❀ भा०शा०३४४—८६।

निर्व०— ततः,

(३) "धनुषश्च" इत्यनुवर्तमाने, ५।४।१३२॥ कौ०पृ०१६९

(४) "वा संज्ञायाम्" ५।४।१३३॥ कौ०पृ०१६९

इत्यनङ् पाक्षिकस्समासान्तः. ङित्त्वादन्त्यादेशः. तत उवर्णस्य यण् वकारः. नान्तलक्षणो दीर्घः इत्यादि. ❀

स एवार्षनिर्वचनात् खण्डः रौद्रसंग्रामखण्डनः परशुः परश्वधोऽस्येति— (खण्डपरशुः).

(१) "शॄ, हिंसायाम्" धा०क्र्यादिः कौ०पृ०४७६

परशब्दे उपपदे कुप्रकरणे,

निरु०— ५७३ तीव्रकोपात् परशुना रौद्रसंग्रामखण्डनात् ॥४४१॥ इत्युक्तः (खण्डपरशु) र्नैर्वाणश्शोकनाशकः ।

१ कनक ।

( ५७४ ) दारुणो,

---

ॐ दारुणाय नमः ।

---

भा०— एवं बाह्याभ्यन्तरारिदारणात्— ( दारुणः ).

( १ ) " कृवृदारिभ्य उनन् " ❋ उणा० पा० ३ कौ० पृ० ६२७५

---

निर्व०—( २ ) " आङ्परयोः खनिशृभ्यां डिच्च " उणा० पा० १ कौ० पृ० ६११

इति, कुः. स डिच्च. टेर्लोपः. पृणातेरचि परशब्दो व्युत्पादितः.

( ३ ) " खनु, अवदारणे" धा० भ्वादिः कौ० पृ० ४२१

( ४ ) " ताभ्यामन्यत्रोणादयः" इति स्थिते, ३।४।७५॥ कौ० पृ० ६४५

( ५ ) " यमन्ताड्डः " इति, उणा० पा० १ कौ० पृ० ६१५

करणे कर्तरि वा डः. बाहुलकान्न डस्येत्संज्ञा.

( ६ ) " नेड्वशि० " इति, नेट्. ७।२।८॥ कौ० पृ० ५८१

अनुस्वारपरसवर्णौ. ष्टुत्वस्यासिद्धत्वान्न च विप्रतिषेधः.

( ७ ) " पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य "

इति हि स्थितिः. यद्वा,

( ८ ) " खडि, भेदने " चुरादिः, इदित्. नुमादि. धा० चुरा० कौ० पृ० ४८१

ततो णिचि पचाद्यच्. णेर्लोपः. इदित्करणाल्लिङ्गाण्णिचः पाक्षिकत्वे तु तल्लोपवर्जमन्यत्प्राग्वत्. लिङ्गत्वं तूपपादयिष्यते. ❋

एवं भीषणः. बाह्यानाभ्यन्तरांश्चारीन् दारयति विदारयतीति— ( दारुणः ).

( ९ ) " दॄ, विदारणे " धा० क्र्यादिः कौ० पृ० ४७६

णिच् वृद्धिः. रपरत्वम्. ततः,

---

निरु०— ५७४ बाह्याभ्यन्तरशत्रूणां दारणादपि (दारुणः)॥४४२॥

(५७५) द्रविणप्रदः, ।

---

ॐ द्रविणप्रदाय नमः ।

---

भा०— अथ व्यासावतारः,
समग्रं शास्त्रतदर्थरूपद्रविणं प्रददातीति—
(द्रविणप्रदः). यथा,
(१) " वहन्वै वामहस्तेन सर्वशास्त्रार्थसंचयम् । दक्षिणेन च शास्त्रार्थानादिशंश्च यथास्थितान् "
इति तद्ध्याने. ❀
परविद्यया दिवि च परमपदे स्थितं स्वतत्त्वरहः स्पृशतीति—

---

निर्व०—(२) "कॄवृदारिभ्य उनन्" इति, उणा० पा० ३ कौ० पृ० ६२७ उनन्. णिलोपः. णत्वम्. ❀
अथ व्यासावतारः. तद्ध्यानविधिना द्रविणं समग्रं शास्त्रतदर्थरूपं धनं प्रददातीति—
(द्रविणप्रदः).
(१) " डुदाञ्, दाने " प्रपूर्वः धा० जुहो० कौ० पृ० ४५१
क इत्यनुवृत्तौ,
(२) " प्रे दाज्ञः " इति कर्मण्युपपदे ३।२।६॥ कौ० पृ० ५७२
प्रोपसृष्टादस्मात् कः. आल्लोपः.
(३) " द्रु, गतौ " धा० भ्वादिः कौ० पृ० ४२६
(४) "द्रुदक्षिभ्यामिनन्" इति इनन्. उणा० पा० २ कौ० पृ० ६२१
गुणः. अव्. णत्वम्. ❀
[redacted]या, दिवि परमे पदे ततश्च तदधिकरणकं स्वतत्त्वं रहः स्पृशतीति—

---

निरु०— ५७५ शास्त्रं तदर्थं द्रविणं प्रददाति जनाय यः ।
व्यासो भूत्वा हरिस्साक्षाद् (द्रविणप्रदः) उच्यते ॥ ४४३ ॥

(५७६) दिविस्पृक्,

---

ॐ दिविस्पृशे नमः ।

---

भा०—( दिविस्पृक् ).

( १ ) " स्पृशोऽनुदके क्विन् " ३ । २ । ५८॥ कौ० पृ०७९

( २ ) " हलदन्तात्० " इत्यलुक्. ६ ।३।९॥कौ०पृ०१८७

( ३ ) " विदितपरमार्थः " इति तन्मन्त्रे. ❀

---

निर्व०—( दिविस्पृक् ).

" स्पृश , संस्पर्शने " धा० तुदा० कौ० पृ० ४६९

( १ ) " स्पृशोऽनुदके क्विन् " ३ । २ । ५८ ॥कौ०पृ०७९ इति क्विन्.

( २ ) " क्विन्प्रत्ययस्य कुः " ८ । २ । ६२ ॥कौ०पृ०६८ इति कुत्वस्यासिद्धत्वात्.

( ३ ) " व्रश्च० " इत्यादिना पूर्वं षः. ८।२।३६॥कौ०पृ०५१ तस्य जश्त्वेन डः. तस्य कुत्वेन गः- तस्य पाक्षिकचर्त्वेन कः.

( ४ ) " दिवु, क्रीडादौ" उणादिषु, धा०दिवा०कौ०पृ०४५२

(५)"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्यात्०"श्लो०वा०। इत्यादिन्यायावलम्बनात्.

(६)" दिवेर्डिविः " इति न्यासोहितसूत्रेण डिविः. उणा०सूत्रम् । टिलोपः. ततो ङिः. तस्यालुक्प्रकरणे,

( ७ ) " हृद्युभ्यां च " ८ । ३ । ९४ ॥ कौ० पृ० १८७ इति सत्यपि प्रतिपदोक्ते तस्यासंज्ञार्थत्वात् , इह

( ८ )"हलदन्तात् सप्तम्याः संज्ञायाम्"६।३।९॥कौ०पृ०१८७ इत्यलुक्.

---

निरु०— ५७६ परया विद्यया यः स्वं स्पृशतीति परे पदे ।

( दिविस्पृक् ) सोच्यते नित्यम्—

{५७७ / २०१} सर्वदृग्, (५७८) व्यासो,

ॐ सर्वदृशे नमः । ॐ व्यासाय नमः ।

भा०—अन्यदपि सर्वं वैभवं पश्यतीति—
(सर्वदृक्).
(१) " दृशेश्चेति वक्तव्यम् " इति क्विन्प्रत्ययः.
(२) " क्विन्प्रत्ययस्य कुः " इति कुत्वम्. ८।२।६२॥ कौ० पृ० ६८
(३) " विदुषे " इति तन्मन्त्रे. ❋

(१) " युगानुसारबोधानामखेदजननाय वै । विभजंस्तु चतुर्धा वै वेदमेकं त्रिकालवित् " इति—
(व्यासः).. ❋

---

निर्व०— मन्त्रवर्णाद्दुष्येणान्यच्च सर्वं वैभवं पश्यतीति—
(सर्वदृक्).
(१) " दृशिर् प्रेक्षणे " धा० भ्वादिः. कौ० पृ० ४३०
(२) " दृशेश्चेति वक्तव्यम् "
इति, क्विन्. क्विप् वा. षडगकाः प्राग्वत्. सर्वशब्दो व्याख्यातः.
अन्यदप्यत्र वक्तव्यं प्रागेव समप्रश्नमवोचाम. ❋
युगानुसारबोधानामखेदजननाय विभक्तवेदतया व्यस्यन्ते विभज्यन्ते वेदाः अनेनेति—
(व्यासः).
(१) " असु, क्षेपणे " विपूर्वः. धा० दिवा० कौ० पृ० ४५९
(२) " हलश्च " इति करणे घञ्. वृद्धिः. ३।३।१२१॥ कौ० पृ० ६६३
वेरिकारस्य यण् यकारः. नाम्नोऽसांहितं जश्त्वम्. ❋

---

निरु०—५७७ (सर्वदृक्) सर्वदर्शनात् ॥ ४४४ ॥
५७८ त्रय्याश्चतुर्धा करणाद् (व्यास) इत्युच्यते बुधैः ।

{५७९ / २१८} वाचस्पतिर्, (५८०) अयोनिजः, ॥

ॐ वाचस्पतये नमः। ॐ अयोनिजाय नमः।

भा०– पञ्चमवेदरूपायाः वाचः स्वामी– ( वाचस्पतिः ). ❋ सारस्वतावतारे भगवद्वाक्संभवत्वात्– ( अयोनिजः ).

निर्व०–स एव पञ्चमवेदरूपाया वाचो भारत्याः पतिः स्वामीति– ( वाचस्पतिः ). भिन्नं पदम्. समस्तं वा.
( १ ) “पा, रक्षणे” धा० अदा० कौ० पृ० ४४३
अतो डत्यन्तः पतिरुक्तः.
( २ ) “वच, परिभाषणे” धा० अदा० कौ० पृ ४४३
( ३ ) “क्विब्वचि०” इत्यादिना क्विप्. दीर्घः ३।२।१७८॥कौ० पृ० ६०७
( ४ ) “वचिस्वपि०” इत्यादिना प्राप्तसंप्रसारणाभावश्च. ६।१।१५॥कौ० पृ ४३२
ततो ङस्. सोरुत्वम्. विसर्गः, तस्य षष्ठ्याः
( ५ ) “पतिपुत्र०” इत्यादिना २।३।५३ ॥ कौ०पृ० १२१
सकारश्छान्दसः. तथा समासपक्षे षष्ठ्याः अलुक् च. पञ्चमो ह्ययं वेदः सर्वमिदं सविस्तरं प्रागेव प्रत्यपीपदाम. ❋ सारस्वतावतारे भगवद्वाक्संभवतया, योनौ भगे जायत इति योनिजः स नेति– ( अयोनिजः ).

निरु०–५७९ वाचः पञ्चमवेदस्य स्वामी वाचस्पतिः स्मृतः॥४४५॥
५८० सारस्वतावतारे हि भगवन्मुखसंभवात्।
स्मृतो ( ह्ययोनिज ) इति वरवर्णः कर्मनाशकः॥ ४४६॥

श्लो० ॥ ६२ ॥ ( ५८१ ) त्रिसामा,

---

ॐ त्रिसाम्ने नमः ।

---

भा०—( १ ) "अथ भूयो जगत्स्रष्टा भोशब्देनानुनादयन् । सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत् " इति, ❋ भा० शा०-३५०-३७ ।

स्वगायकबृहद्रथन्तरवामदेव्यप्रधानसामकत्वात्—

( त्रिसामा ).

स्वयं च स्वानुभवप्रीत्या तादृशि गायतीति—

---

निर्व०—( १ ) " जनी, प्रादुर्भावे " धा० दिवा० कौ० पृ० ४५४

( २ ) " सप्तम्यां जनेर्डः " ३।२।९७ ॥ कौ० पृ० ५८५

इति, डः. टिलोपः.

( ३ ) " यु, मिश्रणे " निप्रकरणे, धा० अदा० कौ० पृ० ४३९

( ४ ) " वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् " उणा० पा० ४ कौ० पृ० ६३४

इति, निः, नित्. तत्फलं चोक्तमेव. गुणः.

( ५ ) " नेट्० " इति, नेट्. ७ । २ । ८ ॥ कौ० पृ० ५८१

नञ्-समासः नञो नलोपः. ❋

स्वगायकप्रधानानि त्रीणि सामानि बृहद्रथन्तरवामदेव्यान्यस्येति—

( त्रिसामा ).

( १ ) " षो, अन्तकर्मणि " षस्सः. धा० दिवा० कौ० पृ० ४५४

( २ ) " आदेचः० " इति आत्वम् ६ । १ । ४५ ॥ कौ० पृ० ४२३

( ३ ) " सातिभ्यां मनिन्मनिणौ " इति, मनिन्. उणा० पा० ४ कौ० पृ० ६३९

अनिट्. तरतेर्ड्री, त्रिशब्दश्चोक्तः. बहुव्रीहिः. नान्तलक्षणो दीर्घः. इत्यादि. ❋

स्वयमपि स्वानुभवप्रीत्या सामानि तादृशि गायतीति—

---

निरु०—५८१ प्रोक्त ( त्रिसामा ) यश्चास्ति बृहदादित्रिसामकः ।

## (५८२) सामगस्, (५८३) साम,

ॐ सामगाय नमः । ॐ साम्ने नमः ।

---

भा०—( सामगः ).
( १ ) " गापोष्टक् " इति टक्. तदनुभवाह्लादोऽपि हि ३ । २ ।८॥ कौ०पृ०५७२
साम गायते,
( २ ) " एतत्साम गायन्नास्ते " इति. ❋ तै०उ०१०–५ ।
स्वगायकानामपि पापं स्यतीति—
( साम ).
( १ ) " षो, अन्तकर्मणि " इति, धा०दिवा०कौ०पृ०४५४
( २ )" सातिभ्याम्० " इत्यादिना मनिन्. ❋ उणा०पा०४ कौ० पृ०६३९
एवमपहतपाप्मनां परमगतिनिमित्तम्—

---

निर्व०—( सामगः ).
( १ ) " गै, शब्दे " आत्वम्. धा०भ्वादिः कौ०पृ०४२४
( २ ) "गापोष्टक्" इति, अनुपसर्गात् ३।२।८॥कौ०पृ०५७२
गायतेष्टक्. आतो लोपः. सामशब्दो निरुक्तः.नलोपः. ❋
स्वगायकानां पापं स्यति नाशयतीति—
( साम ).
प्राग्वदेव सामशब्दः, नलोपश्च.
( १ ) " लिङ्गमशिष्यम् " इत्यादि. ❋ ॥ महाभाष्ये ॥
एवमपहतपाप्मनां परमगतिनिमित्ततया निर्वाणं निश्श्रेयसमिति—

---

निरु०—५८२ स्वयं स्वानुभवप्रीत्या गायतीति च(सामगः)।४४७॥
५८३ स्वगायकानां कालुष्यनाशक ( स्साम ) ईरितः ।

(५८४) निर्वाणम्, (५८५) भेषजम्,

---

ॐ निर्वाणाय नमः। ॐ भेषजाय नमः।

---

भा०–( निर्वाणम् ).

( १ ) " निर्वाणोऽवाते " इति निपातितः. ❀ ८ । २ । ५० ॥ कौ०पृ०५८८

अतः असाध्यसंसारव्याधेः परमम्–

( भेषजम् ). स्तवराजे,

( १ ) " नारायणाद्दृषिगणास्तथा सिद्धा महोरगाः। देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम् " इति. ❀

---

निर्व०–( निर्वाणम् ).

तन्निमित्ततया चात्र तद्व्यपदेशः.

( १ ) " वा, गतिगन्धनयोः " निर्पूर्वः क्तः. धा०अदा०कौ० पृ०४४३

ततो निष्ठातस्य,

( २ ) " निर्वाणोऽवाते " अवाते कर्तरि निपातनात् नत्वम्. अनिट्. ८ । २ । ५० ॥ कौ०पृ०५८८

( ३ ) " कृत्यचः " इति णः. ८ । ४ । २९ ॥ कौ०पृ०५५६

( ४ ) " लिङ्गमशिष्यम् " इत्यादि. ❀ ॥ महाभाष्ये ॥

अतः असाध्यसंसारव्याधेः भेषजम् परममौषधमिति–

( भेषजम् ). ततः,

( १ ) " भिषज्, चिकित्सायाम् " धा० कण्ड्वादिः कौ०पृ०५२१

( २ ) " कण्ड्वादिभ्यो यक् " इति, स्वार्थे यक्. ततः क्विप्. तत्र, ३ । १ । २७ ॥ कौ०पृ०५२०

---

निरु०–५८४ ( निर्वाणं ) स्यात्परगतेर्निमित्तं निर्गतेनसात् ॥४४८॥
५८५ असाध्यभवरोगस्य ( भेषजं ) यत्सदौषधम् ।

## (५८६) भिषक्, । (५८७) संन्यासकृत्,

### ॐ भिषजे नमः । ॐ संन्यासकृते नमः ।

भा०— सम्यग्विदितनिदानचिकित्सः—
(भिषक्). ❋
कथं चिकित्सति, सात्त्विकेन संन्यासेन रजस्तमसी कृन्ततीति—
(संन्यासकृत्).

निर्व०—(३) "यस्य हलः" इत्यार्धधातुके ६।४।४९॥कौ०पृ०५०४ यशब्दस्य संघातस्य लोपः. स च,
(४) "आदेः परस्य" इति यकारमात्रस्य १।१।५४॥कौ०पृ०७
(५) "अतो लोपः" इत्यकारलोपः. ६।४।४८॥कौ०पृ०३९७
एवं सिद्धात् भिषज्शब्दात् तस्येदमिति संबन्धसामान्येन अण्, वृद्धिरैकारः. तस्य च पृषोदरादित्वात् वर्णविकार एकारः— आविष्टलिङ्गोयमित्यादि. ❋
सम्यक् विदितनिदानचिकित्सतया भिषज्यति चिकित्सतीति भिषक् वैद्य इति—
(भिषक्).
निरूचे ह्ययं शब्दः ? ततोणूवर्जम्.
(१) "चोः कुः" इति, कुत्वं, गः. ८।२।३०॥कौ०पृ०६८
तस्य पाक्षिकमवसानचर्त्वम्. कः, इति चात्र विशेषः. ❋
कथं चिकित्सति तत्रोच्यते. संन्यासेन समीचीनेन सात्त्विकेन भवचिकित्सारूपेण भर्तरि भरन्यासेन रजस्तमसी कृन्ततीति—
(संन्यासकृत्).

निरु०—५८६ भवरोगनिदानज्ञो योऽसौ (भिषगु) दीरितः॥४४९॥
५८७ त्यागेन सात्त्विकेनाशु रजसस्तमसः परम् ।
यः कृन्तति स (संन्यासकृत्) नवार्णो मनुस्स्मृतः ॥ ४५० ॥

(५८८) शमः,

ॐ शमाय नमः ।

भा०— भर्तारि भरन्यासः. संन्यासः. स हि भवचिकित्सा.

(१) " वेदान्तविज्ञानसुनिश्चितार्थाः " तै०उ०११–२२। इत्यादिश्रुतेः. ❁

तदर्थम्

(१) " भोक्तारं यज्ञतपसाम् " इत्यादिना; गी०५–३७। इच्छाभयक्रोधशान्त्युपायमाचष्ट इति–

(शमः).

(१) " तदाचष्ट " इति णिच्. चुरादिगणसूत्रम् कौ०पृ०४९० पचाद्यचि कृते-रूपम्. ❁

निर्व०–(२) " कृती, छेदने " क्विप्. अगुणः. धा० तुदा० कौ०पृ०४७०

(३) " असु, क्षेपणे " धा० दिवा० कौ०पृ०४५९ निपूर्वः, भावे घञ्. वृद्धिः. नेरिकारस्य यण् यकारः. ततस्संपूर्वः कर्मधारयः. अनुस्वारपाक्षिकपरसवर्णौ. जश्त्वचर्त्वे. ❁

तदर्थं शमं तदुपादेयतद्व्यपदेशादिच्छाभयक्रोधशान्त्युपायमाचष्ट इति–

(शमः).

(१) " शमु, उपशमे " भावे घञ्. धा०दिवा०कौ०पृ०४५९

(२) " नोदात्त०" ७।३।३४॥कौ०पृ०५४२ इत्यादिना न वृद्धिः. ततश्शमशब्दात्,

(३) " तत्करोति तदाचष्टे " चुरादिगणसूत्रम्, कौ०पृ०४९० इति, णिच्.

निरु०– ५८८ अनुवृत्तः (शमः) प्रोक्तः–

(५८९) शान्तः,

ॐ शान्ताय नमः ।

भा०— स्वयं च—

(शान्तः).

सत्यपि समुद्रेकहेतौ महिमसमुद्रे निस्तरङ्गसमुद्रवदनुद्रिक्तः. तद्दर्शिनां हि प्रभावः. यं जगौ पतञ्जलिः,

(१) "तत्सन्निधौ वैरत्यागः" इति, पात० सू० ४—३५ ।

अर्वाचीनश्च.

(२) "परितः पटुबिभ्रेदनमां दहनं धाम विलोकनक्षमम् । मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शमं निरीक्षितैः" ❀ किरा० २—५५ ।

ततः ❀ व्युत्थितचित्तैः शुभाश्रयभूतेरस्मिन्निष्ठीयत इति—

❀ पा० सू० ४—२९ ।

---

निर्व०— (४) "-णाविष्ठवत्" ६।४।१५५॥कौ०पृ०३१० इति, टिलोपः. ततः पचाद्यच्. णिलोपः. ❀

स्वयं च सत्यपि समुद्रेकहेतौ महिमसमुद्रे निस्तरङ्ग-समुद्रवदनुद्रिक्ततया शाम्यतीति—

(शान्तः).

पूर्ववद्धातुः. कर्तरि क्तः. उदित्त्वेन क्त्वायां वेट्कत्वादिह नेट्.

(१) "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५॥कौ०पृ०५१५ इति, क्ङिति दीर्घः. अनुस्वारादि. ❀

अतो व्युत्थितचित्तैः निष्ठीयते शुभाश्रयभूतेऽस्मिन् इति—

---

निरु— ५८९ (शान्तो)ऽविकृतमानसः ।

## (५९०) निष्ठा, (५९१) शान्तिः,

### ॐ निष्ठायै नमः । ॐ शान्तये नमः ।

भा०– ( निष्ठा ).

(१) " आतश्चोपसर्गे " इत्यङ्. ❋ ३।३।३॥कौ०पृ०५७० तत्र ❋ परमसमाधौ विस्मृतसर्वाधिकाराः शाम्यन्तीति– ( शान्तिः ). ❋ पा० मू० ३–५५ ।

---

निर्व०– ( निष्ठा ).

(१) " ष्ठा, गतिनिवृत्तौ " धा० भ्वादिः कौ०पृ०४२४ निपूर्वः परस्मै. टोस्तुः.

(२)"अकर्तरि च कारके०" इत्यनुवृत्तौ,३।३।१९॥कौ०पृ०६४७

(३) " आतश्चोपसर्गे " ३ । ३ । १०६ ॥ कौ०पृ०६६० इत्यधिकरणे अङ्. आल्लोपः.

(४) " उपसर्गात्सुनोति० " ८ । ३ । ६५ ॥ कौ० पृ० ३८४ इत्यादिना षत्वम्. ष्टुत्वम् स्त्रियामतष्टावादि आविष्टलिङ्गोयमित्यादि. ❋ –।

तत्र परमसमाधौ विस्मृतसर्वाधिकाराः शाम्यन्ति अस्मिन्निति– ( शान्तिः ). धातुः प्राग्वत्.

(१) " अकर्तरि च कारके० " ३ । ३ । १९ ॥ कौ०पृ०६४७ इत्यनुवृत्तौ, अधिकरणे स्त्रियां क्तिन्.

(२) " तितुत्र० " इति नेट्. ७ । २ । ९ ॥ कौ० पृ० ६०८

(३) " अनुनासिकस्य० " ६ । ४ । १५ ॥ कौ०पृ० ५१५ इति, दीर्घः. अनुस्वारपरसवर्णौ लिङ्गं प्राग्वत्. ❋

---

निरु०–५९० निष्ठीयते ह्यर्थिनां यो हृदि (निष्ठा) स कथ्यते ॥४५१॥
५९१ सर्वाधिकाराः शाम्यन्ति समाधौ परमे यतः ।
अतः ( शान्ति ) रिति प्रोक्त ऋत्वर्णो भक्तिदो मनुः ॥ ४५२ ॥

( ५९२ ) परायणम्, ॥

ॐ परायणाय नमः ।

भा०— समाहितानां परमयनम् अव्यवहितप्रापिका परमा भक्तिरस्मात् इति—
( परायणम् ). यथा,
( १ ) " निर्ममः शान्तः " इत्युपक्रम्य. गी० १८—५३।
( २ ) " मद्भक्तिं लभते पराम् " इत्यन्तम्. गी० १८—५४।
( ३ ) "भक्त्या त्वनन्यया शक्यः" इति च. ❀ गी० ११—५४।
एवं स्वभक्तिभावनाशुभानि
❀ यमसमाध्यवधीनि अष्टाङ्गानि. पा०सू० ३—२९।
तस्मात् इति—

निर्व०— तत्र समाधिमतां परम् अतिशयितम् अयनम् अव्यवहित-प्रापिका परमा भक्तिरस्मादिति—
( परायणः ). ( परायणं ) वा.
( १ ) " इण्, गतौ " धा० अदा० कौ०पृ०४४१
( २ ) " अय, गतौ " वा धा० भ्वादिः कौ०पृ०४०२
करणे ल्युट् योरनः. एतेर्गुणायादेशौ च. पृणातेः पचाद्यच्. गुणो रपरः. सांहितिको दीर्घः—
( ३ ) " पूर्वपदात्० " इति, णत्वम्. क्लीबपाठे ८।४।३॥ कौ० पृ० १६७
( ४ ) " लिङ्गमशिष्यम् " इत्यादि. यद्वा. ॥ महाभाष्ये ॥
तेषां परमुत्कृष्टम् अयनं तादृशपरमभक्त्युत्पादकं स्थानमिति तत्पुरुषः. आविष्टलिङ्गोयम्. ❀

निरु०— ५९२ यस्मात्तु परमा भक्तिः चरमप्रापिका मता ।
तस्मात् ( परायण ) मिति स्मृतो ह्यष्टार्ण उत्तमः ॥ ४५३ ॥

## श्लो० ॥ ६३ ॥ {५९३ / ७८८} शुभाङ्गः, (५९४) शान्तिदः,

---

ॐ शुभाङ्गाय नमः । ॐ शान्तिदाय नमः ।

---

भा०—(शुभाङ्गः).
स हि स्वयोगयोगक्षेमवहः. ❋
एवं निष्पन्नभक्तिभ्यः अप्रतिप्रसवनिर्मूलितभवोपप्लवां, स्वसायुज्यरूपां शान्तिं ददाति इति—
(शान्तिदः). यथा,
(१) "विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति" इति, श्वे०उ०२—७।

---

निर्व०— एवं तस्य स्वयोगक्षेमवहतया शुभानि स्वभक्तिभावनाशोभनानि अङ्गानि यमादिसमाध्यवधीनि अष्टाङ्गान्यस्मादिति—
(शुभाङ्गः).
अङ्गिर्गतिकर्मा. इदित्त्वान्नुमित्यादि. पचाद्यच्.
(१) "शुभ शुम्भ, शोभार्थे" धा० तुदादिः कौ०पृ०४६६ इगुपधलक्षणः कः अगुणः. दीर्घः. ❋
एवं निष्पन्नभक्तिभ्यः अप्रतिप्रसवोऽन्मूलितभवोपप्लवां स्वसायुज्यरूपां शान्तिं ददातीति—
(शान्तिदः).

---

निरु०— ५९३ स्वशक्त्युद्भवकल्याणयमाद्यष्टाङ्गसंभवः ।
यस्मात् (शुभाङ्गः) संप्रोक्तः सतार्णां ध्यानदायकः ॥ ४५४ ॥
५९४ एवं निष्पन्नभक्तिभ्यः शान्तिं सायुज्यसंज्ञिकाम् ।
महानन्दां ददातीति (शान्तिदः) परिकीर्तितः ॥ ४५५ ॥

{५९६ / ९९०} स्रष्टा,

ॐ स्रष्ट्रे नमः ।

भा०—(२) "मत्प्रसादात् परां शान्ति स्थानं प्राप्स्यसि शाश्वतम्" गी० १८—५६।

(३) "तमीशानं वरदं देवमीड्यं निचाय्यात्मानं शान्तिमत्यन्तमेति" इत्यादि. ❋ श्वे० उ०३—११।

एवं मुमुक्षून् मुञ्चन् सिसृक्षूंश्च प्राचीनचिरन्तनकर्मवैचित्र्योचितपरिकरैर्योजयन् सृजतीति—

(स्रष्टा).

(१) "सृजिदृशोर्झल्यमकिति" इत्यम. ❋ ६।१।५८॥ कौ०पृ०४३०

निर्व०—(१) "डुदाञ्, दाने" धा०जुहो०कौ०पृ०४५१

(२) "आतोनुपसर्गे०" ३।२।३॥कौ०पृ०५७०

इति, कः. आल्लोपः. शमेर्भावे क्तिन्. अन्यदनुपदमेवावादि. ❋

इत्थं मुमुक्षून् मुञ्चन् संसिसृक्षूंश्च प्राचीनचिरन्तनकर्मवैचित्र्योचितपरिकरैर्योजयन् सृजतीति—

(स्रष्टा).

(१) "सृज, विसर्गे" धा० तुदा० कौ०पृ०४६१.

तृच्. अनिट्.

(२) "सृजिदृशोर्झल्यमकिति" ६।१।५८॥कौ०पृ०४३०

इति, झलादावकिति. अम्. मित्त्वादन्त्यादचः परः. ऋतो यण् रेफः.

(३) "व्रश्चभ्रस्जसृज०" ८।२।३६॥कौ०पृ०५१

इत्यादिना षत्वम्. ष्टुत्वम्. अनङित्यादि. ❋

निरु०—५९५ कर्मवैचित्र्यतस्सृष्टीन् (स्रष्टा) स्यात्सृजतीति यः ।

{५१६ / ८१३} कुमुदः,

---

ॐ कुमुदाय नमः ।

---

भा०— एवं सृष्टस्य आब्रह्मस्तम्बस्य उच्चावचशब्दस्पर्शादिभोगवती भूमिः कुः, प्राकृतमण्डलं तत्र भोक्तॄन् भोजयन् मोदत इति—
(कुमुदः).
मूलविभुजादित्वात् कः.
(१) "अनीशश्चात्मा बध्यते भोक्तृभावात्" श्वे०उ०१–८।
(२) "ज्ञाज्ञौ द्वावजावीशनीशौ" इति. ❋ श्वे०उ०१–९।
तत्र कौ कुत्सितं वा वलन्ते आसंसारं भ्राम्यन्ति इति कुवलाः जीवाः, ते स्वदेहेन्द्रियादौ आपेक्षिकाभिमानिका ईशाश्चेति कुवलेशाः तारतथा नियच्छन्यातीति—

---

निर्व०— एवं कौ आब्रह्मस्तम्बं सृष्टस्य उच्चावचशब्दादिभोगवत्यां भूमौ तदुपलक्ष्ये प्राकृतमण्डले तदधिकरणभूतान् भोक्तॄन् भोजयन् मोदते इति—
(कुमुदः).
(१) "मुद, हर्षे" धा०भ्वादिः कौ०पृ०३८२
(२) "मूलविभुजादिभ्य उपसंख्यानम्" इति ३।२।५॥कौ०पृ०५७१
तस्याकृतिगणत्वात् कः. इगुपधलक्षणो वा गुणः.
(३) "कै, शब्दे" आत्वम्. धा० भ्वादिः कौ०पृ०४२४
(४) "कुर्भश्च" इति चकारात् उणा०पा०१कौ०पृ०६१०
बाहुलकादन्यतोपि कुः. आल्लोपः. ❋

---

निरु०— ५१६ कौ प्राकृते मण्डले यस्तु भोक्तॄनपि भोजयन्॥४५६॥
मोदते यस्सदा काले (कुमुदः) स तु गीयते ।

(५९७) कुवलेशयः, ।

---

ॐ कुवलेशयाय नमः ।

---

भा०– ( कुवलेशयः ).

( १ ) "आतोनुपसर्गे कः" ❋ ३ । २। ३।। कौ० पृ०५७०

---

निर्व०–तत्र कौ भूमौ कुत्सितं वा वलन्ते आसंसारं भ्राम्यन्ति इति कुवलाः जीवाः, ते च ते ईशाः, देहेन्द्रियादावाभिमानिकाः स्वामिनश्चेति कुवलेशाः तांस्तथा नियच्छन् यातीति वा.

उक्तव्युत्पत्त्या कुवलो जीवः, जातावेकवचनम्, तत्र तन्नियच्छन् शेते इति वा–

( कुवलेशयः ).

पूर्वत्र ,

( १ ) "या, प्रापणे" धा० अदा० कौ० पृ० ४४३

(२)"आतोनुपसर्गे०" इति कः आल्लोपः.३।२।३।।कौ०पृ०५७०

(३)"ईश,ऐश्वर्ये" इगुपधलक्षणः कः.धा०अदा०कौ०पृ०४३८

(४)" वल वल्ल, संवरणे संचरणे च" धा०भ्वादिः कौ०पृ०४०३

पचाद्यच्. एकत्र कुशब्दो निरुक्तः. अन्यत्राप्ययम्-सांहितो गुणः. अपरत्र ,

( ५ ) " शीङ्, स्वप्ने " धा० अदा० कौ०पृ०४३८

( ६ ) " अधिकरणे शेतेः" इत्यच्. ३।२।१५॥कौ०पृ०५७३

गुणायादेशौ , व्युत्पादितात् कुवलशब्दात् ङिः सप्तमी तस्याश्चालुक्प्रकरणे ,

( ७ ) "शयवासवासिष्वकालात्" ६।३।१८॥कौ०पृ०१८८

इति अलुक् पाक्षिकः. ❋

---

निरु०–५९७कुत्सितं वलमेषां ते कुवला जीवसंज्ञिनाः।।४५७॥
देहेन्द्रियादेरीशास्ते कुवलेशा इति स्मृताः ।
यस्मान्नियच्छन्यातीति ( कुवलेशय ) उच्यते ॥ ४५८ ॥

(५९८) गोहितो, {५९९ / ४९७} गोपतिर्,

ॐ गोहिताय नमः । ॐ गोपतये नमः ।

भा०— गोः, प्रकृतेः संसारबीजावापे क्षेत्रीभूतायाः हितः- व्यवस्थापकः— ( गोहितः ).

( १ ) " यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सञ्च विचैति सर्वम् । तमीशानम् " श्वे० उ० ४—११ ।

(२)"गौरनाद्यन्तवती सा जनित्री भूतभाविनी"मन्त्रोप०।३३०—१८।

(३)"सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्"मन्त्रोप० ३३०—१७। इति. ❋

भोगभूमेः स्वर्गस्यापि पतिः— ( गोपतिः ).

निर्व०— तथा, गोः संसारबीजावापक्षेत्रभूतायाः प्रकृतेः हितः. तदधिष्ठानेन तस्याः कार्यकरतया व्यवस्थापकः इति— ( गोहितः ).

(१)"हि, गतौ " क्तः. अगुणः. अनिट्. धा०स्वादिःकौ०पृ०४६२

( २ ) " गम्लृ, गतौ " धा० भ्वादिः कौ०पृ०४३०

( ३ ) " गमेर्डोः " उणा० पा०२ कौ०पृ०६२२

इति, डोः. टिलोपः.

तथा, गोः भोगभूमेः स्वर्गस्यापि पतिः स्वामीति— ( गोपतिः ).

( १ ) " पातेर्डतिः " उणा० पा०५ कौ० पृ०६४२

व्युत्पादितश्चायं. तथा गोशब्दश्च. ❋

निरु०—५९८संसारबीजक्षेत्रस्य प्रकृतेः स्थापकश्च यः । स (गोहितः)-
५९९ स्वर्गभूमेः पतित्वाद् ( गोपतिः ) स्मृतः ॥ ४५९ ॥

१ कर्म ।

{ ६०० / ४९८ } गोप्ता,

ॐ गोप्त्रे नमः ।

भा०— अस्य कर्मफलचक्रस्य रक्षिता—

(गोप्ता). ❋

इति श्रीहारितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः-
श्रीरङ्गराजदिव्याज्ञालब्ध-श्रीपराशरभट्टापरनामधेयस्य
श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुनामसहस्रविवरणे
भगवद्गुणदर्पणे
षष्ठं शतकं समाप्तम् ।

निर्व०—अस्य कर्मफलचक्रस्य रक्षितृतया तद्गोपायति रक्षतीति—
(गोप्ता).
(१) "गुपू, रक्षणे" तृच्. धा० ना० कौ०पृ०३९७
(२) "आयादयः०" ३।१।३१॥ कौ०पृ०३९७
इत्यस्य वैकल्पिकतया वाऽऽयप्रत्ययः. ऊदित्त्वादिट्.
कोयमित्यत्र्यधाम. अनङ्ग्त्यादि. ❋

इति कुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज-
वरददेशिकतनयवरदगुरुवरसूनु-वरदाचार्यसूरिविरचिते
श्रीपराशरभट्टार्यभाषित-
श्रीभगवद्गुणदर्पणाख्यभाष्यानुगे भवन्नामसहस्रनिर्वचने
षष्ठं शतकं संपूर्णम् ।

निरु०— ६०० यः कर्मफलचक्रस्य (गोप्ता) हि परिपालनात् ।

# अथ सप्तमशतकप्रारम्भः।

(६०१) वृषभाक्षो, (६०२) वृषप्रियः, ॥

---

ॐ वृषभाक्षाय नमः। ॐ वृषप्रियाय नमः।

---

भा०— तच्च धर्मद्वारेणेति—

(वृषभाक्षः).

फलवर्षी वृषभो धर्मः, सोक्षः संसारचक्राधारो यस्मात्. ❋

एवं प्रवर्तकधर्मौ प्रियावस्येति—

(वृषप्रियः).

---

निर्व०— तच्च धर्मद्वारेणेति वृषभः, फलवर्षी धर्मः— अक्षः अस्य रथावयववाचिनः आधारोपलक्षणतया संसारचक्राधारोऽस्मादिति—

(वृषभाक्षः).

(१) " अक्षू, व्याप्तौ " पचाद्यच्. धा०भ्वादिः कौ०पृ०४०८

(२) " वृष, सेचने " धा०भ्वादिः कौ०पृ०४१०

(३) " कृशृशलिकलिगर्दिभ्योऽभच् " उणा०पा० ३ कौ०पृ०६३०

इति वर्तमाने,

(४) " ऋषिवृषिभ्यां कित् " उणा०पा०३ कौ०पृ०६३०

इति अभच्, कित्. अगुणः. दीर्घः. ❋

एवं वृषौ प्रवर्तकनिवर्तकौ धर्मौ प्रियाविष्टावस्येति—

(वृषप्रियः).

---

निरु०— ६०१ यस्याक्षो वृषभो धर्मो (वृषभाक्ष) स्स उच्यते॥४६०॥

६०२ धर्मौ प्रियौ तावस्येति प्रवर्तकनिवर्तकौ।

(वृषप्रिय.) स्स विज्ञेयो ह्यष्टार्णः फलदो मनुः ॥ ४६१ ॥

श्लो० ॥ ६४ ॥ (६०३) अनिवर्ती,

---

ॐ अनिवर्तिने नमः।

---

भा०— तत्प्रियत्वेन हि द्वैधानां कर्मणां धर्मत्वम्. तत्प्रियत्वख्यापनमेव च विध्यर्थः. इदञ्च (१)"फलमत उपपत्तेः" इत्यत्र न्यरूपि. ब्र०सू०३–२–३७। तथा च द्रमिडाचार्याः, (२) "फलसंविभत्सया हि कर्मभिरात्मानं पिप्रीषन्ति. स प्रीतोऽलं फलाय इति हि शास्त्रे मर्यादा" इति. ॥ द्रमिडाचार्याः ॥ अतः कर्मतत्संस्कारशक्त्यपूर्वभावनाविधिपक्षा उपेक्ष्याः. ❋ तत्र प्रवृत्तिकर्मरतानां धूमादिपितृयाणपुनरावृत्त्या संसारान्न निवर्तयतीति— (अनिवर्ती).

---

निर्व०—(१)"प्रीञ्, तर्पणे कान्तौ च" धा०क्र्यादिः कौ०पृ०४७४ (२) "इगुपधज्ञाप्रीकिरः कः" ३।१।१३५ ॥ कौ०पृ०५६७ इति कः. अगुणः. (३)"अचिश्नुधातु०" इति एः इयङ्. ६।४।७७॥ कौ०पृ०४५ (४) "ङिच्च" इत्यन्तादेशः. १ । १ । ५३ ॥ कौ०पृ०७ (५) "वृष, सेचने" तेनैव कः. नुद्रादिलक्षणो वा. अगुणः. ❋ धा०भ्वादिः कौ०पृ०४१० द्वैधानामपि कर्मणां तत्प्रियत्वेन हि धर्मत्वम्. तत्र प्रवृत्तिरतान् धूमादिना पितृयाणेन पथा पुनरावर्तयन् संसारान्निवर्तयतीति— (अनिवर्ती).

---

निरु०— ६०३ पितृयाणप्रवृत्तानां संसारान्न निवर्तनात्।
(अनिवर्ती) समाख्यातो ह्यशीर्णोऽभयदो मनुः ॥ ४६२ ॥

(६०४) निवृत्तात्मा,

---

ॐ निवृत्तात्मने नमः ।

---

भा०— ग्रहादित्वाण्णिनिः. एवं कामीत्यादयः. अतो हि संसारानुच्छेदः. यथा,

(१) " धूमो रात्रिस्तथा कृष्णष्षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते " गी०८—५ ।

(२) " कृतात्ययेनुशयवान् " ब्र०सू० ३—१—८ ।

इत्यादौ चैतद्व्याचारि. ❋

ततो निवृत्तानिवृत्तधर्माणोध्यात्मानोस्येति—

(निवृत्तात्मा). ❋

---

निर्व० (१) " वृतु, वर्तने " निपूर्वः. धा० भ्वादिः कौ०पृ०४१२ णिच्. गुणः. रपरः. ततः,

(२) " नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः " ३।१।१३४॥कौ० पृ० ५६७

इति ग्रह्यादित्वाण्णिनिः. णिलोपः. नञो नलोपः.

इन्नन्तदीर्घः. "३०" इत्यादि. ❋

ततो निवृत्ताः निवृत्तिधर्माणोऽध्यात्मानोऽस्येति—

(निवृत्तात्मा).

आत्मा व्युत्पादि.

(१) " वृतु, वर्तने " धा०भ्वादिः कौ०पृ०४१२ निपूर्वः. कर्तरि क्तः. अगुणः. उदित्त्वान्निष्ठायां नेट्. दीर्घस्सांहितः, ततो नान्तदीर्घ इत्यादि. ❋

---

निरु०— ६०४ निवृत्तिधर्माणो यस्य ह्यात्मानस्सन्ति स स्मृतः । (निवृत्तात्मे) त्यष्टवर्णो दुष्कर्मफलमोचकः ॥ ४६३ ॥

( ६०५ ) संक्षेप्ता ,

ॐ संक्षेप्त्रे नमः ।

भा०— तत्र प्रवृत्तान् संकुचितस्वाभाविकज्ञानप्रभावान् कर्तुं शीलमस्येति—

( संक्षेप्ता ). यथा ,

( १ ) " यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा " ॥ वि०पु० ६—७६—२ ।

इत्यादौ. ❋

निवृत्तानां तत्संकोचनविमोचनं क्षेमं करोतीति—

निर्व०— तत्र प्रवृत्तिरतान् तच्छीलः संक्षिपति स्वाभाविकज्ञानप्रभावाभ्यां संकोचयतीति—

( संक्षेप्ता ).

( १ ) " क्षिप , प्रेरणे " धा० तुदा० कौ०पु० ४६४ संपूर्वः.

( २ ) " तृन् " ३ । २ । १३५ ॥ कौ० पु० ६०१ इति ताच्छीलिकस्तृन्. गुणः. अनिट्, अनडादि. समो मः अनुस्वारः.

पाक्षिकः परसवर्णः. ❋

निवृत्तानां तु तत्संकोचनविमोचनलक्षणं क्षेमं कुशलं करोतीति—

निरु०— ६०५ स्वाभाविकासंकुचितमेधायाश्च प्रकाशनम् ।
निवृत्तिधर्मणां कर्तुं शीलं यस्यास्ति सर्वदा ॥ ४६४ ॥
स ( संक्षेप्ते ) ति कथितः षडर्णो धीविकासदः ।

(६०६) क्षेमकृत्, (६०७) शिवः,।

---

ॐ क्षेमकृते नमः। ॐ शिवाय नमः।

---

भा०—(क्षेमकृत्). ❋
एवं सर्वबुभुक्षुमुमुक्षुशिवंकरत्वात्
(शिवः). यथा,
(१) "संसारमोक्षस्थितिबन्धहेतुः"
(२) "पितृलोके राज्यमनुशास्ति देवः"
(३) "शिवश्शिवानामशिवोऽशिवानाम्" इति. ❋ भा०३०४१—६।
अथ शिवत्वोपपादकानि. ईशितव्याद्विभाजक-
लक्ष्मीवाँछ्यसौभाग्यचिह्नं श्रीवत्सोऽस्य वक्षसीति—

---

निर्व०—(क्षेमकृत्).
करोतेः क्विपि तुक्. अगुणः.
(१) "क्षि, क्षये" इत्यादि. धा० भ्वादिः कौ० पृ० ३९२
(२) "अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्"
इति मन्. गुणः. अनिट्. ❋ उणा० पा०१ कौ० पृ० ६१६
एवं सर्वे बुभुक्षवो मुमुक्षवश्च शेरते शिवंकरोस्मिन्निति—
(शिवः).
(१) "शीङ्, स्वप्ने" धा० अदा० कौ० पृ० ४३८
(२) "सर्वनिघृष्व०" उणा० पा०१ कौ० पृ० ६१७
इत्यादिना रन्प्रत्ययः. ह्रस्वश्चेत्याद्यवोचाम.
(३) "नेड्वशि०" इति नेट्. ❋ ७।२।८॥ कौ० पृ०५८१

---

निरु०— ६०६ असंकोचज्ञानरूपक्षेमस्य करणात्सताम् ॥ ४६५ ॥
(क्षेमकृच्) चापि सर्वेषां—
६०७ शिवस्य करणाच्च (शिवः)।

## (६०८) श्रीवत्सवक्षाः,

ॐ श्रीवत्सवक्षसे नमः ।

ना०—( श्रीवत्सवक्षाः ).

(१) " श्रीवत्सवक्षाः " इति. ❋ रा०यु०११४-१५।

निर्व०— अथ शिवत्वोपपादकानि ईशितव्याद्विराजकस्य लक्ष्मीवाँछ्यसौभाग्यस्य चिह्नं श्रीवत्सः महापुरुषलक्षणश्वेतरोमावर्तविशेषो वक्षसि हृदयेऽस्येति— ( श्रीवत्सवक्षाः ).

(१) "वच, परिभाषणे " असुन्प्रकरणे, धा०अदा०कौ०पृ०४४३

(२) " पचिवचिभ्यां सुट् च " इति, असुन्. उणा०पा०४कौ० पृ०६४१ तस्य सुट् च. टित्वादाद्यवयवः. अनिट्.

( ३ ) "चोः कुः" इति. झलि कुत्वम्. कः. ततः ८।२।३०॥ कौ०पृ०६८

( ४ ) " इण्कोः" इत्यधिकृत्य, ८।३।५७॥कौ०पृ०३४

( ५ ) " आदेशप्रत्यययोः " ८।३।५९॥कौ०पृ०३४ इति, प्रत्ययावयवस्य सस्य षत्वम्.

( ६ ) "वद, व्यक्तायां वाचि " धा०भ्वादिः कौ०पृ०४३४

( ७ ) "वृतॄवदिहनिकमिकषिभ्यस्सः" उणा०पा०३कौ०पृ०६२७ इति डः.

(८) " तितुत्र० " इति नेट्. चर्त्वम्. ७।२।९॥कौ०पृ०६०८

( ९ ) " श्रिञ्, सेवायाम् " धा०भ्वादिः कौ०पृ०४२२

( १० ) " क्विब्वचि०" इत्यादिना क्विप् प्रत्ययो दीर्घश्च. ३।२।१७८॥कौ०पृ०६०७

( ११ ) "सप्तमीविशेषणे बहुव्रीहौ"२।२।३५॥कौ०पृ०१७३।

निरु०— ६०८ लक्ष्मीवाँछ्यसौभाग्यचिह्नं श्रीवत्सनामकम् ॥४६६॥

( श्रीवत्सवक्षा ) यस्यास्ति वक्षसीति स तु स्मृतः ।

(६०९) श्रीवासः, (६१०) श्रीपतिः,

ॐ श्रीवासाय नमः। ॐ श्रीपतये नमः।

भा०—(१) "नित्यश्रीः" इति—रा० यु० ११४—१५। तेन यत्सूच्यते तदुच्यते— (श्रीवासः).
(२) "श्रियो नित्यस्वैरविहारकल्पद्रुमोद्यानम्"
(३) "तुल्यशीलवयोवृत्ताम्" इतिवत्. ❀ रा०सु०१६—५। तस्याः समुचितो नित्यस्वयंवरपतिः— (श्रीपतिः). यथा,
(१) "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" पु०सू०।
(२) "अस्येशाना जगतो विष्णुपत्नी" ❀ श्रीसू०।

निर्व०—इति सप्तमीग्रहणात्. अस्ति हि व्यधिकरणानामपि बहुव्रीहिः. अन्यथाऽयुक्तम्. न च पूर्वनिपातः.
(१२) "गड्वादिभ्यः परा सप्तमी" २। २।३५॥कौ०पृ०१७३ इति, निपातादित्युक्तम्. असन्तलक्षण उपधादीर्घ इत्यादि. ❀ तेन च यत्सूचितं तदुच्यते. स्वस्वश्रियो नित्यस्वैरविहार—कल्पद्रुमोद्यानतया श्रीर्वसत्यस्मिन्निति— (श्रीवासः).
(१) "वस, निवासे" धा० भ्वादिः कौ०पृ०४३२
(२) "हलश्च" ३। ३। १२१॥ कौ०पृ० ६६३ इत्यधिकरणे- घञ्. वृद्धिः. श्रीशब्दो व्याख्यातः. उत्तरत्राप्येवमवधेयम्. ❀
तस्याः श्रियः पतिः नित्यस्वयंवरवल्लभ इति— (श्रीपतिः). पतिर्व्याख्यातः. ❀

निरु०—६०९ श्रियो विहारस्थानत्वात् (श्रीवास) इति चोच्यते॥४६७
६१० स्वयं श्रियः पतित्वेन वृत्तत्वात् (श्रीपतिः) स्मृतः।

## (६११) श्रीमतांवरः, ॥

---

ॐ श्रीमतांवराय नमः ।

---

ना०— तस्याः सादरपूर्णनिर्वर्णननित्यपात्रं भगवान् ; ब्रह्मादयस्तु तन्नान्तरीयककटाक्षशीकरक्षणलक्ष्यम्. यथा ,
(१) "शुक्लमाल्याम्बरधरा स्नाता भूषणभूषिता । पश्यतां सर्वदेवानां ययौ वक्षःस्थलं हरेः ॥ तयावलोकिता देवा हरिवक्षःस्थलस्थया । लक्ष्म्या मैत्रेय सहसा परां निर्वृतिमागताः" इति , वि० पु० १९– १०६ ।
तस्मात्—
(श्रीमतांवरः). ❀
नित्यनूतननिर्व्याजप्रणयनर्मश्रियं तस्यै ददातीति—

---

निर्व०—भगवतस्तत्सादरपूर्णनिर्वर्णननित्यपात्रतया श्रीमत्त्वम्. श्रियो नान्तरीयककटाक्षशीकरक्षणलक्षीभावसमासादितसाम्राज्यलक्ष्मीकाणां ब्रह्मादीनां वरः श्रेष्ठ इति—
(श्रीमतांवरः).
(१) "वृञ्, वरणे" धा० स्वादिः कौ० पृ० ४६२
(२) "ग्रहवृदृनिश्चिगमश्च" ३ । ३ । ५८ ॥कौ०पृ०६५३
इत्यप्. गुणो रपरः. श्रीशब्दात्
(३) "तदस्य०" ५ । २ । ९४ ॥ कौ०पृ०३२५
इति, मतुप्. तत आम्. अनुस्वारपाक्षिकपरसवर्णौ. ❀
स्वस्य तज्जीवातुतया तस्यै श्रियं नित्यनूतननिर्व्याजप्रणयरससंपदं ददातीति—

---

निरु०— ६११ देवानां श्रीमतां श्रेष्ठः (श्रीमतांवर)उच्यते ॥४६८॥

## श्लो० ॥ ६५ ॥ ( ६१२ ) श्रीदः, ( ६१३ ) श्रीशः,

### ॐ श्रीदाय नमः । ॐ श्रीशाय नमः ।

भा०—( श्रीदः ).

तस्या जीवातुरित्यर्थः. तच्छ्रयणेन हि सा श्रीर्निरुच्यते,

( १ ) " न च सीता त्वया हीना न चाहमपि राघव । मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ " रा०अयो०५३—३१ ।

इति हि तस्याः प्रकृतिः.

( २ ) " विष्णोरेषानपायिनी " वि०पु०१९—१४४ ।

( ३ ) " अनन्या हि मया सीता भास्करेण प्रभा यथा " रा० यु०१२१—१९।

( ४ ) " अनन्या राघवेणाहम् " रा० सु० २१—१५।

इति च. ❀

( १ ) " श्रियश्श्रीश्च भवेदग्र्या " इति.

तस्या अपि तथा स्वनिदानत्वात् श्रीशः, यद्वा श्रीरेवास्यापि ईशा सर्वावस्थाव्यवस्थापिकेति—

( श्रीशः ).

निर्व०—( श्रीदः ).

ददातेः कः. आल्लोपः. ❀

स्वस्य श्रियोपि श्रीत्वनिदानतया श्रियः ईशः. निर्वाहक इति वा; सा हि

( १ ) " पुंप्रधानेश्वरेश्वरी " पा० सनत्कुमार—सं० ११३ ।

ततः श्रीरीशा सर्वावस्थाव्यवस्थापिका अस्येति वा—

( श्रीशः ).

निरु०—६१२ योसौ श्रियै स्वप्रणयरसदः ( श्रीद ) ईरितः ।
६१३ ( श्रीशः ) स्याच्छ्रिय ईशत्वादीशा श्रीरस्य वा मतः ॥५६९॥

( ६१४ ) श्रीनिवासः, ( ६१५ ) श्रीनिधिः.

---

ॐ श्रीनिवासाय नमः । ॐ श्रीनिधये नमः ।

---

भा०— (२) " आदावात्मगुणत्वेन भोग्यरूपेण विग्रहे । आधारकस्वरूपेण दासीभावेन वा सदा "
( ३ ) " पुंप्रधानेश्वरेश्वरी " पा० सनत्कुमार–सं० ११३ ।
इति हि तस्याः नाम. ❀
दिव्यवल्ल्या इव कल्पद्रुमः तस्या नित्योपपन्नः –
( श्रीनिवासः ). ❀
रत्नमञ्जरीव मञ्जूषायां श्रीरस्मिन्निहितेति–
( श्रीनिधिः ). ❀

---

निर्व०— ईशः. कप्रत्ययान्त उक्तः. अनुकल्पे च स्त्रियामतष्टाप्. दीर्घश्चेति विशेषः. तथा बहुव्रीहावुपसर्जनह्रस्वश्च दीर्घः. ❀
दिव्यवल्ल्या इव कल्पद्रुमः श्रियो निवासः. तस्या नित्योपपन्न इति–
( श्रीनिवासः ).
वसतिर्निपूर्वः. पूर्ववदधिकरणे घञ् वृद्धिः. ❀
रत्नमञ्जरीव मञ्जूषायां श्रीर्निधीयतेस्मिन्निति–
( श्रीनिधिः ).
( १ ) " डुधाञ्, धारणपोषणयोः " धा०जुहो०कौ०पृ०४५१
निपूर्वः.
( २ ) " कर्मण्यधिकरणे च " ३।३।९३ ॥ कौ०पृ० ६५८
इति, घोः किः. आल्लोपः. ❀

---

निरु०—६१४ नित्योपपन्ननिवासत्वा (श्रीनिवासः) श्रीयः स्मृतः ।
६१५ श्रीरस्मिन्निहिता नित्यं (श्रीनिधिः) परिकीर्तितः॥४७०॥

(६१६) श्रीविभावनः, । (६१७) श्रीधरः,

ॐ श्रीविभावनाय नमः । ॐ श्रीधराय नमः ।

---

भा०— सैवास्य विभावनी प्रख्योपाख्याहेतुरिति—

(श्रीविभावनः).

(१) "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इतिवत्. ❋ रा०आ० ३७–१८ ।

तां रत्नमिवार्चिषं पुष्पमिव सुरभिम् इन्दुरिव चन्द्रिकाम् अमृतमिव स्वादुताम् औत्पत्तिकेन संबन्धेन धरतीति—

(श्रीधरः).

(१) "न हि हातुमियं शक्या कीर्तिरात्मवतो तथा" इति. ❋ रा० अ० ३० २९ ।

---

निर्व०—तस्याः तत्प्रख्योपाख्यहेतुतया श्रिया विभाव्यत निरूप्यत इति—

(श्रीविभावनः).

(१) "भू, सत्तायाम्" विपूर्वः. धा० भ्वादिः कौ०पृ०३६८ णिच्. वृद्ध्यावादेशौ. ततः.

(२) "कृत्यल्युटो बहुलम्" ३।३।११३॥ कौ०पृ० ६६२ इति कर्मणि ल्युट्. अनः. णिलोपः. ❋

तां च श्रियं रत्नपुष्पेन्द्वमृतानि अर्चिस्सौरभचन्द्रिकास्वादुता इवौत्पत्तिकेन संबन्धेन धरतीति—

(श्रीधरः).

धृञोचि धर उक्तः. अन्यच्च वक्तव्यं प्रागेव प्रव्यक्तमभ्यधायि. ❋

---

निरु०—६१६ यस्य प्रख्योपाख्यहेतुः श्रीःस्यात्स (श्रीविभावनः)।
६१७ रुच्यर्चिः कौमुदीगन्धान् सुधारत्नेन्दुपुष्पवत् ॥४७१॥
श्रियं धरति नित्यं यः (श्रीधरः) स तु कीर्तितः ।

## (६१८) श्रीकरः, (६१९) श्रेयश्श्रीमान्,

---

## ॐ श्रीकराय नमः। ॐ श्रेयश्श्रीमते नमः।

---

भा०— तां परत्व इव व्यूहावतारादिष्वपि स्वानुरूपां करोतीति— (श्रीकरः).

(१) " कृञो हेतुताच्छील्यानुलोम्येषु " ३।२।२०॥ कौ०पृ०५७४ इति आनुलोम्ये टः. एवं तीर्थंकर इत्यादि. यथा,

(२) " देवत्वे देवदेहेयम् " वि०पु०१-९-१४२। इत्यादि. ❋

श्रेयसे सर्वपुरुषार्थाय श्रयणीया श्रीः श्रेयःश्रीः सा अस्य नित्ययोगिनीति— (श्रेयःश्रीमान्).

यथा,

---

निर्व०— तां श्रियं परत्व इव व्यूहादिष्वपि स्वानुरूपां करोतीति— (श्रीकरः). करोतेः,

(१) " कृञो हेतुताच्छील्यानुलोम्येषु " ३।२।२०॥ कौ० पृ०५७४ इति आनुलोम्ये टः. गुणः रपरः. ❋

तथा श्रेयसे सर्वपुरुषार्थाय तदर्थिभिः श्रीयते आश्रीयत इति श्रेयःश्रीः प्रकृता लोकमाता, सा नित्यमस्यास्तीति— (श्रेयश्श्रीमान्).

एकं नाम. श्रीशब्दोऽत्र बाहुलकात्;

---

निरु०—६१८परव्यूहावतारेषु स्वानुरूपां करोति ताम् ॥ ४७२ ॥
श्रियं योसौ (श्रीकरः) स्यान् मुन्यर्णः श्रीकरो मनुः।
६१९ श्रेयसे श्रयणीया श्रीः श्रेयश्श्रीर्नित्ययोगिनी ॥४७३॥
(श्रेयःश्रीमान) सावस्य वस्वर्णः पुरुषार्थदः।

श्लो० ॥ ७३ ॥ ( ६८४ ) स्तव्यः,

---

ॐ स्तव्याय नमः ।

---

भा०— ( स्तव्यः ).

स्तवमर्हतीति, यत्. अनर्घ्यारोप्यमहामङ्गलनित्यनिरवधिकनिरवद्यगुणो नाम सहस्रव्यपदेश्यः. पतिरेव स्तुतिमर्हति, इति न तु विपरीतगुणो देवतान्तरादिः. बार्हस्पत्यस्मृतौ,

( १ ) " आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् " बा० स्मृ० ।

( २ ) " इतीदं कीर्तनीयस्य " "इत्यादि. ※ भा० आ० १४९–१२१ ।

---

निर्व०— इत्थं मनःशरीरयोर्व्यापारेण समाराध्यत्वमुक्तम्. अथ वाचः. तेन तदुच्यते. नामसहस्रव्यपदेश्यतया-नर्घ्यारोप्य महामङ्गलनित्यनिरवधिनिरवद्यगुणकतया च स्तवं स्तुतिमर्हतीति—( स्तव्यः ).

( १ ) " ष्टुञ्, स्तुतौ " धा० अदा० कौ० पृ० ४४०

षत्सः. अन्यच्च प्राग्वत्.

( २ ) " ऋदोरप् " ३।३।५७॥कौ० पृ० ६५२

इति अप्. गुणावादेशौ. ततः स्तवशब्दात्,

( ३ ) " तदर्हति " इत्यर्थे, ५।१।६३॥कौ० पृ० ३०१

( ४ ) " दण्डादिभ्यो यः " ५।१।६६॥कौ० पृ० ३०१

इति तस्य आकृतिगणत्वात् यः. तद्धितः.

( ५ ) " छन्दसि च " ५।१।६७॥कौ० पृ० ६९४

---

निरु०—६८४ चेतश्शरीरयोर्जन्तोर्व्यापाराराध्यता हरेः॥५२४॥
उक्ता नारायणस्याथ वागाराध्यत्वमुच्यते ।
स्तुतः स्तुत्यर्हणात् ( स्तव्यः ) षड्गुणो बन्धमोचकः ॥ ५२५ ॥

( ६८५ ) स्तवप्रियः,

---

ॐ स्तवप्रियाय नमः ।

---

भा०— यथाकथञ्चित्, यया कयाचिद्भाषया, येन केनापि, तेजस्करः तिरस्करी वा, गुणसंकीर्तनाभिमानेन क्रियमाणस्तवः स्वविषयः प्रियतमोऽस्येति—

( स्तवप्रियः ).

अकण्टकमेतत् घण्टाकर्णादिवृत्ते. ❋

स्वस्तोत्रमपि प्रसन्नेनानेन करणभूतेन निष्पाद्यत इति—

---

निर्व०— इति वा, प्रातिपदिकमात्रप्रकृतिकः. अस्त्येव ह्यस्य छन्दोभावः. यतोयं पञ्चमो वेदः. णत्वम्.

( ६ ) " यस्य० " इति लोपः. ६ । ४ ।१४८ ॥ कौ०पृ०५६

स्वविषयो येन केनापि पुरुषेण यया कयाचन भाषया यथाकथंचित् तेजस्करः तिरस्कारी वा गुणसंकीर्तनाभिमानेन क्रियमाणः स्तवः स्तुतिः प्रियोस्येति—

( स्तवप्रियः ).

( १ ) " प्रीञ्, तर्पणे कान्तौ च " धा० क्रयादिः कौ०पृ० ४७४

( २ ) " इगुपधज्ञाप्रीकिरः कः " ३ । १ ।१३५॥कौ०पृ०५६७

इति कः. अगुणः. इयङ् "इत्यादि. स्तव उक्तः. ❋

स्वस्तोत्रस्यापि श्रुदस्तवादौ प्रसन्नेनानेन करणभूतेन निष्पाद्यतया स्तूयतेनेनायमिति—

---

निरु०—६८५ यया कयाचिद्भारत्या येन केनापि जन्तुना ।
यथाकथंचित् कथितो यस्य प्रियतमस्तवः ॥ ५२६ ॥
( स्तवप्रियः ) स कथितो वस्वर्णः प्रीतिवर्धकः ।

( ६८६ ) स्तोत्रम् , ( ६८७ ) स्तुतः ,

ॐ स्तोत्राय नमः । ॐ स्तुताय नमः ।

भा०—( स्तोत्रम् ).
( १ ) " दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे "
इति ष्ट्रन्. इदन्तु ध्रुवस्तवे द्रष्टव्यम्. ❋ ३।२।१८२॥कौ०पृ०६०८
सहस्रफणत्रयीमयादिभिस्सूरिभिरनन्तैः ब्रह्मादिभिरस्म-
दादिभिश्चाविशेषेणानवधौ काले तत्तदभिलषितसिद्धये स्तुत इति—
( स्तुतः ). यथा ,
( १ ) " अशेषदेवेशनरेश्वरेश्वरैस्सदा स्तुतं यच्चरितं महा-
द्भुतम् " इति.

निर्व०—( स्तोत्रम् ).
( १ ) " ष्टुञ् , स्तुतौ " धा० अदा०कौ०पृ०४४०
षस्सः. तोष्टुः. ष्ट्रन्करणे ,
( २ ) " दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे "
३ । २ । १८२ ॥ कौ० पृ० ६०८
इति ष्ट्रन्.
( ३ ) " षः प्रत्ययस्य " १।३।६॥ कौ०पृ०९३
इति षः. इत्. तोष्टुः. अनिट्. गुणः. आविष्टलिङ्गोयम् इत्यादि.
सहस्रफणत्रयीमयादिभिस्सूरिभिरनन्तैर्ब्रह्मादिभिरस्म-
दादिभिश्च अविशेषेण अनवधौ काले तत्तदभिलषित-
सिद्धये स्तूयते ह्ययम् इति—( स्तुतः ).
धातुः प्राग्वत्. अन्यच्च कर्मणि क्तः. अगुणः. अनिट्. ❋

निरु०-६८६ स्वेनैव निष्पाद्यतया स्वस्तुतेः(स्तोत्र)मुच्यते॥५२७॥
६८७ शेषशेषासनाद्यैर्यः सूरिभिश्चास्मदादिभिः ।
स्तुतत्वादविशेषेण ( स्तुत ) इत्यभिधीयते ॥ ५२८ ॥

( ६८८ ) स्तोता, ( ६८९ ) रणप्रियः, ।

---

ॐ स्तोत्रे नमः । ॐ रणप्रियाय नमः ।

---

भा०—(२) " धाता पुरस्ताद्यमुदाजहार- शक्रः प्रविद्वान् प्रदिशश्चतस्रः " इति. पु० सू० १७।

अस्मदादिसर्ववस्तुतत्वं प्रदिशश्चतस्र इति. ※

स्वस्तोतारं स्तोतुं शीलमस्येति—

( स्तोता ).

( १ ) " यं स्तुवन् स्तव्यतामेति वन्दमानश्च वन्द्यताम् " वि० ध० ७५-५७।

इति. एतत् कैलासयात्रायाम्. ※

श्रीमद्रामायणमहाभारतप्रभृत्यभिष्टुताभीष्टदिव्यचेष्टितः—

( रणप्रियः ).

सुहृत्प्रीणनरणादिचेष्टितो हि सः, यथा,

---

निर्व०— कैलासयात्रादौ स्वस्तोतारं स्वयमेव तच्छीलः स्तौतीति—

( स्तोता ).

प्राग्वदेव धातुः.

( १ ) " तृन् " ३।२।१३५॥कौ०पृ०६०१

इति ताच्छीलिकस्तृन्. गुणः. अनङ्. "इत्यादि. ※

श्रीमद्रामायणमहाभारतप्रभृत्यभिष्टुतदिव्यचेष्टिततया

प्रियः अभीष्टः रणः सुहृत्प्रीणनसमरचेष्टास्येति—

( रणप्रियः ). प्रीणातेः,

( १ ) " इगुपध० " ३।१।१३५॥कौ०पृ०५६७

---

निरु०— ६८८ स्वस्तोतारं परं स्तोतुं शीलं यस्यास्ति सर्वदा ।

( स्तोता ) स स्यात् पञ्चवर्णः सर्वस्तुत्यत्वदो मनुः ॥ ५२९ ॥

६८९ सुहृत्प्रियं युद्धकर्म यस्यास्ति स ( रणप्रियः ) ।

( ६९० ) पूर्णः,

ॐ पूर्णाय नमः ।

भा०—(१) "ततस्स्वकामं सुग्रीवमङ्गदं च महाबलम् । चकार राघवः प्रीतो हत्वा रावणमाहवे" ❋ रा० यु० १११-३१।

बह्वव्ययाऽयाससत्काराविरहेऽपि स्तोत्रादिमात्रसाध्योऽयम्

कुतः यतः—

( पूर्णः ).

स्वत एवाऽवाप्तसमस्तकामः.

निरु०— इत्यादिना स्वतन्त्रत्वेन अगुणं इत्यादि च निरुक्तम्- इत्याद्यर्थाः. गणनिरशब्दकर्मा. पचाद्यच्. अकर्तरि च,

( २ ) " वशिरण्योरुपसंख्यानम् " ३।३।५८॥ कौ० पृ० ६५३

इति औपसंख्यानिकः. तत्र हि.

(३) "भावे" "अकर्तरि च कारके०" ३।३।१९॥ कौ० पृ० ६४७

इति वर्तते.

( ४ ) "ग्रहवृदृनिश्चिगमश्च" ३।३।५८॥ कौ० पृ० ६५३

इति सूत्रस्थं हि तद्वार्तिकम्. बहुव्रीहौ नियम्य द्विपदान्तरेण

( ५ ) "सप्तमी विशेषणे बहुव्रीहौ" २।२।३५॥ कौ० पृ० १७३

इति नित्यं पूर्वनिपाते प्राप्ते.

(६) "वाप्रियस्य" इति विभाषा हि. २।२।३५॥ कौ० पृ० १७३ वा० भवति. सः अतोऽत्र परप्रयोगः. ❋

बह्वव्ययाऽयासविरहेऽपि स्तोत्रादिमात्रसाध्यो ह्ययम्.

कुतः यतः पूर्णः स्वत एवावाप्तसमस्तकामो भवतीति—

( पूर्णः ).

निरु०—६९० अवाप्तसर्वकामत्वं यस्यासौ (पूर्ण) इत्युच्यते॥५३०॥

निर्दे०—( १ ) " पूरी, आप्यायने " धा० चुरा० कौ० पृ० ४८६ इदित्. अकर्मकात् कर्तरि क्तः.

( २ ) " श्वीदितो निष्ठायाम् " इति इण्निषेधः. ७।२।१४॥ कौ० पृ० ७८९

( ३ ) " रदाभ्याम्० " ८।४।४२॥ कौ० पृ० ५८६ इत्यादिना निष्ठातो नः.

( ४ ) " रषाभ्याम्० " इति णत्वम्. ८।४।१॥ कौ० पृ० ३९

नचेदं पृधातो रूपम्. तत्र हि निष्ठायाम् अगुणे,

( ५ ) " श्युकः० " इति इडभावे ७।२।११॥ कौ० पृ० ४२५

( ६ ) " उदोष्ठ्यपूर्वस्य " ७।१।१०२॥ कौ० पृ० ४४१ इति उत्वे रपरत्वे च,

( ७ ) " रदाभ्याम्० " ८।२।४२॥ कौ० पृ० ५८६ इति नत्वम् प्राप्तम्.

( ८ ) " नध्याख्यापृमूर्छिमदाम् " ८।२।८७॥ कौ० पृ० ७११ इति प्रतिषिध्यते. येन तत एव

( ९ ) " हलि च " ८।२।७७॥ कौ० पृ० ६३ इति दीर्घे णत्वे च उक्तरूपं स्यात्. नाप्ययम्,

( १० ) " वादान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः " ७।२।२७॥ कौ० पृ० ७९४ इति पाक्षिको निपातः. ते हि णिचि निष्ठान्ता निपात्यन्ते. अथवायमस्तु कथंचिण्णिचि निष्ठायां निष्ठा अयन्निपातः. तत्रेडभावो निपात्यः. ण्यन्तः इदित् नेति तथा णिलोपोपि.

( ११ ) " निष्ठायां सेटि " इति सेड्ग्रहणसामर्थ्यात् ६।४।५२॥ कौ० पृ० ५९२

( १२ ) " णेरनिटि " इति णिलोपस्याप्रवृत्तेः. अन्यत् समम्. ❀ ६।४।५१॥ कौ० पृ० ३९९

## ( ६९१ ) पूरयिता, ( ६९२ ) पुण्यः.

### ॐ पूरयित्रे नमः। ॐ पुण्याय नमः।

भा०— किन्तर्हि पूरणीयवत् स्तोत्रादिकमपेक्षेत, तन्मनोरथ-पूरणशीलत्वात् तदाह—
( पूरयिता ). ❁
पातकिनोपि स्वस्तुत्यर्हयन् पुनातीति—
( पुण्यः ).
( १ ) " पूञो यण्णुह्रस्वश्च " ❁ उणा०पा० ५
कौ०पृ० ६४३

निर्व०— अथापि पूरणीयवत् तदनुजिघृक्षया तत्कृतं स्तोत्रादिकम् अपेक्ष्य तन्मनोरथं तच्छीलः पूरयतीति—
( पूरयिता ).
धातुः प्राग्वत्. णिच्. ततस्तृन्. इट्.
( १ ) " अनिटि " इति प्रतिषेधात् ६।४।५१॥ कौ०पृ० ३९९
न णिलोपः. गुणः. अय्. अनङ् इत्यादि. ❁
पातकिनोऽपि स्वस्तुत्यर्हयन् पुनातीति वा, तेषामपि पावनत्वस्तुत्यर्हीकरणेन पुणति शुभकर्मा भवतीति वा, तानपि पावयन् पुण्ययति पुण्यान् स्वस्तुत्यर्हतया शुभकर्मणः करोतीति वा—
( पुण्यः ). पूर्वत्र,
( १ ) " पूञ्, पवने " धा० क्र्यादिः कौ०पृ० ४७५
( २ ) " पूञो यण्णुह्रस्वश्च " उणा०पा० ५ कौ०पृ० ६४३

निरु०—६९१ सदा पूरयितुं शीलं यस्य स्तोतृमनोरथान्।
स स्यात् ( पूरयिता )—
६९२ ( पुण्यः ) योऽसौ पातकिपावनः ॥ ५३१ ॥

## (६९३) पुण्यकीर्तिः.

---

ॐ पुण्यकीर्तये नमः ।

---

भा०—संकीर्तनमपि तथेति—
(पुण्यकीर्तिः).

(१) "नामसंकीर्तनं भक्त्या विलायनमनुत्तमम् । मैत्रेयाशेषपापानां धातूनामिव पावकः"

---

निर्व०—इति वत. तस्य पुट् धातोः ह्रस्वश्च. ह्रस्वविधानसामर्थ्यात् न गुणः. पुटः प्रत्ययादित्यमाश्रित्य वलादिलक्षण इट् प्राप्तः.

(३) "न दृशि०" इति प्रतिषिध्यते. अपरत्र ७।२।८॥ कौ०पृ०५८१

(४) "पुण, कर्मणि शुभे" धा०तुदा०कौ०पृ०४६६

(५) "अघ्न्यादयश्च" उणा०पा०४ कौ०पृ०६३७

इति तस्याकृतिगणत्वात् यक्. अगुणः. अन्यत्रोक्तविधया निपातनात् पुण्यशब्दात्,

(६) "तत्करोति०" इति णिच्. चुरा०गणसूत्रम्. कौ०पृ०४९०

(७) "णाविष्ठवत्" ६।४।१५५॥ कौ०पृ०३१०

इति टिलोपः. ततः पचाद्यच्. णिलोपः. ❀

तथा पुण्या पुनाना शुभा तादृशं कुर्वाणा वा कीर्तिः संकीर्तनमस्येति—(पुण्यकीर्तिः).

(१) "कृत, संशब्दने" चुरादिः णिच्. धा०चुरा०कौ०पृ०४८३

(२) "उपधायाश्च" ७।१।१०१॥ कौ०पृ०४८३

इति इत्त्वम्. रपरत्वम्.

(३) "उपधायां च" इति दीर्घः, तत इन् प्रकरणे ८।२।७८॥ कौ०पृ०३८३

---

निरु०—६९३ पुण्यः श्लोकोऽस्मि यस्येति (पुण्यकीर्तिः) स तु स्मृतः ।

( ६९४ ) अनामयः , ॥

ॐ अनामयाय नमः ।

भा०–(२) " अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव " वि०पु०८–१९ ।
( ३ ) " कलौ संकीर्त्य केशवम् " इति. वि०पु०६–२–१७।
अत एव हि तत्परसूक्तादीनां पङ्क्तिपावनत्वश्रुतिः. ※
एवं स्वसंस्पर्शादिव्योपधेन–
( अनामयः ).
संसारमहाव्याधिविरोधी भवो हि व्याधिः भगव–
दनुभवशक्तिप्रतिबन्धकत्वात्.
( १ ) " व्याधिभिः परिपूर्णोऽस्मि "
इति तज्ज्ञवचनात्. ※

निर्व०–(४)"हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च" उणा०पा०४ कौ०पृ०६३७
इति इन्. णिलोपः. रुत्वम्. अन्यथा चापि व्युत्पादितम् प्रागेव. पुण्यशब्दो ह्यस्मादुक्तः. ततः,
स्त्रियामतट्टावादि.
( ५ ) " स्त्रियाः पुंवत्० " ६।३। ३४ ॥ कौ०पृ०१६०
इत्यादिना पूर्वपदस्य पुंवद्भावः. ※
एवम् स्वसंस्पर्शादिव्योपधेन आमयस्य भगवदनुभव–
शक्तिप्रतिबन्धकतया महाव्याधिरूपस्य भवस्य विरोधीति–
( अनामयः ).
( १ ) " मीञ् , हिंसायाम् " धा० क्र्यादिः कौ०पृ०४७४
आङ्पूर्वः. पचाद्यच्.

निरु०–६९४संसाराख्यमहाव्याधेः विरोधित्वाद्(अनामयः)॥५३२।

श्लो० ॥ ७४ ॥ (६९५) मनोजवम्,

---

ॐ मनोजवाय नमः।

---

भा०— उक्तेषु शीघ्रकारित्वात्— (मनोजवः). जगौ हि,
(१) " क्षिप्रं भवति धर्मात्मा " इति. गी० ९—३१।
(२) " सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु। विष्णोरालयविन्यासप्रारम्भादेव नश्यति " इति च. ❀ वि०ध०८३—२०।
आत्मवत् स्मरणकीर्तनादिमात्रेण सर्वपावनानां गङ्गापुष्करादितीर्थानां हेतुत्वात्—

---

निर्व०—(२) " मीनातिमिनोतिदीङां ल्यपि च " ६।१।५०॥ कौ०पृ०४५४
इति चादशित्यङ्गनिमित्ते आत्वमात्वम्.
(३) " निमिमीलियां खलचोरात्वम् नेति वाच्यम् "
इति प्रतिषिध्यते. गुणः आय्. तस्य विरोधार्थे.नञ्तत्पुरुषः.
नञो नलोपः. नुट्. ❀
उक्तेष्वर्थेषु क्षिप्रकारितया मनसोऽन्तःकरणस्येव जवो वेगोस्येति— (मनोजवः). जुस्सौत्रो गतिकर्मा वेगकर्मा च. ततो भावे,
(१) " ऋदोरप् " इत्यप्. गुणः. अव्. ३।३।५७॥कौ०पृ०६५३
(२) " मन. ज्ञाने " धा० दिवा० कौ०पृ०४५६
(३) " सर्वधातुभ्योऽसुन् " उणा० पा० ४ कौ०पृ०६४०.
इति असुन्. रुत्वयत्त्वापवादोत्वगुणाः. ❀
आत्मवत् स्मरणकीर्तनादिमात्रेण सर्वपावनानि तीर्थानि गङ्गाद्युषिजुष्टाम्भांसि करोतीति हेतुत्वात् सृजतीति वा, तीर्थानि श्रुतिस्मृत्यादीनि शास्त्राणि करोति सत्समयप्रवर्तकानि प्रवर्तयतीति वा, अगाधदुष्प्रवेशासिन्धोरिवात्मनः सर्वेषां सुसुखप्रवेशायानेकावतारकरणात्, तीर्थानि स्वावताररूपाण्यवतारसोपानानि करोति विदधातीति—

---

निरु०—६९५ भक्तानां सम्पदःशीघ्रं करोतीति (मनोजवः)।

(६९६) तीर्थकरो,

---

ॐ तीर्थकराय नमः ।

---

भा०—( तीर्थकरः ).

श्रुतिस्मृत्यादिसत्समयप्रवर्तनाद्वा, यथा,

(१) " योगो ज्ञानं तथा सांख्यम् " भा०आनु० १५०—१४१।

"इत्यादि. अगाधदुष्प्रवेशसिन्धोरिवात्मनः । प्रवेशावतार-
सोपानकरणाद्वा. ❋

---

निर्व०—( तीर्थकरः ).

तीर्थशब्दो ह्यनेकार्थः. कोशसिद्धः. करोतेः,

(१) " कृञो हेतुताच्छील्यानुलोम्येषु " इति हेतौ टः. गुणः
रपरः. ३।२।२०॥ कौ० पृ० ५७४

(२) " तॄ, प्लवनतरणयोः" धा०भ्वादिः कौ० पृ० ४२७

(३) " पातॄतुदिवचिरिचिसिचिभ्यस्थक् " उणा०पा०२
कौ०पृ० ६१९

इति थक्. अगुणः.

(४) " श्युकः० " इति नेट्. ७।२।११॥ कौ०पृ०४२५

(५) " ऋत इद्धातोः " ७।१।१००॥ कौ० पृ०४२७

इति इत्त्वम्. रपरत्वम्.

(६) " हलि च " इति दीर्घः. ८।२।७७॥कौ०पृ०६३

(७) " अचो रहाभ्यां द्वे " ८।४।४६॥कौ०पृ०१०

इति थस्य द्वित्वम्.

(८) " झरो झरि सवर्णे " ८।४।६५॥ कौ० पृ० ११

इति पाक्षिकः प्रथमथलोपः तदभावे,

---

निरु०—६९६ गङ्गादितीर्थहेतुत्वात् श्रुतिस्मृत्योः प्रवर्त्तनात्
॥५३३॥ आत्मप्रवेशसोपानं कृत्वा ( तीर्थकरः ) स्मृतः ।

(६९७) वसुरेता,

ॐ वसुरेतसे नमः।

भा०— तत्र कृष्णावतारः. दिव्यज्योतिरुपादानहेतुत्वात्— (वसुरेताः).

वस्विति हि ज्योतिःपर्यायः.

(१) "उज्जहारात्मनः केशौ सितकृष्णौ महामुने" वि०पु०५—१—६०। इति.

(२) " मम ते केशसंज्ञिताः " भा०शा० ३४२—४८।

इति केशशब्दश्च, व्याख्यातः. ❀

निर्व०—(९)"खरि च" इति पूर्वस्य ८।४।५५॥कौ०पृ०२० थस्य चर्त्वम् तः. एवं तत्र तत्र द्वित्वलोपादिकं यथाशास्त्रमूह्यम्. ❀

तत्र कृष्णावतारः प्रस्तोष्यते. दिव्यज्योतिरुपादानदेहतया वसुः रश्मिः स चात्र ज्योतिः तद्रूपं रेतो वीर्यम् स्वोपादानद्रव्यमस्येति— (वसुरेताः).

नानार्थो हि वसुशब्दः

(१) " रीङ्, श्रवणे " असुन्प्रकरणे, धा०दिवा०कौ०पृ०४५४

(२) " सूरीभ्यां तुट् च " इति, उणा०पा०४कौ०पृ०६४१ असुन्. तुट् च. टित्वादाद्यवयवः. अनिट्. गुणः.

(३) " वस, निवासे " धा० भ्वादिः कौ०पृ०४३२

(४) " शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च " उणा० पा०१ कौ०पृ०६०९

इति उः. समासोऽसन्तदीर्घः "[१४]इत्यादि. ❀

निरु०—६९७ वसुशब्दो ज्योतिरर्थः रेतस्तत्करणं मतम् ॥५३४॥
दिव्यज्योतिःकारणत्वात् (वसुरेताः) प्रकीर्तितः।

(६९८) वसुप्रदः, । (६९९) वसुप्रदो,

---

ॐ वसुप्रदाय नमः । ॐ वसुप्रदाय नमः ।

---

शा०—परमनिधिमात्मानं देवकीवसुदेवाभ्यां पुत्रत्वेन प्रददातीति—
(वसुप्रदः). ❀
ताभ्याम् जगत्पितुः स्वस्य पितृत्वरूपं महत्तेजः प्रददातीति पुनश्च—
(वसुप्रदः).
वसुदेवापत्यत्वाच्च—

---

निर्व०— तथा वसु धनम् परमो निधिः तादृशम् आत्मानं देवकीवसुदेवाभ्यां संप्रदानाभ्यां पुत्रत्वेन प्रददातीति—
(वसुप्रदः).
नानार्थो वसुशब्द इत्युक्तम्.
(१) "डुदाञ् दाने" प्रपूर्वः. धा० जुहो० कौ० पृ० ४५१
(२) "प्रदाज्ञः" इति कः. आष्टा० ३।२।३।।कौ० पृ० ५७२
निरूढो हि वसुशब्दः. एवमुत्तरत्रापि ध्येयम्. ❀
तथा वसुं रश्मिं ततश्च जगत्पितुः स्वस्य पितृत्वरूपं महत्तेजः
ताभ्यामेव संप्रदानाभ्याम् प्रददातीति पुनरपि द्वितीयः—
(वसुप्रदः).
निरूढाने हि वसुप्रदशब्दौ. ❀
तथा सः वसुदेवस्य वसुभिः दीव्यतः आनकदुन्दुभेः अपत्यमिति—

---

निरु०—६९८ देवकीवसुदेवाभ्यामात्मरूपं महद्धनम् ।।५३५।।
पुत्रत्वेन प्रकर्षेण ददातीति (वसुप्रदः)।
६९९ देवकीवसुदेवाभ्यां स्वपितृत्वं महद्वसु ।।५३६।।
तेजो यः प्रददातीति (वसुप्रद) ईरितः।

{ ३३४ / ७१४ } (७००) वासुदेवो,

---

ॐ वासुदेवाय नमः ।

---

भा०—( वासुदेवः ). ❋

इति श्रीहारितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः-
श्रीरङ्गराजदिव्याज्ञालब्ध-श्रीपराशरभट्टापरनामधेयस्य
श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुनामसहस्रविवरणे

## भगवद्गुणदर्पणे

सप्तमशतकं समाप्तम् ।

---

निर्व०—( वासुदेवः ).

( १ ) " दिवु,क्रीडादौ० " धा० दिवा० कौ० पृ० ४५२

कापवादः. पचादिगणे पाठात् अच्. गुणः. तृतीयासमासः. ततः

( २ ) " ऋष्यन्धकवृष्णिकुरुभ्यश्च " ४।१।११४॥ कौ० पृ० २१३

इति अत इञोपवादः. अपत्ये अण्. आदिवृद्धिः.

( ३ ) " यस्य० " इति लोपः. ❋ ६।४।१४८॥ कौ० पृ० ५६

इति कुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज-
वरददेशिकतनयवरदगुरुवरसूनु-वरदाचार्यसूरिविरचिते

## श्रीपराशरभट्टार्यभाषित-

श्रीमद्विष्णुसहस्रनामभाष्यानुगे भगवन्नामसहस्रनिर्वचने
सप्तमशतकं संपूर्णम् ।

---

निरु०—७०० वसुदेवापत्यनश्च ( वासुदेवः ) प्रकीर्तितः ॥ ५३७॥

# अथ अष्टमशतकप्रारम्भः ।

(७०१) वसुः, (७०२) वसुमनाः,

ॐ वसवे नमः । ॐ वसुमनसे नमः ।

भा०— एतदवतारागमं क्षीरार्णवनिकेतनत्वमाह—

(वसुः).

तत्र वसतीति यथा

(१) "स लोकानां हितार्थाय क्षीरोदे वसति प्रभुः" भा०अ०४७-२६।

(२) " एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम् " हरि०११३-६२ ।

इत्यादि. ❀

तत्र लक्ष्मीजन्मभूमौ वसतोपि वसौ वसुदेवे मनोस्येति—

(वसुमनाः).

(१) " देवदत्तो दत्तः सत्यभामा भामेतिवत् वसुः वसुदेवः ". इति महाभाष्यविदः. ❀

निर्व०— तथैतदवतारागमरूपं क्षीरार्णवनिकेतनत्वमुच्यते वचनात् क्षीरोदे वसतीति—(वसुः).

उक्तो ह्ययं शब्दः. ❀

तत्र लक्ष्मीजन्मभूमौ वसतोपि वसौ नामैकदेशेन निर्देशः, वसुदेवे मनोस्येति—

(वसुमनाः).

मनेरसुनि मनश्शब्द उक्तः. समासः. असन्तर्दीर्घः इत्यादि. ❀

निरु०—७०१ वसतीति (वसु) लोकहितेच्छुः क्षीरसागरे ।
७०२ जन्मभूम्यर्णवे लक्ष्म्याः वसतो यस्य वै मनः ॥ ५३८ ॥
अस्तीति वसुदेवे हि स स्यात् ( वसुमनाः ) परम् ।

(७०३) हविः, ॥

ॐ हविषे नमः ।

भा०— देवकिवसुदेवसमीपवासरुचिरपि अविदप्रेमाकुलाभ्यां ताभ्यां कंसात् गुप्तये नन्दयशोदाभ्यामादीयतेति— (हविः). ❋

जायमान एव असुरकृतापदपनोदनः सतां गतिः—

निर्व०— देवकीवसुदेवसमीपवासरुचिरप्ययम् कंसात् गुप्तये नन्दयशोदाभ्यां कर्तृभ्याम् अपदप्रेमाकुलाभ्यां ताभ्याम् अपादानाभ्यां हूयते- आदीयत इति— (हविः).

(१) "हु, दानादानयोः" धा० जुहो० कौ०पृ०४४९

(२) "आदाने च"

(३) "प्रीणनेति" इहादानकर्मायम्.

(४) "अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः" उणा० पा०२कौ० पृ०६२४

इति इसिः. गुणायादेशौ. आविष्टलिङ्गोयमित्यादि. नाम्नो— स्संहितायाम् .

(५) "भोभगोअघोअपूर्वस्य योशि" ८।३।१७॥कौ०पृ०२७

इति रोर्यः. तस्य,

(६) "हलि सर्वेषाम्" ८।३।२२ ॥कौ०पृ०२८

इति लोपः. ❋

जायमान एव असुरापदपनोदनतया सतां गतिः प्राप्य इति-

निरु०—७०३ नन्दगोपयशोदाभ्यां कंसोपद्रवशान्तये ॥ ५३९ ॥
आदीयते स्वीक्रियते स (हविः) परिकीर्तितः ।

श्लो०॥७५॥ (७०४) सद्गतिः, (७०५) सत्कृतिः,

---

ॐ सद्गतये नमः। ॐ सत्कृतये नमः ।

---

भा०–( सद्गतिः ). यथा,

(१) "सन्तमन्तोपमधिकं प्रशमं चण्डमानसः" वि०पु०५-३-४।

इति. ❋

सत्यः सकलसंसारनिगलच्छेदिन्यः दधिनवनीतचोरणोलूखलबन्ध-रिङ्खणरासक्रीडादिका मुग्धकृतयोऽस्येति–

( सत्कृतिः ). यथा.

(१) "जन्म कर्म च मे दिव्यम्" इत्यादि. ❋ गी०१०-३९।

---

निर्व०– ( सद्गतिः ).

गमेः कर्मणि क्तिनि गतिशब्द उक्तः. अस्तेः शतरि सत्शब्दश्च. एवमेवायमुत्तरत्रापि. विशेषस्तूच्यते. [illegible]. आविष्टलिङ्गोयम् "इत्यादि. ❋

तथा सत्यः सकलसंसारनिगलच्छेदनेन शोभनः कृतयः दधिहैयङ्गवीनचोरणोलूखलबन्धनरिङ्खणरासक्रीडनादिकाः मुग्धचेष्टाः अस्येति–

( सत्कृतिः ).

करोतेः क्तिन् क्यप्. इत्यनुवृत्तौ.

(१) "कृञः श च" ३।३।१००॥ कौ०पृ०६५९

---

निरु०–७०४ उत्पन्न एव कंसादिकृतबाधापनोदनात् ॥५४०॥
सतां प्राप्यतया चैव ( सद्गतिः ) समुदाहृतः ।
७०५ रासक्रीडादिकृतयः सत्यो यस्य च (सत्कृतिः)॥५४१॥

(७०६) सत्ता, (७०७) सद्भूतिः,

---

ॐ सत्तायै नमः । ॐ सद्भूतये नमः ।

---

भा०— सत्तापि सतां स्वयमेवेति—
(सत्ता).
न हि तद्व्यतिरेकेण किंचित् स्यात्.
(१) " न तदस्ति विना यत् स्यात् मया " इति. ❋ गी० ४–९।
सतां पुत्रो मित्रं बन्धुः दूतः सारथिः अन्यच्च तद्भवन्—
(सद्भूतिः).

---

निर्व०—इति शः. चात् क्तिन्. योगविभागात् क्यप् च स्त्रियाम् भवति. इह तु क्तिन्. अगुणः. अनिट्. अस्तेश्शतरि सत्शब्दात् उगित्त्वात् स्त्रियाम्,
(२) " उगितश्च " इति ङीप्. ४ । १ । ६ ॥ कौ० पृ०८९
स्त्रियाः पुंवदित्यादिना समासे पूर्वपदस्य पुंवद्भावः. ❋
सतां सत्तापि स्वयमेवेति—
(सत्ता). सच्छब्दात्,
(१) " तस्य भावस्त्वतलौ " ५।१।११९॥ कौ०पृ०३०९
इति भावे तल्. तलन्तम् स्त्रियाम्. अतः टावादि. सांहिते जश्त्वचर्त्वे. आविष्टलिङ्गोयम्. ❋
सतां भूतिः पुत्रमित्रबन्धुदूतसारथ्यादिबहुभवनेन विभूतिरिति—
(सद्भूतिः).

---

निरु०—७०६ स्वयमेव सतां सत्ता यस्मात् (सत्तेति) कीर्त्यते ।
७०७ सतां पुत्रकलत्रादिभूत्या (सद्भूति) रुच्यते ॥ ५४२ ॥

( ७०८ ) सत्परायणः, ।

---

ॐ सत्परायणाय नमः ।

---

भा०–(१) " कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः ।
कृष्णः परायणं तेषाम् " इति. ※ भा०द्रो० १७३–२४ ।
( सत्परायणम् ). आह च.
( १ ) " मामेवैष्यसि " इति. गी० १८–६५ ।
पुल्लिङ्गत्वे सन्तोऽस्य परायणमिति–( सत्परायणः ). यथा,
( २ ) " मम प्राणा हि पाण्डवाः " इति. भा० उ० ९०–३३ ।
( ३ ) " पाण्डवानां भवान्नाथः भवन्तं च श्रिता वयम् " भा०
स० २१–१० ।
( ४ ) " ज्ञानी त्वात्मैव मे मतम् " इति. ※ गी० ७–१८ ।

---

निर्व०– भुवः क्तिन्. अगुणः.
( १ ) " तितुत्र० " इति नेट्. ७ । २ । ९ ॥ कौ०पृ०६०८
( २ ) " श्युकः० " इति वा. ※ ७।२।११॥ कौ०पृ०६०८
सतां परं च तत् अयनं स्थानं चेति ( परायणम् ) इति वा,
सन्तः स्वप्राणभूततया स्वात्मतया च परायणमस्येति वा–
( सत्परायणम् ) ( सत्परायणो ) वा.
उभयथापि पाठः. एतेः अयतेर्वा. अधिकरणे ल्युट् "इत्यादि.
पृधातोरचि पर उक्तः. सांहितो दीर्घः. संज्ञायाम् णत्वम्.
इदं चोक्तं प्रागेव तत्पुरुषे आविष्टलिङ्गत्वात् क्लीवता.
बहुव्रीहौ तु विशेष्यनिघ्नत्वात्. पुंस्त्वम्. ※

---

निरु०–७०८ सतां परं स्यादयनं सन्तो यस्योत्तमायनम् ।
स ( सत्परायणं ) ख्यातो यद्वा स्यात् ( सत्परायणः )॥५४३॥

(७०९) शूरसेनो,

---

ॐ शूरसेनाय नमः ।

---

भा०—यादवपाण्डवादयो भूभारावतरणसहायाः अस्येति—(शूरसेनः). ❀

---

निर्व०—असहायशूरत्वेपि भूभारावतरणे शूराः विक्रान्ताः सेनाः तदनुग्रहात् साहायकपरिवारसहिताः यादवपाण्डवादिपृतना अस्येति—(शूरसेनः).

(१) "षिञ्, बन्धने" धा०स्वादिः कौ०पृ०४६१ परस्मैः. नप्रकरणे.

(२) "कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्" उणा०पा० ३कौ०पृ०६२५ इति नः.

(३) "नेड्०" अनिट्. गुणः. ७।२।८॥कौ०पृ०५८१

ततस्त्रियामजाद्यतष्टाबादि. शुरसौत्रो गत्यर्थः. ततो रक्प्रकरणे,

(४) "शुसिचिमीनां दीर्घश्च" उणा०पा०२कौ०पृ०६२० इति रक्. दीर्घश्च. अनिट्. अगुणः. शूरयतेर्वा पचाद्यच्. णेर्लोपः. तत उभयतष्टाबादि. समासे पूर्वपदस्य पुंवद्भावः.

(५) "गोस्त्रियोः०" १।२।४८॥कौ०पृ०१२९ इति उपसर्जनह्रस्वः. ❀

यादववंशोद्धरणेन यदूनां तदपत्यलक्षणया यादवानाम् श्रेष्ठः प्रशस्यतम इति—

---

निरु०—७०९भूभारहरणार्थाय यादवाः पाण्डवाश्च ये ।
शूरास्सहाया यस्येति (शूरसेनः) स कथ्यते ॥५४४॥

(७१०) यदुश्रेष्ठः (७११) सन्निवासः

ॐ यदुश्रेष्ठाय नमः । ॐ सन्निवासाय नमः ।

भा०—(१) "अयं स कथ्यते प्राज्ञैः पुराणार्थविशारदैः । गोपालो यादवं वंशं मग्नमभ्युद्धरिष्यति" इति. वि०पु० ।
(यदुश्रेष्ठः). ❋
मनुष्यधर्मशीलत्वेऽपि सतां सनकादीनां विश्रान्तिभूमिः—
(सन्निवासः). यथा,
(१) "सनन्दनाद्यैर्मुनिभिः सिद्धयोगैरकल्मषैः । संचिन्त्यमानं तत्रस्थैः नासाग्रन्यस्तलोचनैः" इति. वि० ५—८४२ ।

निरु०—(यदुश्रेष्ठः).
प्रशस्यशब्दात् निष्पादितात् आतिशायनिके इष्ठनि श्रादेशे प्रकृतिभावे गुणे च श्रेष्ठशब्द उक्तः.
(१) "यती. प्रयत्ने" धा० भ्वादिः कौ०पृ०३८३
(२) "अणश्च" इति चकारात् उणा०पा०१ कौ०पृ०६०९
बाहुलकाद्यान्यतोऽप्युः. पृषोदरादित्वात् तस्य दः. ❋
मनुष्यधर्मशीलत्वेऽपि सतां सनकादीनां निवासः चित्तवृत्तेः आवासभूमिरिति—
(सन्निवासः).
(१) "वस. निवासे" निपूर्वः. धा० भ्वादिः कौ०पृ०४३२
(२) "हलश्च" इति अधिकरणे घञ्. ३।३।१२१ कौ०पृ०६६३
वृद्धिः. सत्शब्द उक्तः.

निरु०—७१० मग्नं नु यादवं वंशमुद्धरिष्यति यश्च सः ।
(यदुश्रेष्ठ) इति ख्यातः वस्वर्णो वंशवर्धनः ॥ ५४५ ॥
७११ सनकादिनिवासो हि मनुष्यत्वेऽपि यत्सदा ।
(सन्निवासः) स विज्ञेयो ह्यग्रार्णः स्थानदायकः ॥ ५४६ ॥

(७१२) सुयामुनः, ॥

ॐ सुयामुनाय नमः ।

भा०— शोभनं पावनं मनोहरं यमुनासंबन्धिजलक्रीडापुष्पा-
पचयरासक्रीडादि यस्येति-
( सुयामुनः ). ❋
कृष्णत्वे निह्नुतपरभावत्वात्.
( १ ) " वसन्ति त्वयि भूतानि भूतावासस्ततो हरे " इति-

निर्दे०— ( ३ ) " यरोनुनासिके० " ८।४।४५॥कौ०पृ०१९
इति पाक्षिकोनुनासिकः. ❋
सुशोभनं मनोहरं पावनं यामुनम् यमुनासंबन्धिजल-
केलिपुष्पापचयरासक्रीडादिकम् अस्येति-
( सुयामुनः ).
( १ ) " यम, उपरमे " धा०१वादिः कौ०पृ० ४३०
उनन्प्रकरणे,
( २ ) " अजियमिशीङ्भ्यश्च " उणा० पा०३ कौ०पृ०६२७
इति उनन्. स्त्रियामजाद्याबादि. ततः,
( ३ ) " तस्येदम् " ४।३।१२०॥ कौ०पृ०२७१
इति अण्. आदिवृद्धिः.
( ४ ) " यस्य० " इति ६।४।१४८ ॥ कौ० पृ० ५६
आलोपः सुपूर्वो बहुव्रीहिः. ❋
वचनात् कृष्णत्वे निह्नुतपरभावोयम्. भूतानामावासः स्थानमिति-

निरु०—७१२ गोपीभिर्यमुनायां तु शोभनं पावनं महत् ।
जलक्रीडादि यस्येति ( सुयामुन ) इतीरितः ॥ ५४७ ॥

श्लो०॥७६॥ (७१३)भूतावासो, { ३२४ / ७०० } (७१४) वासुदेवः,

---

ॐ भूतावासाय नमः । ॐ वासुदेवाय नमः ।

---

भा०—( भूतावासः ). ❋

वसुदेवापत्यत्वे द्विषट्काध्यात्मं नियच्छतीति—

( वासुदेवः ). अत एव हि च

( १ ) " जाग्रव्यूहवासुदेवो माथुरायाद्भुतमायाय "

इति मथुरावतारेण विशेष्यते. ❋

एवं सर्वप्राणालम्बनम्—

---

निर्व०—( भूतावासः ). वसतिः आङ्पूर्वः.

( १ ) " हलश्च " इति अधिकरणे घञ्. ३।३।१२१॥ कौ०पृ०६६३

वृद्धिः. भवतेः कर्तरि क्तः.

( २ ) " श्युकः०" ७।२।११॥कौ०पृ०४२५

इति नेट्. दीर्घस्सांहितः. ❋

वसुदेवापत्यत्व एव द्विषट्काध्यात्मविषयतयायम्

वासुश्चासौ देवश्चेति—

( वासुदेवः ).

प्रागेव द्विषट्काध्यात्मविषयप्रकरणे व्यस्तारि चानयो-

रर्थः दीव्यतेरचि वसेर्ण्यन्तात् उप्रत्यये तत एव तु शुद्धात्

उणि च यथायथम् प्रस्फुटम् परिनिष्पत्तिश्च. ❋

एवम् सर्वेषाम् आत्मनाम् अमूनां प्राणानाम् निलयः

आलम्बनमिति—

---

निरु०—७१३ यस्मिन् वसन्ति भूतानि ( भूतावासः ) स कथ्यते ।

७१४ वसुदेवापत्यतया द्वादशाध्यात्ममञ्जसा ॥५४८॥

नियच्छति सदा यस्तु ( वासुदेवः ) स ईरितः ।

---

अग्रव्यूहः ।

## (७१५) सर्वासुनिलयो,

## ॐ सर्वासुनिलयाय नमः।

भा०— (सर्वासुनिलयः). यथा.
(१) " विना कृष्णेन गोव्रजाः "
(२) " असूर्यमिव सूर्येण निवातमिव वायुना। कृष्णेन समुपेतेन जहृषे भारतं पुरम्" भा०म० ३३—१५।
॥१२६॥इत्यादि. ॐ
तेषामेव सर्वकर्मकरत्वेपि—

निर्व०— (सर्वासुनिलयः).
(१) " लीङ्, श्लेषणे " धा० दिवा० कौ० पृ० ४५४
(२) " ली, श्लेषणे " वा दिवादिः. क्र्यादिश्च. निपूर्वः. धा० क्र्यादिः कौ० पृ० ४७६
(३) " एरच् " ३। ३। ५६ ॥ कौ० पृ० ६५३
इत्यधिकरणे अच्. गुणायादेशौ.
(४) " विभाषा लीयतेः " इति. ६ ।१ ।५१ ॥ कौ० पृ० ४५४
यका निर्देशात्. उभयोरप्यात्वाभावौ
(५) " निमिमीलियां खलचोरात्वन्नेति वक्तव्यम् " ६।१।५१॥
कौ० पृ० ४५४
इति तत्प्रतिषेधः.
(६) " अस, भुवि " धा० अदा० कौ० पृ० ४४४
(७) " शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च " इति. उ० पा० १ कौ० पृ० ६०९
उः. सर्व उक्तः. दीर्घः. ॐ
तेन एवं सर्वकर्मकरत्वेपि न तेषां किंचित् कृतम् मयेत्यविलुप्ततया वा, स्वभक्तविषयान्यकर्तृकापराधान् सोढुं वा अलः पर्याप्तो नेति—

निरु०—७१५(सर्वासुनिलयः)स स्यात् सर्वप्राणावलम्बनम्॥५४९॥

१ द्रवीकरणे इति पाठः ग्रन्थान्तरे।

(७१६) ऽनलः, ।

ॐ अनलाय नमः ।

भा०—(अनलः).
न किंचित् कृतमेषां मयेत्यवितृप्तः.
(१) "ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति" इति. ※ भा० ३०२८—२२ ।
स्वभक्तविषयाऽगाधं सोढुमालमिति वा. यथाह,
(१) "द्वौ तु मे वधकालेऽस्मिन् न क्षन्तव्यौ कथञ्चन। यज्ञविघ्नकरं हन्यां पाण्डवानां च दुर्हृदम्" इति. ※
गोवर्धनोद्धरणपारिजातापहरणबालदोष्पण्डखण्डनादौ देवानां दर्पमात्रं हतवान् इति—

---

निर्व०—(अनलः).
(१)"अल. भूषणपर्याप्तिवारणेषु" धा०भ्वादिः कौ०पृ०४०४
पचाद्यच्. मान्तस्य ह्यस्य स्वरादिपाठादव्ययत्वम्.
यद्वा मान्तादलमोऽव्ययात् पर्याप्तिवचनात् मत्वर्थीयोऽर्श आद्यच्.
(२)"अव्ययानां भमात्रे टिलोपः"६।४।१४४॥कौ०पृ०१३३ इति टिलोपः. नञ्समासः. नञो नलोपः. नुट्. ※
गोवर्धनोद्धरणपारिजातापहरणबालदोर्दण्डदण्डखण्डनादौ देवानाम् दर्पं गर्वं हन्ति स्मेति—

---

निरु०—७१६ नवं कृत्वापि गोपानां नच किंचिन्मया कृतम् ।
इत्येवमवितृप्तो यो (ह्यनलः) परिकीर्तितः ॥ ५५० ॥
स्वभक्तेभ्यः कृतं मन्तुं नालं सोढुं स वा (ऽनलः) ।

( ७१७ ) दर्पहा, ( ७१८ ) दर्पदो,

ॐ दर्पघ्ने नमः । ॐ दर्पदाय नमः ।

भा०—( दर्पहा ). ❀
शत्रुशमनदुर्जयद्वारवतीकरणशङ्खपद्मनिधिसुरतरुसुधर्माहरणादिना निर्भरीकृतेभ्यो यादवेभ्यो मधुपानादि दर्पं दत्तवान् इति—
( दर्पदः ). ❀
अथापि स्वयम्—

निर्व०—( दर्पहा ).
हन्तेः क्विप्. अयं सार्वकालिको वा. अन्यथा. चापि प्रागुक्तः.
( १ ) "दृप, हर्षमोहनयोः" धा० दिवा० कौ० पृ० ४५८
भावे घञ्. गुणो रपरः. हलन्तदीर्घ "इत्यादि. ❀
शत्रुशमनदुर्जयद्वारवतीकरणशङ्खपद्मनिधिसुरतरुसुधर्माहरणादिना निर्भरीकृतेभ्यो यादवेभ्यो दर्पम् मधुपानमदम् ददातीति—
( दर्पदः ). ददातेः,
( १ ) "आतोनुपसर्गे०" इति कः. ३।२।३।। कौ० पृ० ५७०
आटोपः. दर्प उक्तः. ❀
अथापि स्वयं हन्तः पारमेष्ठ्यतेजसा गर्वितः सन्नेति अदत्त इति वा—

निरु०—७१७ गोवर्धनस्योद्धरणे पारिजातपरिग्रहे ॥ ५५१ ॥
बालदोर्दण्डषण्डानां खण्डनादौ तदा तदा । देवानां वै दर्पमात्रं हतवान्यस्स ( दर्पहा ) ॥ ५५२ ॥
७१८ मथुरायां यादवेभ्यो मधुपानादिना ततः । दर्पं च दत्तवान् योऽसौ (दर्पदः) परिकीर्तितः ॥ ५५३ ॥

## (७१९) ऽदृप्तो, (७२०) दुर्धरो,

### ॐ अदृप्ताय नमः । ॐ दुर्धराय नमः ।

भा०—(अदृप्तः).
सभापर्वणि,
(१) एवंविधानि कर्माणि कृत्वा गरुडवाहनः । न विस्मयमुपागच्छन् पारमेष्ठ्येन तेजसा" इति, भा०स०५१—२९ ।
यशोदानन्दलालन—(दृप्तः) वा. ❋
बाललीलादिप्रसङ्गेषु मत्तमातङ्गवत् ताभ्यां—
(दुर्धरः).
दुर्वारचञ्चलचेष्टितः इति यथा साह.
(१) "यदि शक्नोपि गच्छ त्वमतिचञ्चलचेष्टित" इति. ❋
वि०पु०५-६-१५।
दुरात्मनां वा (दुर्धरः). यथा,

निर्व०—(अदृप्तः).
नन्दयशोदालालनगर्वित इति वा, यथाक्रममदृप्तो दृप्तो वा
(१) "दृप, हर्षमोहनयोः" क्तः. धा०दिवा०कौ०पृ० ४५८
अनिट्. अगुणः. पूर्वत्र नञ्समासे नञो नलोपो विशेषः. नाम्नोः सांहितं पूर्वरूपं च. उत्तरत्र तु न ते इति विवेकः. ❋
बाललीलादिषु दुर्वारातिचञ्चलचेष्टिततया मत्तमातङ्गवत्ताभ्याम् नन्दयशोदाभ्यां धर्तुमशक्य इति—
(दुर्धरः).
(१) "धृञ्, धारणे" दुरुपसर्गः. धा०भ्वादिः कौ०पृ०४२३

निरु०— ७१९ अथाप्यगर्वितो योसौ (अदृप्तः) स उदाहृतः ।
७२० बाललीलाप्रसङ्गेषु यशोदानन्दलालनात् ॥५५४॥
दृप्तो मत्तो भवेत्ताभ्यां दुर्ग्रहो (दुर्धरो) मतः ।

( ७२१ ) ऽथाऽपराजितः, ॥

ॐ अपराजिताय नमः ।

भा०—( १ ) " इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः । पटे-नाग्निं प्रज्वलितं यथा बालो यथाबलाः" इति. भा०उ० १२९-१६। ( २ ) " दुर्ग्रहः पाणिना वायुः दुस्स्पर्शः पाणिना शशी । दुर्धरा पृथिवी मूर्ध्ना दुर्ग्रहः केशवो बलात " भा०उ० १२९—४० । "इत्यादि. ❋

अथ भारतसंग्रामे, निष्परिग्रहा अपि तत्परिग्रहात् पञ्चापि पाण्डवाः, शतेनापि बहूपकरणरूढमूलैर्वा धार्तराष्ट्रैर्न पराजिता इति—

( अपराजितः ).

निर्व०—( १ ) " ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् " ३।३।१२६॥ कौ०पृ०६६४ इति कृच्छ्रार्थे दुसि उपपदे खल्. गुणो रपरः. दुस-स्सोरुत्वम्. द्वित्वादिकम् यथाशास्त्रमूह्यम्. ❋

अथ शब्दोऽनन्तरार्थः. वक्ष्यमाणनारायणपरिग्रहकर्तृकजयद्रौव्यद्यो-तनात्. मङ्गलार्थो वा. भारतसंग्रामे निष्परिग्रहाणामपि पञ्चानाम् पाण्डवानां तदेकपरिग्रहात् बहूपकरणरूढमूलैः शतेनापि धार्तराष्ट्रैः अपराजिततया न सन्ति पराजिताः स्वगृह्याः अस्येति वा, उक्तरीत्या अपराजिताः स्वगृह्याः पञ्च पाण्डवाः ते अस्य सन्तीति वा—

( अपराजितः ).

निरु०—७२१ दुर्योधनादिभिर्नित्यं रूढमूलैः पराजयः ॥७५५॥ न यस्य कुत्रचिद्वापि सो ( ऽपराजित ) ईरितः ।

भा०—यथा आरण्यके कर्णाय इन्द्रः.

(१) "एकं हनिष्यसि रिपुं गर्जन्तं तं महामृधे। न तु यं प्रार्थयस्येकं रक्ष्यते स महात्मना ॥ यमाहुर्वेदविदुषः वराहमजितं हरिम्। नारायणमचिन्त्यं च तेन कृष्णेन रक्ष्यते" भा० आर० ३०९–२८।

जयद्रथाय रुद्रः.

(२) "अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान्युधि। ऋतेऽर्जुनं महाबाहुं देवैरपि दुरासदम् ॥ यमाहुरजितं देवं शङ्खचक्रगदाधरम्। प्रधानमात्मविदुषां तेन कृष्णेन रक्ष्यते" भा० आर० २६०–७५।

(३) "यस्य त्वं पुरुषव्याघ्र सारथ्यमुपजग्मिवान्। ध्रुव एव जयस्तस्य न तस्यास्ति पराजयः" भा० उ० ५२–१२।

भीष्मद्रोणादयश्च.

(४) "शक्तोऽहं धनुषैकेन निहन्तुं सर्वपाण्डवान्। यद्येषान्नो भवेद्गोप्ता विष्णुः कारणपूरुषः" भा०।

(५) "ध्रुवं वै ब्राह्मणे सत्यं ध्रुवा साधुषु सन्नतिः। श्रीर्ध्रुवा चापि दक्षेषु ध्रुवो नारायणे जयः" भा०।

(६) "अजयः शाश्वतो ध्रुवः" रा० यु० ११४–१५।

(७) "अजितः खड्गधृक्" रा० यु० १२०–१४।

(८) "यतः कृष्णस्ततो जयः" भा० उ० ६–७९।

(९) "यत्र योगीश्वरः कृष्णः" इत्यादि. गी० १८–७८।

आयुर्वेदे चरके औषधपेषणमन्त्रे,

(१०) "यथाहं नाभिजानामि वासुदेवे पराजयम्। मातुश्च पाणिग्रहणं समुद्रस्य च शोषणम् ॥ एतेन सत्यवाक्येन सिध्यतामगदो ह्ययम्" आयुर्वेदे।

## श्लो० ॥ ७७ ॥ ( ७२२ ) विश्वमूर्तिर्,

---

## ॐ विश्वमूर्तये नमः ।

---

भा०—वैतरणे च विषहरणमन्त्रं वदन्

( १ ) " रत्नाकर इवाक्षोभ्यो हिमवानिव चाचलः । जातवेदा इवाधृष्यो नारायण इवाजयः " इति. ॐ वैतरणे ।

कथं दुर्बलान् बलवन्तो न जयन्ति, सर्वस्य तच्छरीरत्वात् न हि स्वशरीरम् स्वानिष्टे चेष्टते. इदमभिप्रेत्याह—

( विश्वमूर्तिः ). यथा,

(१)"अहमात्मा गुडाकेश सर्वभूताशयस्थितः"इति. गी० १०—१९।

---

निर्व०—( १ ) " जि, जये " धा० भ्वादिः कौ० पृ० ४०५ परापूर्वः. कर्मणि क्तः. अनिट्. अगुणः. पूर्वत्र नञ्पूर्वो बहुव्रीहिः. अपरत्र तत्पूर्वः. तत्पुरुषः. उभयत्रापि नञो नलोपः. तत्पुरुषे तु ततो मत्वर्थीयोऽर्श आद्यच्.

( २ ) " यस्य० " इति लोपः ६।४।१४८ ॥ कौ०पृ० ५६

अत्र च प्रमाणसहस्रमनुसंधेयम्. ॐ

अथ दुर्बलानामपि बलवदजय्यताप्रयोजकं स्वशरीरस्य स्वानिष्टचेष्टानौचित्याभिव्यञ्जकम् सर्वस्य च तच्छरीरत्वमभिधीयते. विश्वं कृत्स्नमपि प्रपञ्चजातम् मूर्तिश्शरीरमस्येति—

( विश्वमूर्तिः ).

(१)"मूर्छा, मोहसमुच्छ्राययोः" भावे. धा०भ्वादिः कौ०पृ०३९०

(२)"अकर्तरि च कारके०"इत्यनुवृत्तौ, ३।३।१९॥कौ०पृ०६४७

( ३ ) " स्त्रियां क्तिन् " इति क्तिन्, ३।३।९४॥कौ० पृ०६५८

---

निरु०—७२२ विश्वं मूर्तिस्तनुर्यस्य (विश्वमूर्ति) स्तु स स्मृतः॥५५६॥

## ( ७२३ ) महामूर्तिर्, ( ७२४ ) दीप्तमूर्तिर्,

## ॐ महामूर्तये नमः । ॐ दीप्तमूर्तये नमः ।

ना०—विश्वाश्रयमूर्तिः—
( महामूर्तिः ). यथा,
( १ ) " इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् । मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि " इति. ❁ गी० ११—७।
यत् किंचित् केनचित् गुणेन दीप्तं तदस्य विशेषेण मूर्तिरिति—
( दीप्तमूर्तिः ). यथा.

निर्व०—( ४ ) " नित्व० " इति नेह. ७।०।१॥ कौ०पृ०६०८
( ५ ) " रालोपः " ६।४।२१ ॥ कौ० पृ० ५११
इति झलादौ प्रत्यये रात् छस्य लोपः.
( ६ ) " हलि च " ८।२।७७॥ कौ०पृ० ६३
इति दीर्घः. द्वित्वादि विशेषः कृति विश्व उक्तः. ❁
विश्वरूपप्रदर्शने विश्वाश्रयतया महती मूर्तिरस्येति—
( महामूर्तिः ).
निरूढे हि मूर्तिशब्दः. इत्थम् उत्तरत्रापि. महच्छब्दश्च प्रागेवोक्तः.
ततश्शतृवद्भावात् स्त्रियाम्.
( १ ) " उगितश्च " ४।१।६॥ कौ०पृ०८९
इति ङीप्. पुंवद्भावः. महत आत्त्वादि. ❁
वचनात् दीप्तं येन केनचित् दीप्तं यत्किञ्चिन्मूर्तिः स्वतेजोंशसंभवतया विशेषेण तनूः अस्येति—( दीप्तमूर्तिः ).

निरु०—७२३ विश्वैकाश्रयमूर्तित्वा ( न्महामूर्ति ) रिति स्मृतः ।
७२४ यत्किञ्चित्केनचिद्दीप्तं गुणेनात्र विशेषतः ॥ ५५७ ॥
तत्सर्वं मूर्तिरस्येति ( दीप्तमूर्ति ) रसौ स्मृतः ।

## ( ७२५ ) अमूर्तिमान् ।

ॐ अमूर्तिमते नमः ।

ना०–(१) "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा" गी० ११–४१।
"इत्यादि. ❋

अमूर्तयः अव्यक्तपुरुषादयोऽप्येवमस्य स्वमिति–
( अमूर्तिमान् ). यथा,
( १ ) "भूमिरापोऽनलो वायुः" गी० ७–४ ।
( २ ) "अपरेयमितस्त्वन्यां प्रकृतिम्" इति. गी० ७–५ ।
( ३ ) "यस्याव्यक्तं शरीरम्" सु० ३० ७ ।
( ४ ) "यस्यात्मा शरीरम्" इति च. शतपथब्राह्मणे १४–६–३०।
पूर्वोक्तमूर्तिमत्त्वोक्तिविरोधात् अमूर्तिरित्येतावता
निषेधसिद्धौ मतुब्वैयर्थ्याच्च नैष मूर्तिनिषेधः. ❋
कृष्णत्वेऽप्यजहद्वासुदेवादिचतुर्मूर्तित्वात्–

निर्व०–( १ ) "मूर्छा, मोहे" इदित् क्त:. धा० दिवा० कौ० पृ० ४७५
( २ ) "श्वीदितो निष्ठायाम्" ७ । २ । १४॥ कौ० पृ० ५८९
इति नेट्. अन्यत् प्राग्वत्. ❋
नास्ति मूर्तिः एषां ये च अमूर्तयोऽव्यक्तपुरुषादयः
ते च शरीरभूताः अस्य सन्तीति–
( अमूर्तिमान् ).
बहुव्रीहौ नञो नलोपः. ततो मूर्तिशब्दात्,
(१) "तदस्य०" इति मतुप्. उपधादीर्घः. ५।२।३६॥ कौ० पृ० ३३८
नुमादि. स्यादेव हि मूर्तिनिषेधे प्रागुक्तमूर्तिमत्त्वविरो–
धो मतुपो वैयर्थ्यञ्च. अतः उक्त एवार्थः. ❋

निरु०–७२५ अमूर्तिशब्देनोच्यन्ते ह्यव्यक्तपुरुषादयः ॥ ५५८ ॥
त एव यस्य स्वमिति स स्मृतः स्या ( दमूर्तिमान् ) ।

( ७२६ ) अनेकमूर्तिर् , ( ७२७ ) अव्यक्तः.

ॐ अनेकमूर्तये नमः । ॐ अव्यक्ताय नमः ।

भा०—(१) " षोडश स्त्रीसहस्राणि शतमेकं ततोऽधिकम् । तावन्ति चक्रे रूपाणि भगवान् देवकीसुतः" इति च.वि०पु०५-३२-१८।
असाधारणानेकमूर्तित्वात्–
( अनेकमूर्तिः ). ※
इदं मनुष्यत्वेन गूहत इति–
( अव्यक्तः ). यथा .
( १ ) " नाहं प्रकाशस्सर्वस्य " गी० ७–२५ ।
( २ ) " नाहं वेदैर्न तपसा " इत्यादि. ※ गी० ११–५३

निर्व०— कृष्णत्वेप्यजहद्वासुदेवादिचतुर्मूर्तितया शताधिकषोडश-सहस्रदिव्यमहिषीभोगानुगुणासाधारणतावन्मूर्ति-तया चानेकाः मूर्तयोऽस्येति–
( अनेकमूर्तिः ). इगः,
(१) " इगुपधाका० " इत्यादिना कति गुणे चके-उणा० पा० ३ कौ०पृ०६२७
शब्द उक्तः. नञो नलोपः. नुट्. ततः. टावादि. पुंवद्भावः. ※
उक्तस्य चास्य मनुष्यत्वेनोपगूहनात् व्यक्तो नैवम् सर्वस्येति–
( अव्यक्तः ).
(१)" अञ्जू,व्यक्तिम्रक्षणादिषु "विपूर्वः.धा०रुधा०कौ०पृ०४७२

निरु०—७२६ षोडश स्त्रीसहस्राणि शतमेकं ततोधिकम्॥५५९॥
( अनेकमूर्ति ) रित्युक्तः तत्सङ्ख्यादेहधारणात् ।
७२७ मनुष्यत्वेन सर्वत्र परत्वावाप्रकाशनात् ॥ ५६० ॥
बुधै ( रव्यक्त ) इति च कथितस्तत्त्वपारगैः ।

## (७२८) शतमूर्तिश्, (७२९) शताननः, ॥

ॐ शतमूर्तये नमः। ॐ शताननाय नमः।

भा०— अथ दिदृक्षवे अर्जुनाय व्यक्तवैश्वरूप्यः—
(शतमूर्तिः).
(१) "पश्य मे पार्थ रूपाणि शतशोथ सहस्रशः" इति. ❋ गी० ११-५।
(शताननः).
तत्रैव च अर्जुनः
(१) "अनेकवक्त्रनयनम्" इति. ❋ गी० ११-१०।

निर्व०— (२) "अञ्जिवृसिभ्यः क्तः" इति क्तः. उणा० पा० ३ कौ० पृ० ६२९
(३) "तितुत्र०" इति नेट्. ७।२।९॥ कौ० पृ० ६०८
(४) "अनिदिताम्" इति नलोपः. ६।४।२४॥ कौ० पृ० ७६
(५) "चोः कुः" ८।२।३०॥ कौ० पृ० ६८
चर्त्वम् निरुक्ते स्वयम्. अन्यथापि प्रागेव. वेयण्
समासे नञो नलोपः. ❋
अथ दिदृक्षवेऽर्जुनाय व्यक्तवैश्वरूपतया शतम् अस्य
उपलक्षणतया अनन्ताः मूर्तयोस्येति—
(शतमूर्तिः).
शतशब्द उक्तः, अन्यच्च तत्र तत्र च. ❋
अनेकवक्त्रतया शतम् पूर्ववत् अनेकानि आननानि मुखानि अस्येति—
(शताननः).

निरु०—७२८ अर्जुनाय व्यक्तनया विश्वरूपप्रदर्शनात् ॥ ५६१ ॥
(शतमूर्ति) रिति ख्यातः शतशोथ सहस्रशः।
७२९ अनेकाननसंपत्त्या (शतानन) इतीरितः ॥ ५६२ ॥

श्लो० ॥ ७८ ॥ ( ७३० ) एको,

ॐ एकाय नमः ।

भा०—उक्ते महिम्नि सजातीयसंख्येयासंभवात् अद्वैतं गच्छतीति-( एकः ).
( १ ) " इण्, गतौ " इत्यस्मात् धा० अदा० कौ०पृ०४४१
( २ ) " इण्भीका० " इत्यादिना कन्प्रत्ययः, उणा० पा० ३ कौ० पृ० ६२७
एकोपाधिरतितान् हि सञ्चक्षते. यथा द्वौ ब्राह्मणौ त्रयः क्षत्रियाः इति.

निर्व०—अनिः प्राणनकर्मा, शुद्धः. आङ्पूर्वः. पूर्वमुपसर्गेण युज्यते ततः साधनेन. दीर्घः सांहितः. ततः.
( १ ) " करणाधिकरणयोश्च " इति.३।३।११७॥कौ०पृ०६६२
करणे ल्युट्. यद्वा, अयम्.
(२) " हेतुमति च " इति णिजन्तः. अना-३।१।२६॥कौ०पृ०४९२
इङ्पूर्वोपि. तत्पूर्वत्वे परिनिष्ठिते दीर्घोधिकः. पूर्वं साधनेनापि हि युज्यते दर्शनभेदात्. अतः इति वृद्धिः. ततः
( ३ ) " बहुलमन्यत्रापि " इति कर्मणि युच्. उणा०पा० २ कौ० पृ० ६२२
नन्द्यादिल्युः. ल्युड्वा. बाहुलकात्. सर्वत्र योरनः. णिचि तल्लोपश्च. शतशब्द उक्तः. दीर्घः. ❋
उक्ते महिम्नि अतुल्यकक्ष्यतया सजातीयसंख्येयान्तराभावात् अ-द्वैतम् एति गच्छतीति–( एकः ).
( १ ) " इण्गतौ " धा० अदा० कौ० पृ० ४४१
(२) " इण्,भीकापाशल्यतिमर्चिभ्यः कन् " उणा०पा०३कौ०पृ०६२७
इति कन् बाहुलकान्न क इत्. गुणः. अनिट्. ❋

निरु०—७३० द्वितीयस्वसजातीयराहित्या ( देक ) उच्यते ।

(७३१) नैकः, (७३२) सः,

---

ॐ नैकाय नमः। ॐ साय नमः।

---

भा०—नहि भगवतः कश्चित् केनचिदुपाधिना तुल्यकक्ष्यः; यथा—

(१) "एक इद्राजा जगतो बभूव" ४ का० १-३२

(२) "न तस्य प्रतिमास्ति" इति च. ❋

अत इदमैक्यं न सर्वनिह्नवनिवर्नसंकरणपरिणामादिनिमित्तम् किन्तु विभूतितया विजातीयेन सर्वेण द्वितीयवानेव इति—

(नैकः). यथा.

(३) "नान्तोस्ति मम दिव्यानां विभूतीनां परंतप" इति. ❋ गी० ११-३९।

एष्वाकुमारम् अखिलप्रसिद्धया स्वविषयं ज्ञानं स्यतीति—

(सः). स्यतेः,

(१) "शमिमुपिस्यति०"

इत्यादिना डः. यथा. ❋

---

निर्व०—उक्तव्याख्यानेन चास्यैक्यस्य असर्वनिह्नवपरतया विभूतितया विजातीयेन सर्वेण द्वितीयेन सद्वितत्वात् एकोनेति—

(नैकः). अनेको वा,

एकः उक्तः. नशब्दोयम्. नञो नलोपाभावो वा. इति प्रागेवावादि. वृद्धिः. अनुकल्पे नञो नलोपः. नुट् च वृद्धिः. ❋

इत्थं सिद्धान्तिते विशिष्टाद्वैते विभूतिभूतेष्वेषु आकुमारमखिलप्रसिद्ध्या स्वविषयं ज्ञानं स्यति अन्तयति निश्चयीकरोतीति—(सः).

---

निरु०—७३१ (नैकः) स्वव्यापारतया विभूतीनामितीरितः॥५६३॥
७३२ सर्वेषु कृष्णरूपेषु आकुमारप्रसिद्धितः।
ज्ञानं हि यस्य विषयं स्यत्यसौ (स) इतीरितः॥५६४॥

( ७३३ ) वः.

ॐ वाय नमः ।

भा०—प्रसिद्धिसर्ववासित्वात्—( वः ).
वसतः डः.
( १ ) "वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि । स च भूतेष्वशेषेषु वकारार्थस्ततो मुने" इति. ॐ
मलीमसेषु वसन्नपि कनतीति—

निर्व०—( १ ) "षो. अन्तकर्मणि" स्यन्तः आत्वम्. धा० दिवा० कौ० पृ० ४७४
( २ ) "शसिमुषिस्यति०" इत्यादिना डः.
( ३ ) "अन्येष्वपि०" इति वा. डिलोपः. ॐ ३।२।१०१॥ कौ० पृ० ५८५
निरुक्तात् सर्वावासत्स्वयम् यथाप्रसिद्धिसर्वत्र वसतीति—( वः ).
( १ ) "वस, निवासे" धा० भ्वादिः कौ० पृ० ४३०
( २ ) "अन्येष्वपि०" इति डः. पूर्ववत् ३।२।१०१॥ कौ० पृ० ५८५
अन्यच्च. तास्नोः संहितायाम्.
( ३ ) "सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः" ७।१।३९॥ कौ० पृ० ७०३
इति सोर्लुक् छान्दसः. अस्त्येव हि छन्दोभावः. यतोऽयम् पञ्चमो वेद इत्युक्तम्. यद्वा सश्चासौ वश्च इति. ( सवः ).
इत्येकन्नाम. अस्ति ह्येवमन्यत्रापि. यथा त्रिककुद्धामेत्यादि.
अत्र चोक्त एवार्थः. समानाधिकरणसमासः. अस्मिंश्च पक्षे लुको नच्छान्दसत्वकल्पनक्लेशः इति विशेषः. ॐ
एवम् मलीमसेष्वेषु वसन्नपि कनति दीप्यत इति—

निरु०—७३३ यथा प्रसिद्धिवासित्वात् तस्यापि वसतेश्च सः ।
भूतावासतया ( वः ) स्यात्—

(७३९) लोकबन्धुर्,

ॐ लोकबन्धवे नमः।

भा०— एवमविशेषेणाशेषानुग्रहे अवर्जनीयं बान्धवं निबन्धनमाह— (लोकबन्धुः).

लोकानां स्वजनः

(१) "बन्ध, बन्धने" धा०क्र्यादिः कौ०पृ०४७७

(२) "शॄस्वृस्निहि०" उणा० पा०१ कौ०पृ० ६०९

इत्यादिना उप्रत्ययः. यथा,

(३) "माता पिता भ्राता निवासश्शरणं सुहृत् गतिर्नारायणः" सु०उ०६।

(४) "पितामहस्य जगतः" "इत्यादि. ॥॥ गी०९–१७।

निर्व०— (१) "पद, गतौ" धा० दिवा०कौ०पृ०४५५

(२) "खनो घ च" इति चकारात्, ३।३।१२५॥कौ०पृ०६६४ वित्करणाद्वा. प्रकृत्यन्तरादपि घः. इति कर्मणि घः. उत्कृष्टवाचिन उदः आतिशायनिकः तमप्. चर्त्वम्. समासे नञो नलोपः. अनिट्. आविष्टलिङ्गोयम् "इत्यादि. ॥॥ अथैवमविशेषेणाशेषानुग्रहे अवर्जनीयम् बान्धवं निबन्धनमभिधीयते. लोकानामशेषाणाम् बन्धुः स्वजन इति— (लोकबन्धुः).

(१) "बन्ध, बन्धने" क्र्यादिः धा०क्र्यादिः कौ०पृ०४७७

(२) "नश्च" इत्यनुस्वारः. परसवर्णः. ८।३।२४॥कौ०पृ०२०

(३) "शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" उणा० पा०१कौ०पृ०६०९

इति उः.

निरु०—७३९ लोकानां स्वजनत्वाद्धि (लोकबन्धु) रिति स्मृतः।

(७४०) लोकनाथो, (७४१) माधवो,

ॐ लोकनाथाय नमः । ॐ माधवाय नमः ।

भा०— तन्मूलमसाधारणं स्वाभाविकं च संबन्धमाह—
(लोकनाथः). इति स्वामी. ❀
बान्धवविशेषमाह मातापितृत्वम् श्रिया सहास्य सूचयति—
(माधवः).
मधुकुलोद्भवत्वाद्वा— (माधवः).
(१)"मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम्" भा० उ० ७१-४।१०
इति वा. ❀

निर्व०— (४) "लोकृ, दर्शने" धा० भ्वादिः कौ० पृ० ३८७
(५)"हलश्च" इत्यधिकरणे घञ्. ❀ ३।३।१२१॥ कौ० पृ० ६६३
तन्मूलभूतोसाधारणस्स्वाभाविकश्च संबन्ध उच्यते
लोकानां नाथः स्वामीति—
(लोकनाथः).
(१)"नाथृ नाधृ, याच्ञोपतापैश्वर्याशीष्षु" धा० भ्वादिः कौ० पृ० ३८२
ऐश्वर्यकर्मेहायम्. पचाद्यच्. लोक उक्तः. ❀
श्रिया सहास्य मातापितृत्वलक्षणबान्धवविशेषसूचनयायम्, मा-
याः लक्ष्म्याः धवः पतिरिति वा, मधुनामकयादवकुलोद्भवतया,
मधोरपत्यमिति वा, निरुक्तानुरोधात् मौनध्यानयोगवत्तया वा—
(माधवः). पूर्वत्र,

निरु०—७४० लोकबन्धुत्वमूलाद्धि लोकस्वामित्वमित्यतः॥५६८॥
स्वाभाविकाच्च संबन्धात् (लोकनाथ) इतीरितः ।
७४१ लोकनाथत्वसंबन्धः श्रीमतश्चेति (माधवः) ५६९ ॥
मधोर्वंशोद्भवत्वाच्च (माधवः) परिकीर्तितः ।

(७४२) भक्तवत्सलः, ॥

ॐ भक्तवत्सलाय नमः ।

भा०—उक्तस्वाम्यबान्धवोत्सुकेषु भक्तेषु विशेषं भासते— (भक्तवत्सलः).

तद्भागसंभ्रमविस्मृतान्यकामः. ❋

निर्व०(१)-"धूञ् कम्पने" धा०स्वादिः-क्र्यादिः कौ०पृ०४६२-४७६ पचाद्यच्. गुणः. अव्.

(२) "मन, ज्ञाने" धा०दिवा०कौ०पृ०४५६

(३) "अन्येष्वपि०" इति डः. ३।२।१०१॥कौ०पृ०५८५ टिलोपः. ततस्त्रियाम्. अतष्टाबादि. अपरत्र,

(४) "मन, ज्ञाने" उपकरणे, धा०दिवा०कौ०पृ०४५६

(५) "फलिपाटिनमिमनिजनांगुक्पटिनाकिधतश्च" उणा० पा०१कौ०पृ०६१० इति डः. नस्य धश्च. ततो मधुशब्दात्

(६) "ऋष्यन्धकवृष्णिकुरुभ्यश्च" ४।१।११४॥कौ०पृ०२१३ इति अण्. आपत्यः. ओर्गुणः. अव्.

(७) "तद्धितेषु०" इति आदिवृद्धिः. ७।२।११७॥कौ०पृ०२०४ उत्तरत्र पृषोदरादि. ❋

उक्तस्वाम्यबान्धवोत्सुकेषु भक्तेषु विशेषो भाष्यते भक्तेषु तद्भागसंभ्रमविस्मृतान्यकामनया वत्सल इति— (भक्तवत्सलः).

(१) "वद, व्यक्तायां वाचि" धा०भ्वादिः कौ०पृ०४३४

(२) "वृतॄवदिहनिकामिकषिभ्यस्सः" इति सः. उणा०पा०३ कौ०पृ०६२७

(३) "तितुत्र०" इति नेट्. चर्त्वम्. ततः ७।२।९॥कौ०पृ०६०८

(४) "वत्सांसाभ्यां कामबले" ५।२।९८॥ कौ०पृ०३२७

निरु०-७४२विशेषं वक्ति भक्तेषु योसौ स्यात्(भक्तवत्सलः)॥५७०॥

श्लो० ॥ ७१ ॥ (७४३) सुवर्णवर्णो,

ॐ सुवर्णवर्णाय नमः ।

भा०— उक्तगुणवत् कनकनिकषनिर्दोषोज्ज्वलदिव्यव
(सुवर्णवर्णः). यथा,
(१) " यदा पश्यः पश्यते रुक्मवर्णम् " मु०उ०३—
(२) " रुक्माभं स्वप्नधीगम्यम् " मनु० १२—१२
(३) " आदित्यवर्णम् " पु०सू०२०।
(४) " हिरण्मयः पुरुषः सर्व एव सुवर्णः " छा०उ०
"इत्यादि. वर्णाधिष्ठानं च. ❋

निर्व०— इति कामवति मत्वर्थीयो लच्.
(५) " भज. सेवायाम् " धा०भ्वादिः कौ०पृ०४३
(६) " गत्यर्थ० " इत्यादिना कर्तरि क्तः. अनिट्.
कौ०पृ०५९६
(७) " चोः कुः " इति कुत्वम्.गः.नस्य ८।२।३०॥कौ
(८) " खरि च " इति चर्त्वम्. कः. ❋ ८।४।५५॥कौ
उक्तगुणवत् कनकनिकषनिर्दोषोज्ज्वलदिव्यवर्णतया
सुवर्णस्य हिरण्यस्येव वर्णो रूपगुणोऽस्येति—
(सुवर्णवर्णः).
(१) " वृञ्. वरणे " नप्रकरणे, धा०स्वादिः कौ०पृ
(२) "कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् "उणा०पा० ३कौ
इति नः. नित्. गुणः. रपरः.
(३)"नेड्० "इति नेड्. णत्वम्.पुनश्च वर्ण-७।२।८॥कौ
शब्दः प्राग्वत् सुपूर्वो बहुव्रीहिः. ❋

निरु०— ७४३ गुणवत्स्वर्णनिकषनिर्दोषोज्ज्वलवर्णतः
(सुवर्णवर्ण) इत्युक्तः नवार्णो भक्तिकामदः ॥ ५७

( ७४४ ) हेमाङ्गो, ( ७४५ ) वराङ्गश्च,

---

ॐ हेमाङ्गाय नमः। ॐ वराङ्गाय नमः।

---

भा०— नित्यं दिव्यं सत्त्वमयमङ्गमस्येति—
( हेमाङ्गः ).
( १ ) " हिरण्मयः पुरुषो दृश्यते " इति. ❋ छा०उ० १—६—६।
तदेतदौपनिषदं देवक्या व्रियमाणमतिनिह्नुतदिव्य-
चिह्नमाविष्कृतम् इति—
( वराङ्गः ). यथा,

---

निर्व०— हेम, हाटकम्. तदुपलक्ष्यं च दिव्यसत्त्वमयम्
नित्यमङ्गं वर्णाधिष्ठानरूपम् अस्येति—
( हेमाङ्गः ).
अङ्गिर्गतिकर्मा. इदित्त्वान्नुम्. अनुस्वारपरसवर्णौ. पचाद्यच्.
( १ ) " हि, गतौ वृद्धौ च " धा० स्वादिः कौ०पृ०४६२
( २ ) " सर्वधातुभ्यो मनिन् " उणा० पा० ४ कौ०पृ०६३९
इति मनिन्. गुणः. अनिट्. नलोपः. सच
(३) " नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति " ८।२।२॥ कौ०पृ०६३
इति नियमात् नात्रासिद्धः. बहुव्रीहिः. दीर्घः. ❋
तथा वरम् देवक्या व्रियमाणम् अङ्गम् औपनिषदम्
अनिह्नुतदिव्यचिह्नमाविष्कृतम् रूपमस्येति—
( वराङ्गः ).

---

निरु०—७४४ वर्णाश्रयं तु यस्याङ्गं दिव्यसत्त्वमयं यतः।
अतो ( हेमाङ्ग ) इत्युक्तः सतार्णो हेमवर्णदः ॥ ५७२ ॥
७४५ देवकीप्रीतये गुप्तदिव्य[illegible]ः।
आविष्कृतं स्वतो येन ( वराङ्ग ) स्स तु कथ्यते ॥ ५७३ ॥

## (७४६) चन्दनाङ्गदी, ।

---

ॐ चन्दनाङ्गदिने नमः ।

---

भा०—(१) "फुल्लेन्दीवरपत्राभं चतुर्बाहुं निरीक्ष्य तम् । श्रीवत्सवक्षसं जातं तुष्टावानकदुन्दुभिः " इति. ❀ वि० पु० ५—३—८ । चन्दनानि आह्लादनानि अनन्याभरणमप्यङ्गं स्वसंवलिततया उन्मील्य ददतीति वा— केयूरोपलक्षणेन वा दिव्यभूषणान्यङ्गदादीनि भूयिष्ठान्यस्येति— (चन्दनाङ्गदी). भूमनि इनिप्रत्ययः. ❀

---

निर्व०— अङ्गेऽङ्गशब्द उक्तः.

(१) " वृञ्, वरणे " भावे, धा० स्वादिः कौ० पृ० ४६२

(२) " अकर्तरि च कारके० " इति अनुवृत्तौ, ३ । ३ । १९ ॥ कौ० पृ० ६४७

(३) " ग्रहवृदृनिश्चिगमश्च " इति. ३।३।५८॥ कौ० पृ० ६५३ कर्मण्यप्. गुणो रपरः दीर्घः. सांहितः. ❀

तथा चन्दनानि आह्लादनानि च तानि अङ्गदादीनि अङ्गम् अनन्याभरणम् अवयवम् स्वसंवलिततया उन्मील्य ददानानीति वा. तद्विशेषवाचिनोऽस्योपलक्षणतया तदुपलक्ष्याणि वा नित्यदिव्यसत्त्वमयानि भूषणानि चेति चन्दनाङ्गदादीनि. तानि भूयिष्ठान्यस्य सन्तीति- (चन्दनाङ्गदी).

(१) " डुदाञ्, दाने " धा० जुहो० कौ० पृ० ४५१

(२) " आतोनुपसर्गे० " इति कः. आल्लोपः. ३।२।३॥ कौ० पृ० ५७०

उक्तो ह्यङ्गशब्दः.

---

निरु०—७४६ भूषणान्यङ्गदादीनि सदाह्लादकराणि च ।
सन्ति यस्य च नित्यन्तु स स्मृत (श्चन्दनाङ्गदी ॥ ५७४ ॥

## ( ७४७ ) वीरहा , ( ७४८ ) विषमः,

## ॐ वीरघ्ने नमः । ॐ विषमाय नमः ।

ना०— अतिमुग्धस्तनन्धयोपि पूतनाशकटार्जुनादीन् मूरादीन् वञ्चकान् समूलघातं जघानेति—
( वीरहा ). ❋
एवमृजुकुटिलाशयेषु क्षेमंकरभयंकरविषमवृत्तत्वात्—
( विषमः ). ❋

निर्व०— ( ३ ) " वदि, आह्लादने " इदित्त्वात् नुमि [॥१२६॥] त्यादि.
धा० भ्वादिः कौ० पृ० ३८७
करणे ल्युट्. यद्वा णिजन्तात् ल्युः. ल्युट्; युज्वा. बाहुलकात् सर्वत्र योः अनः. णिचि तल्लोपश्च दीर्घः. ततः.
( ४ ) " न कर्मधारयान्मत्वर्थीयः " इति.
न्यायस्यानित्यतया भूमनि मत्वर्थीयोत इनिः.
( ५ ) " यस्य० " ६ । ४ । १४८ ॥ कौ०पृ०५६
इति लोपः. इन्नन्तदीर्घः. [॥१५७॥] इत्यादि. ❋
अतिमुग्धस्तनन्धयोपि वीरान् वञ्चकान् पूतनाशकटार्जुनादीन् सुरादीन् समूलघातं हन्तीति—
( वीरहा ).
हनः क्विप्. अन्यत्तु प्रागेव. प्रपञ्चितम्. अजेः रकि वीभावे चानित्यगुणे , वीरयतेर्वा पचाद्यचि णिलोपे च वीरशब्दः प्रागेव हि निरुहे. हन्नन्तदीर्घः. [॥१५८॥] इत्यादि. ❋
एवम् ऋजुकुटिलाशयेषु क्षेमंकरभयंकरवृत्ततया विषमः समो नेति—
( विषमः ).

निरु०— ७४७ समूलं पूतनादीन्वै यो जघान स ( वीरहा ) ।
७४८ भीतिक्षेमकरत्वाद्धि कुटिलाकुटिलात्मसु ॥ ५७५ ॥
( विषमः ) स तु विख्यातः—

(७४९) शून्यो,

ॐ शून्याय नमः ।

भा०– मनुष्यत्वेपि अशेषदोषैर्विवर्जितः–
(शून्यः).
(१) "शुन, गतौ" ण्यत्. ❋ धा० तुदा०कौ०पृ०४६६

निर्व०–(१) "षम ष्टम, अवैकल्ये" धा०भ्वादिः कौ०पृ०४१८ विपूर्वः षस्सः. पचाद्यच्.
(२) "आदेशप्रत्यययोः" इति षत्वस्य ८।३।५९॥ कौ०पृ०३४
(३) "सात्पदाद्योः" इति प्रतिषेधे प्राप्ते, ८।३।१११॥ कौ०पृ०३५८
(४) "सुविनिर्दुर्भ्यस्सुपिसूतिसमाः" इति. ८।३।८८॥कौ०पृ०४४५ समशब्दे सस्य षत्वम्. ❋
मानुष्यकेप्यखिलकल्याणगुणाभिवृद्धोयम् अशेषैर्दोषैः शून्यो विवर्जित इति–
(शून्यः).
(१) "शुन, गतौ" तुदादिः. धा०तुदा०कौ०पृ०४६६
(२) "ऋहलोर्ण्यत्" ३।१।१२४॥ कौ०पृ०५६२ इति हलन्तात् ण्यत्.
(३) "कृत्यल्युटः" इति. ३।३।११३॥ कौ०पृ०६६३ बाहुलकात् क्वचित् तत्सन्नियोगे प्रथमम्
(४) "अन्येषामपि०" इति. ६।३।१३७॥ कौ०पृ०१६५ दीर्घः. ततो न लघूपधगुणः. अथवा संज्ञापूर्वको विधिरनित्यः. यद्वा,
(५) "टुओश्वि, गतिवृद्ध्योः" धा०भ्वादिः कौ०पृ०४३४ द्वित् ओदिच्च. कर्मणि क्तः

निरु०–७४९ (शून्यः) स्यात् दोषवर्जितः ।

( ७५० ) घृताशीर्,

ॐ घृताशिषे नमः ।

भा०—( १ ) " घृ, सेचने " धा० भ्वादिः कौ० पृ० ४२६
घृतं सेचनं स्वगुणैः जगदाप्यायनम् तत्र वा गोपगृहगव्ये वा आशास्तिरस्येति—
( घृताशीः ). ❋

निर्व०—( ६ ) " ओदितश्च " इति निष्ठानत्वम्. ८।२।४५॥कौ० पृ० ५८७
( ७ ) " नेड्वशि० " इति नेट्. ७।२।८॥कौ० पृ० ५८१
(८) " वचिस्वपियजादीनां किति " इति ६।१।१५॥कौ० पृ० ४३२ यजादित्वात् किति संप्रसारणम्. वस्य उः.
( ९ ) " संप्रसारणाच्च " इति पूर्वरूपम् ६।१।१०८॥कौ० पृ० ६०
( १० ) "हलः" इति संप्रसारणान्तस्य ६।४।२॥कौ० पृ० ४७६ अस्य दीर्घः. किंत्त्वादगुणः. ततः शूनशब्दात्,
( ११ ) " प्रातिपदिकात् धात्वर्थे बहुलमिष्ठवच्च " चुरादौ गणसूत्रम् । कौ० पृ० ४९०
इति णिच्. इष्ठवद्भावात् टिलोपः. ततः,
( १२ ) " अचो यत् " इति. ३।१।९७॥कौ० पृ० ५५७ अजन्ताद्यत्. णिलोपः. सन्निपातपरिभाषा हि न नित्या.
(१३) " कष्टाय क्रमणे " इत्यादि निर्देशात् ३।१।१४॥कौ० पृ० ५१६
( १४ ) " क्नमेजन्तः " इति. ३।१।३९॥कौ० पृ० ८७ अन्तग्रहणाद्वा. ❋
घृते स्वगुणैर्जगदाप्यायने गोपगृहगव्यसर्पिषि वा आशीः इच्छास्येति—
( घृताशीः ).

निरु०—७५० गोपानां सद्मगव्ये वा जगदाप्यायनेन वा ॥५७६॥
घृते त्वाशा हि यस्यास्ति ( घृताशीः ) परिकीर्तितः ।

(७५१) अचलः,

ॐ अचलाय नमः ।

भा०— दुर्योधनादिभिः दुरात्मभिरभेद्यः—
(अचलः). ❋
प्रणतपाण्डवादेः प्रयोजनाय सत्यसमयादेश्चलतीति—

निर्व०— (१) " आङः शासु, इच्छायाम् " क्विप्. धा०अदा० कौ०पृ०४३८
(२) " आशासः क्वावुपधाया इत्वम् वाच्यम् " ६।४।३४॥ कौ०पृ०४४८
इति उपधाया आत इत्वम्.
(३) " घृ-घृ, सेचने " धा०भ्वादिः कौ०पृ०४२६
(४) " घृ, क्षरणदीप्त्योर्वा" धा०जुहो० कौ०पृ०४५२
यथासंख्यं नपुंसके भावे क्तः.
(५) " अजिघृसिभ्यः क्तः" उणा०पा०३ कौ०पृ०६२९
इति क्तः. शासेस्सस्य रुत्वम्.
(६) " र्वोरुपधाया दीर्घ इकः " इति. ८।२।७६॥ कौ०पृ०८०
उपधादीर्घः. आवसानिको विसर्ग इत्यादि. अन्यत्र तु
(७) " शासिवसिघसीनां च " ८।३।६०॥ कौ०पृ० ४३२
इति षत्वं बोध्यम्. ❋
दुरात्मभिर्दुर्योधनादिभिरभेद्यतया चलः चञ्चलो नेति—
(अचलः).
(१) " चल, कम्पने " धा०भ्वादिः कौ० पृ०४१६
पचाद्यच्. समासे नञो नलोपः. ❋
अवधीर्य चात्मनायुधस्पर्शसमयम् भीष्माभिक्रमणे समुद्धृतचक्रतया प्रगतपाण्डवादेः प्रयोजनाय सत्यसमयादेश्चलतीति—

निरु०—७५१ दुर्योधनाद्यभेद्यत्वात् (अचलः) परिकीर्तितः ॥५७७

(७५२) चलः,॥ श्लो०॥ ८० ॥ (७५३) अमानी,

---

ॐ चलाय नमः । ॐ अमानिने नमः ।

---

भा०—(चलः).

सह्यवधीरितानायुधस्पर्शसमयः समुद्धृतचक्रो भीष्ममाचक्राम. यथा,

(१) "तमात्तचक्रं प्रणदन्तमुच्चैः क्रुद्धं महेन्द्रावरजं समीक्ष्य ।
सर्वाणि भूतानि भृशं विनेदुः क्षयं कुरूणामिति चिन्तयित्वा ॥
स वासुदेवः प्रगृहीतचक्रः संवर्तयिष्यन्निव जीवलोकम् ।
अभ्युत्पतन् लोकगुरुर्बभासे भूतानि धक्ष्यन्निव धूमकेतुः ॥"

॥१६॥ इत्यादि. ❋ भा०भी०५९-९४ ।

भक्तेषु अनहंयुः—

(अमानी).

अतो हि दूत्यादावनपत्रपिष्णुरधिचकार. ❋

---

निर्व०—(चलः).

धातुः प्राग्वत्. प्रत्ययश्च. ❋

दूत्याधिकारादौ अनपत्रपिष्णुत्वप्रयोजिकया भक्तेष्वनहंयुतया मानः चित्तसमुन्नतिः अस्यास्तीति मानी सः अस्य नास्तीति—

(अमानी).

(१) "मान, पूजायाम्" धा०चुरा०कौ०पृ०४८८

भावे घञ्. ततः,

---

निरु०—७५२सत्याद्यः पाण्डवार्थे हि चलतीति(चलः) स्मृतः ।
७५३(अमानी) योऽनहंकारी भक्तेष्वेव स ईरितः ॥ ५७८ ॥

(७५४) मानदो, (७५५) मान्यो,

ॐ मानदाय नमः। ॐ मान्याय नमः।

भा०—अर्जुनोग्रसेनयुधिष्ठिरादिभ्यः रथित्वाधिराज्यबहुमानं दत्तवान्—
(मानदः). ❀
तदीयत्वेन सम्मन्तव्यः —
(मान्यः).
तथा ह्ययमात्मानं बह्वामंस्त.
(१) "न सारथेः सात्वतकौरवाणां क्रुद्धस्य मुच्येत रणेऽद्य कश्चित्" इति. ❀

निर्व०—(२) "मत्वर्थीयोत इनिः"
(३) "यस्य०" इति लोपः. ६।४।१४८॥कौ०पृ०५६
नञो नस्य लोपः. इन्नन्तदीर्घः. इत्यादि. ❀
तथा मानमर्जुनादिभ्यो महारथिकत्वाधिराज्यबहुमानम् ददातीति—
(मानदः).ददातेः,
(१) "आतोनुपसर्गे०" इति कः. ३।२।३॥कौ०पृ०५७०
आल्लोपः. मानः उक्तः. ❀
तद्भृत्यसारथ्यादिना स्वबहुमाननात् मान्यः
तदीयत्वेन सम्मन्तव्य इति—
(मान्यः).
(१) "मान, पूजायाम्" धा०चुरा०कौ०पृ०४८८
(२) "ऋहलोर्ण्यत्" इति ण्यत्.३।१।१२४॥कौ०पृ०५६२
क एवं कर्मकरस्तत्रोच्यते. ❀

निरु०—७५४स (मानदो) ऽर्जुनादिभ्यो मानं राज्यं च दत्तवान्।
७५५(मान्य) स्तदीयवत्त्वे स्यात् सम्मन्तव्यस्सदैव सः ॥५७१॥

(७५६) लोकस्वामी, (७५७) त्रिलोकधृत्, ।

---

ॐ लोकस्वामिने नमः । ॐ त्रिलोकधृते नमः ।

---

भा०– क एवं कर्मकरः–

(लोकस्वामी). ❋

एवमतितुङ्गः कथं नीचैर्भवति यतः–

(त्रिलोकधृत्).

अशेषाणामपि धारणपोषणयोर्भारकत्वादिति. यथा,

(१) "विष्टभ्याहमिदं कृत्स्नम्" "इत्यादि. ❋

---

निर्व०– लोकानामशेषाणाम् स्वशेषाणाम् भुवनानाम् स्वामी निरुपाधिकश्शेषीति–

(लोकस्वामी).

स्वरतेर्डे स्वशब्दो हि न्यरूप्यते. ततो मत्वर्थे

(१) "स्वामिन्नैश्वर्ये" इति. ५ । २ । १२६ ॥कौ०पृ०३३२

ऐश्वर्ये आमिनच् प्रत्ययान्तो यन्निपात्यते.

(२) "यस्य०" इति लोपः. ६ । ४ । १४८ ॥ कौ०पृ०५६

इन्नन्तर्दीर्घः, इत्यादि.

(३) "लोकृ, दर्शने" धा० भ्वादिः कौ०पृ० ३८७

(४) "हलश्च" इति अधिकरणे घञ्. ❋ ३।३।१२१॥कौ०पृ०६६३

कुतश्चात्युच्चैरयमतिनीचैर्भवति. यतोशेषधारणपोषणभारकत्वात् त्रीन् लोकान् धरतीति–

(त्रिलोकधृत्).

---

निरु०– ७५६ लोकभर्तृतया चैव (लोकस्वामी) ति शब्द्यते ।
७५७ लोकत्रयस्य धरणात् स (त्रिलोकधृग्) ईरितः ॥५८०॥

(७५८) सुमेधा,

ॐ सुमेधसे नमः।

भा०— आराधकसुसाधुबुद्धिः—
(सुमेधाः).
(१)" नित्यमसिच् प्रजामेधयोः" ५।४।१२२॥कौ०पृ०१६८
इति समासान्तो सिच्. ❀

निर्व०—(१)"धृञ्,धारणे" क्विपि तुक्.धा०भ्वादिः कौ०पृ०४२३
अगुणः. लोक उक्तः. तरतेर्ड्डिः. टिलोपः.
(२)" नेट्०"इति नेट्. षष्ठीसमासोयम्.७।२।८॥कौ०पृ०५८१
तत्फलं च प्रागेव उक्तम्. त्रिलोकधृक् इति पाठे, त्रिलोकान् धृष्णो-
तीति विग्रहः.
( ३ ) " ञिधृषा , प्रागल्भ्ये " धा० स्वादिः कौ०पृ०४६३
स्वादिः. धारकपोषकभारकोयम्. लक्षणया वा तदर्थ-
लाभः. क्विप्. षस्य जश्त्वेन डः. तस्य ,
( ४ ) " ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च "३।२।५९॥
कौ०पृ० ६७
इत्यत्र दधृगिति निपातनेन धृषेः क्विनो विधानात्.
( ५ ) " क्विन्प्रत्ययस्य कुः " ८।२। ६२॥ कौ०पृ०६८
इत्यत्र बहुव्रीह्याश्रयणात्
अन्यत्रापीति अत्र क्विप्यपि
कुत्वम् , गः. ततो वा चर्त्वम् , कः, प्रागपि इदमवादिष्म.
शेषम्. प्राग्वत्. ❀
आराधकेषु सुसाधुबुद्धितया सुशोभना मेधा धारणावती धीरस्येति—
( सुमेधाः ).

निरु०— ७५८ बुद्धिस्सुशोभना यस्य ( सुमेधाः ) परिकीर्तितः।

## (८२८) ऽश्वत्थः,

ॐ अश्वत्थाय नमः।

शा०— (अश्वत्थः).

पृषोदरादिः यथा वैष्णवे,

(३) "मूर्तिं रजोमयीं ब्राह्मीमाश्रित्य सृजति प्रजाः। आश्रित्य पौरुषीं मूर्तिं सात्त्विकीं यश्च पालयन्॥ कालाख्यां तामसीं मूर्तिमाश्रित्य ग्रसते जगत्" इत्यादि.

नि०— अथ प्रादुर्भावान्तरसंज्ञकस्त्वांशभूततद्देवतामुखेन जगन्नियमनमुच्यते तत्रावस्थितमपि यत् नास्ति श्वः तदश्वः अनित्यमिन्द्रादिदिव्यादिस्थानम् तेन च तत्स्थलक्षणतया तेषु या तेषामर्थानि अश्वाः तेषु वा नियाम्येषु तिष्ठति नियामकतयाऽवतिष्ठत इति—

(अश्वत्थः).

(१) "ष्ठा. गतिनिवृत्तौ" धा० भ्वादिः कौ०पृ०४२०.

(२) "सुपि स्थः" ३।२।४॥ कौ०पृ०५७१

इति कः. आतो लोपः. श्वस्तिनि स्वरादिरव्ययम्. नञो नलोपः. पृषोदरादित्वादनिर्दिष्टवर्णो वर्णविकारः. पूर्वत्र श्वसितिः प्राणनकर्मा.

नि०—८२८ अनित्यमिन्द्रादिपदं येषां तेष्वपि नित्यशः ॥६४३॥
नियामकत्वेना (ऽश्वत्थ) स्तिष्ठतीति स कीर्तितः।
ऊर्ध्वमूलमधःशाख एषोऽश्वत्थस्सनातनः ॥ ६४४ ॥

इति श्रुतेश्च.

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ ६४५ ॥

## ( ८२९ ) चाणूरान्ध्रनिषूदनः, ॥

ॐ चाणूरान्ध्रनिषूदनाय नमः ।

भा०—तद्विरोधिनं चाणूरनामानमसुरान्ध्रमल्लं निषूदितवान् इति—( चाणूरान्ध्रनिषूदनः ).
सुषामादित्वात् षत्वम्. ❀

निर्व०—( ३ ) " झलां जश्० " इति, ८।२।३९ ॥ कौ०पृ०१४
जश्त्वेन सस्य दः चर्त्वेन तस्य तः. वैभाषिकौ द्वित्वलोपौ. अपरत्र अशि आप्वच्. अव्ययसंज्ञायाम् अगौणे तदन्तविधिना
( ४ ) " अमात्रे टिलोपः " ६।४।१४४ ॥ कौ०पृ० १३३
इति टिलोपः. नापि जश्त्वादि. ❀
तद्विरोधिनं चाणूरम् तत्प्रसूतत्वात् तन्नामानम्
अन्ध्रम् अन्ध्रमल्लम् निषूदयति क्षारयतीति—
( चाणूरान्ध्रनिषूदनः ).
( १ ) " षूद . क्षरणे " धा० भ्वादिः कौ० पृ०३८३
निपूर्वः षस्य सः. णिच् नन्द्यादिल्युः. इत्यादि. अनः णिलोपः.
( २ ) " सात्० " इति निषेधे प्राप्ते ८।३।१११ ॥ कौ०पृ०३५८
( ३ ) " सुषामादिषु च " इति , ८।३।९८॥कौ०पृ०१९५
तस्याकृतिगणत्वात् उपसृष्टे षत्वम्.
( ४ ) " अन्ध, दृष्ट्युपघाते " धा०चुरा०कौ०पृ०४९१
चुरादौ कथादिः.
अनुस्वारादिणिच्. अतो लोपः. ण्यन्तात् णेर्लोपः.
( ५ ) " सर्वधातुभ्यः ष्ट्रन् " इति ष्ट्रन्. उणा०पा०४कौ०पृ०६३९

निरु०—८२९ चाणूराख्यासुरं योरिं मल्लं सूदितवांश्च सः ।
प्रोच्यते मुनिभिर्नित्यं ( चाणूरान्ध्रनिषूदनः ) ॥ ६४६ ॥

## (८३१) सप्तजिह्वः,

ॐ सप्तजिह्वाय नमः।

भा०—श्रीपौष्करे,

(१) "अग्नीषोमात्मसंज्ञस्य देवस्य परमात्मनः। सूर्याचन्द्रमसौ विद्धि साकारौ लोचनेश्वरौ" इति.

(२) "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" इति. ❀ भ०गी०।

तथाग्निजिह्वा देवाप्यायिका इति ग्रहणवहनाधिकाराः कालीकरालीप्रभृतयः सप्त अस्येति—

(सप्तजिह्वः).

निर्व०—(१) "अर्च, पूजायाम्" धा०चुरा०कौ०पृ०४८६

(२) "अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः" उणा०पा०२ कौ०पृ०६२४

इति इसिः. सहस्रशब्दो निरुक्ते. दीर्घः. सोरुत्वमित्यादि. ❀

तथा देवाप्यायिकाहुतिग्रहणवहनाधिकाराः सप्त जिह्वाः कालीकरालीमनोजवासुलोहितासुधूम्रवर्णास्फुलिङ्गिनीविश्वरुचीलक्षणाः यद्वा हिरण्याकनकारक्ताकृष्टासुप्रभाअतिरक्ताबहुरूपालक्षणाअग्निजिह्वाः अस्येति—

(सप्तजिह्वः).

(१) "लिह, आस्वादने" वन्प्रकरणे, धा०अदा०कौ०पृ०४३७

(२) "शेवयह्वजिह्वाग्रीवाप्वामीवाः" उणा०पा०१कौ०पृ०६१८

इति वन्. लस्य जः. गुणाभावश्च निपात्यते अनिट्. स्त्रियामतष्टापिति टाप्.

निरु०—८३१ यस्मात् काल्यादिजिह्वाश्च अग्नेर्भवन्ति सप्त च।
स (सप्तजिह्व) आख्यातो लोकसंतर्पणे रतः॥ ६४९॥

भा०—श्रौतोष्कोरे.

( १ ) " तद्व्यक्तदेवतानां च हुतभुक् परमेश्वरः । मन्त्रपूतं यदादाय हुतमाज्यपुरःसरम् ॥ ब्रह्माण्डभुवनं सर्वं सन्तर्पयति सर्वदा " इति. ❀

इन्धनानि पाकहविस्सोमसंस्थानि प्रत्येकं सप्त संख्यानि इष्टापूर्तकर्माणि सप्त यानस्त्यास्तामिधोऽर्थयति—

. . .. . -

नि०—( ३ ) " पण, समदाने " धा० १ादिः कौ०पृ०३९७ धम्मः, कनिन्प्रकरणे तस्य.

( ४ ) " सप्यशूभ्यां तुट् च " इति कनिन्. तस्य तुट् च. उणा० पा०१ कौ०पृ०६१८

नानि चानभे चलादित्वादिट् प्राप्तौ बाहुलकान्न. ततः स्त्रियाम्

( ५ ) " ऋन्नेभ्यो ङीप् " ४ । १ । ५ ॥ कौ०पृ०७७

इति नान्तलक्षणे ङीपि प्राप्ते,

( ६ ) " ष्णान्ता षट् " १ । १ । २४ ॥ कौ०पृ०६६

इति नान्ततया षट्संज्ञायाम्

( ७ ) " न षट्स्वस्रादिभ्यः " ४ । १ । १० ॥ कौ०पृ०७७

इति षट्संज्ञकत्वात् ङीपः प्रतिषेधः नलोपः, उपसर्जनह्रस्वः. ❀

तथा सप्तपाकहविर्यज्ञसोमसंस्थात्मकानि औपासनवैश्वदेवस्थालीपाकाष्टकामासिश्राद्धेशानबलिसर्पबलयस्सप्त पाकयज्ञाः. अग्निहोत्रदर्शपूर्णमासपिण्डपितृयज्ञपशुबन्धाग्रयणचातुर्मास्यसौत्रामण्यस्सप्त हविर्यज्ञाः. अग्निष्टोमात्यग्निष्टोमोक्थ्यषोडशवाजपेयातिरात्राप्तोर्यामास्सप्त सोमसंस्थाः.तथेत्थम् यथाक्रममौपासनाग्निहोत्राग्निष्टोमादिभेदेन प्रत्येकं सप्त संख्यानि एधांसि तत्र समिन्धनानि इष्टापूर्तादिरूपकर्माणि—

( ८३२ ) सप्तैधाः, ( ८३३ ) सप्तवाहनः, ।

ॐ सप्तैधसे नमः । ॐ सप्तवाहनाय नमः ।

भा०– ( सप्तैधाः ).
तत्प्रकाशकगायत्र्यादिच्छन्दस्कवैदिकमन्त्राभिमानी–
नि रविरथधुर्याणि सप्तवाहनान्यस्येति–
( सप्तवाहनः ).
यथा आम्नायते,

---

निर्व०– वा तद्दीपनार्थानि अश्वत्थोदुम्बरपर्णशमीवैक-
ङ्कतारानिहतपुष्करवर्णलक्षणानि सप्त वानस्प–
त्यान्येधांसि समिधो वास्येति–
( सप्तैधाः ).
( १ ) " एध, वृद्धौ " धा०भ्वादिः कौ०पृ०३७६
( २ ) " सर्वधातुभ्यः.० " उणा०पा०४कौ०पृ०६४०
इति असुन्. सप्तशब्दस्साधितः. एवमुत्तरत्रापि.
( ३ ) " वृद्धिरेचि " इति वृद्धिः. ६।१।८८॥ कौ०पृ०१२
( ४ ) " अत्वसन्तस्य चाधातोः " दीर्घः. "इत्यादि. ॐ ६।४।१४॥कौ०पृ०७८
तत्प्रकाशकगायत्र्यादिच्छन्दस्कवैदिकमन्त्राभिमानीनि सप्त वाहनानि
रविरथधुर्याण्यस्येति वा सप्त वायुस्कन्धान् वहति वाहयतीति वा–
( सप्तवाहनः ).
( १ ) " वह, प्रापणे " धा०भ्वादिः कौ०पृ०४३२

---

निरु०– ८३२वानस्पत्याश्च सामिधस्सप्त संस्थानि वा तथा ।
इष्टापूर्तादिकर्माणि ( सप्तैधाः ) सन्ति यस्य सः ॥ ६५० ॥
८३३ यो वहत्यनिलस्कन्धान् सप्तासौ ( सप्तवाहनः ) ।
वाहनानि च सन्त्यस्य सप्त वा सप्तवाहनः ॥ ६५१ ॥

## (८३४) अमूर्तिः,

ॐ अमूर्तये नमः।

भा०—(१) "सप्त प्राणाः प्रभवन्ति" इत्यादि. तै०उ०६प्र० १०अ०।

(२) "गुहाशया निहिताः सप्त" तै०उ०६प्र०१०अ०।

इत्युक्तम्. ❀

सप्त वायुस्कन्धान् वहति इति वा—

श्रीपौष्करे,

(३) "त्रिविशेषप्राणशक्तिर्यै वाय्वाख्यमधिदैवतम्। जगत्संधारकं चैव नानास्कन्धात्मना तु वै। एते भगवदारामाः तिष्ठन्त्यस्मिन् जगत्त्रये" इत्यादि.

अथैवमधिष्ठेयेभ्यः स्वभावविप्रकर्षः

(अमूर्तिः).

स्थूलभौतिकमूर्तिव्यावृत्तः इत्यर्थः. ❀

अकर्मवश्यत्वेन तत्सृष्टजीवविलक्षणः—

निर्व०—पूर्वत्र केवलादेव कर्तरि ल्युः. ल्युट्त्यादि करणे ल्युड्वा. अतः णिलोपः. अपरत्रापि करणवर्जम् उभयथापि व्युत्पाद्यम्. तत्र तु विग्रहे विशेषः. आद्ये बहुव्रीहिः. अन्यत्र तत्पुरुषः. ❀

एवमधिष्ठेयेभ्यस्तेभ्यः स्वभावविप्रकर्ष उच्यते स्थूलभौतिकमूर्तिव्यावृत्ततया नास्ति तादृशी मूर्तिरस्येति—

(अमूर्तिः).

मूर्तिशब्दो हि निरूढे. बहुव्रीहिः. नञो नलोपः. ❀

---

निरु०—८३४ स्थूलभौतिकमूर्तिभ्यो व्यावृत्तो (ऽमूर्तिः) रुच्यते।

(८३५) अनघो, (८३६) ऽचिन्त्यो,

ॐ अनघाय नमः । ॐ अचिन्त्याय नमः ।

भा०— (अनघः). ❀
मुक्तोपमयापि दुर्निरूपः—
(अचिन्त्यः). ❀

निर्व०— अकर्मवश्यत्वेन तन्मग्नजीवविलक्षणतया नास्त्यघमस्येति—
(अनघः).
अघशब्दश्च हन्तेर्नञ्पूर्वादन्यत्रापि प्रागुक्तः.
समासः प्राग्वत्.
(१) " नञो नलोपो नुट् " इति. ❀ ६।३।७३॥ कौ०पृ०१४७
मुक्तौपम्येनापि दुर्निरूपतया चिन्तयितुमर्हश्शक्यो वा चिन्त्यः स नेति—
(अचिन्त्यः).
(१) " चिति स्मृत्याम् " धा०चुरा० कौ०पृ०४७९
चुरादिः. नुमादि णिच्. ततः अर्हशक्ययोः
(२) " अचो यत् " ३।१।९७॥ कौ०पृ०५५७
इति यत्. णिलोपः. यद्वा चिन्तेति पठितव्ये इदित्करणात्
लिङ्गादस्य णिचः पाक्षिकत्वात् तदभावे,
(३) " ऋहलोर्ण्यत् " ३।१।१२४॥ कौ० पृ०५६२
इति हलन्तात् ण्यत्. इदित् करणं हि चिन्त्यत इत्यादौ
(४) " अनिदिताम्० " ६।४।२४॥ कौ०पृ०७६
इति नलोपं प्रतिषेद्धुम् तच्च नित्यत्वे णिचोनुपधात्वात्
नलोपो न प्राप्नोतीति न कर्तव्यम् अतो व्यर्थम् सत् ज्ञापकं

निरु०—८३५ जीवेभ्यः कर्मवश्येभ्यो व्यावृत्तश्चा(ऽनघः) स्मृतः ६५२
८३६ (अचिन्त्यो) दुर्निरूपः स्यान्मुक्ताद्युपमयापि सः ।

श्लो० ॥ ९० ॥ (८३९) अणुः,

ॐ अणवे नमः ।

भा०–(१) "भयाभयकरः कृष्णः" इति.

अथाणिमाद्यधिष्ठानम्. ※

अतिप्रकृष्टमैश्वर्यमतिसूक्ष्मदहराकाशाव्यक्तजीवानुप्रवेशसामर्थ्यात्— (अणुः).

(१) "गत्यर्थादणतेरणश्च" उणा०पा० १ कौ०पृ०६०९ इत्युप्रत्ययः तदणिमाप्येतदणुः

(२) "अणोरणीयान्" तै०उ०६ प्र०१० अ० ।

(३) "निपुणोणीयान्" ※

निर्व०–(१) "णश अदर्शने" धा०दिवा० कौ०पृ०४५८ अनः. णिचि वृद्धिः. ल्युरित्यादि. अनः णिलोपः. भयशब्दः प्रागवत्. अथाणिम्नाधिष्ठानमिति प्रकृष्टमैश्वर्यं निरूप्यते. तत्रातिसूक्ष्मदहराकाशाव्यक्तजीवानुप्रवेशसमर्थतया अणोरणीयान् तत्सर्वमणति गच्छतीति–(अणुः).

(१) "अणतिशब्दार्थः" धा०भ्वादिः कौ०पृ०४०१ गतिकर्मेहायम् उपकरणे

(२) "अणश्च" इति उः. उणा०पा०१ कौ०पृ०६०९ तदणिमाह्येतदणुः व्याप्त्या अतिविपुलं परमव्योमादिकमपि चुलकीकृत्याति–

इति विष्णुपुराणे,

निरु०– ८३९ अतिसूक्ष्मदहाकाशाव्यक्तजीवप्रवेशने ॥ ६५६ ॥
शक्तिमा (नणु) रित्युक्तः षडर्णः सर्वशक्तिदः ।

## (८४१) कृशः, (८४२) स्थूलः,

ॐ कृशाय नमः। ॐ स्थूलाय नमः।

भा०—(कृशः).

(१) " कृश, तनूकरणे " धा०दिवा०कौ०पृ०४६० इगुपधत्वात् कः. कृशिमा चायं लघिमा चेति प्रकरणात् गम्यते यथा,

(२) " अशक्यो नियोज्यश्च यत्र कामगमो वशी " ॐ भार०। सर्वमव्यवहितमेकत्र स्थित्वा स्प्रष्टुम् भूमिष्ठस्य च चन्द्रमसं परिमार्ष्टुं शक्तिः प्राप्तिः तयातिप्रकृष्टया विशिष्टः—(स्थूलः).

निरु०—(कृशः).

(१) " कृश, तनूकरणे " धा०दिवा०कौ०पृ०४६० आद्ये इगुपधलक्षणः कः. अगुणः. द्वितीये मतिबुद्धिपूजार्थेत्यादिना कर्तरि कः. सोऽनुपसर्गात्,

(२) " फुल्लक्षीबकृशोल्लाघाः " ८।२।५५॥ कौ०पृ०५८९ इति क्तप्रत्ययस्य तो लोपः. तस्यासिद्धत्वात् प्राप्तस्येटोऽभावश्च निपात्यते. अगुणः. कृशिमा चायं लघिमेत्यैश्वर्यप्रकरणात् अवसीयते—

एकत्र स्थित्वा सर्वम् अव्यवहितं स्प्रष्टुम् भूमिष्ठस्य च चन्द्रमसं परिमार्ष्टुम् शक्तिः प्राप्तिः तयातिप्रकृष्ट उत्कृष्टस्तिष्ठतीति वा तया परिबृंहितो भवतीति वा—(स्थूलः).

निरु०— ८४१ सर्वत्राव्याहतगतिर्लघिम्ना (कृश) ईरितः ॥६५८॥
८४२ स्थित्वैकत्राखिलं स्प्रष्टुं शक्तिर्या महती सदा।
तया प्रकृष्टया शक्त्या विशिष्टः (स्थूल) उच्यते ॥ ६५९ ॥

(८४३) गुणभृत्,

ॐ गुणभृते नमः ।

भा०—(१) "सर्जपिञ्जादिभ्य ऊरोलचाविति ऋच्" उणा०पा०४
कौ०पृ०६३६
(२) "भुवस्समालाय तिष्ठति" इति. ❋
स्वसंकल्पेन सर्वं स्वगुणभूतसर्वावस्थं कुर्वन् बिभर्तीति—(गुणभृत्).
इदमस्य प्रकृष्टशेषित्वम्.
(३) "सर्वस्य वशी सर्वस्येशानः" इति. ❋
भगवद्व्यतया तत्संस्पर्शेऽपि अस्पृष्टतद्गुणः—

निर्व०—पूर्ववत्.
(१) "ष्ठा, गतिनिवृत्तौ" धा० भ्वादिः कौ०पृ०४२४
षस्सः. तोष्ठः.
(२) "सर्जपिञ्जादिभ्य ऊरोलचौ" इति पिञ्जादे—उणा०पा०४
कौ०पृ०६३६
सकृतिगणत्वात् बाहुलकात् पृषोदरादित्वाद्वा, आलोपः.
बाहुलकात् किन्त्वमेव वा. यद्वा "स्थूल, परिबृंहणे" चुरादौ
कथादिः. णिच्. अतो लोपः. ततोऽच्. णिलोपः अगुणः. सर्वम्
एवं स्वगुणभूतम् तादृशसर्वावस्थं कुर्वन् बिभर्तीति—
(गुणभृत्).
भृञः क्विप् तुक्. अगुणः.
(१) "संकेत-ग्राम-कुण-गुण. चामन्त्रणे" धा० चुरा० कौ०पृ०४८९.
चुरादौ कथादिः. अल्लोपः. तस्य स्थानिवद्भावात्
न गुणः. ततः पचाद्यच्. णिलोपः. ❋

निरु०—८४३ सकल्पात् स्वगुणीभूतसर्वावस्थमिदं जगत् ।
कुर्वन् बिभर्ति नित्यं यो (गुणभृत्) स स्मृतो बुधैः ॥ ६६० ॥

(८४४) निर्गुणो, (८४५) महान्, ।

---

ॐ निर्गुणाय नमः । ॐ महते नमः ।

---

भा०—(निर्गुणः).

परमस्वनन्यः इदमस्य परमं वशित्वम्

(१) "विश्वस्य मिषतो वशी" तै०उ०६ प्र०१ अ० ।

(२) "नन्यादयो न सन्तीशे यत्र च प्राकृता गुणाः"

इति च प्राकाम्यमिच्छानभिघातभूमौ उन्मज्जति निमज्जति च यथोदके. ॐ

अस्य परमप्रकर्षात्—

(महान्).

---

निर्व०—इदमस्य प्रकृष्टं प्रभुत्वापरपर्यायमीशितृत्वम्. अतद्गुणस्यतद् निर्गतः तत्संस्पर्शेऽपि अस्पृष्टः तद्गुणोस्येति—

(निर्गुणः).

गुणोद्युक्तः. निर्पूर्वः बहुव्रीहिः. निसस्तु रुत्वम्.

विशेषः परमस्वानन्यलक्षणमिदमस्य परमं वशित्वम् प्राकाम्यम् इच्छानभिघातभूमावुन्मज्जति निमज्जति च यथोदके तेन च परमप्रकृष्टेन मत्वेन पूज्यत इति—

(महान्).

---

निरु०—८४४ स्थितोपि नीरक्षीरवज्जगतो स्पर्शनाद्गुणैः ।
उक्तस्स (निर्गुण) इति सन्नार्णः पावनत्वदः ॥ ६६१ ॥
८४५ भूम्या सह महानीरे ह्युन्मज्जननिमज्जनात ।
(महानि) ति च विख्यातः षड्वर्णस्तु महत्त्वदः ॥ ६६२ ॥

आ०—(१) " महन्तः पृषत् बृहत्० " उणा०पा० २ कौ०पृ० ६२२ इत्यादिना पूर्ववन्निपातनम्. यथा,

(२) " संयोज्य वियोज्यायं कामकारकरः प्रभुः "

(३) " यद्यदिच्छत्ययं शीघ्रमेतत्तत् कुर्यादयत्नतः "

इति च्छायानुप्रवेशेन परचित्तवशीकारः अनुध्यानेन वह्निनाधिष्ठानं सजीवस्य उत्थितजीवस्य वा शरीरस्यानुप्रवेशनम् इष्टापूर्तानुष्ठानम् इति चतुर्विधं यत्र कामावसायित्वमाहुः. ❀ तादृशैश्वर्यप्रकर्षेण कश्चिद्भूतः न नियमितः इति—

. . . . . . . . . . . . . . .

नि०—(१) "मह. पूजायाम्" धा० भ्वादिः कौ०पृ० ४११

(२) " वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च " उणा०पा० २ कौ०पृ० ६२२

इति अतिप्रत्ययान्तो निपातितः शतृवत् कार्यभाक् च भवति. तत उगिदचामिति नुम् मित्वात् अन्त्यादचः परः.

(३) " सान्तमहतः संयोगस्य" ६ । ४ । १० ॥ कौ०पृ० ७७७ इति महतो नस्योपधाया दीर्घः. संयोगान्तलोपः. नस्यासिद्धत्वात् नलोपो न. ❀

छायानुप्रवेशेन परचित्तवशीकरणम् अनुध्यानेन वह्निनाधिष्ठानम् सजीवस्योद्भूतजीवस्य वा शरीरस्यानुप्रवेशनम् इष्टापूर्तानुष्ठानं चेति चतुर्विधं यत्र सर्वथा स्वाच्छन्द्यावस्थानलक्षणम् यत्र कामावसायित्वमुच्यते तादृशैश्वर्यप्रकर्षेण कश्चिद्भूतो नियमितो नेति—

## (८४६) अधृतः, (८४७) स्वधृतः,

ॐ अधृताय नमः । ॐ स्वधृताय नमः ।

भा०—( अधृतः ).

तत्प्रकर्षश्च सर्वदा स्वाच्छन्द्यम् अतो हीति ह स्माहुः आसिद्धसमाधयो हि वैदिकपुत्राः तत्संकल्पात् अपुनरावृत्तिपरमपदं प्रापुः. भवावर्तेन पुनरावर्तन्ते च चिदचित्स्वरूपविपर्याससामर्थ्येपि असौ कस्यापि हेतोर्न विपर्यासयतीति. ❀ मन्त्रौषधितपस्समाधिसिद्धात् वद्वैश्वर्यात् भगवदैश्वर्यं व्यावर्तयति—

( स्वधृतः ).

एतदैश्वर्यमस्य न समाध्याद्युपाधिकम् किन्तु स्वभावतो धृतम् इति स्वधृतः. ❀

निर्व०—( अधृतः ).

धृञः कर्मणि क्तः. अनिट्. अगुणः. नञो नलोपः. ❀ अथ मन्त्रौषधतपस्समाधिसिद्धात् भगवदैश्वर्यम् व्यावर्त्यते सोपाधिकतदैश्वर्योत्कोशाधिवैधुर्यात् स्वेन स्वाभाविकेनैश्वर्येण धृत इति वा उक्तहेतुना स्वेन स्वभावेन धृतमैश्वर्यम् स्वधृतं तदस्यास्तीति वा—( स्वधृतः ) धृत उक्तः. स्वरतेर्ड स्वशब्दश्च. अनुकल्पे स्वधृतशब्दात् अर्शआद्यच्. मत्वर्थीयः.

( १ ) " यस्येति च " लोपः. ❀ ६।४।१४८॥कौ०पृ०५६

निरु०— ८४६ यथानियाम्यः केनापि ह्य ( धृत ) स्स तु कीर्तितः ।
८४७ स्वभावतो धृतैश्वर्यः ( स्वधृतः ) परिकीर्तितः ॥ ६६३ ॥

( ८४८ ) स्वास्यः,

ॐ स्वास्याय नमः ।

भा०— अथ मुक्तैश्वर्याणि—
( स्वास्यः ).
आस्या आसनम्.
( १ ) "आतश्चोपसर्गे" ३ । ३ । १०६ ॥ कौ०पृ०६६०
इति अङ् सा शोभना अस्येति मुक्तस्य हि आविर्भूत-
स्वाभाविकैश्वर्यकत्वम् आसनं सुखम् पूर्वमविद्यानिगलितत्वात्
( २ ) "नैवं भगवतस्सदाविर्भावात्" इति. ❀
अथ नित्यानामैश्वर्याणि—

नि०— अथ मुक्तैश्वर्यादिनस्य व्यावृत्तिः कीर्त्यते. प्रागविद्यानि-
गलितानन्दाविर्भूतस्वाभाविकैश्वर्यस्यास्मुक्तात्मनः आदर्शमाना
नाविर्भावात् सुशोभना आस्या आसना स्थितिरस्येति—
( स्वास्यः ).
( १ ) "आस. उपवेशने" धा० अदा० कौ०पृ०४३८
( २ ) "ऋहलोर्ण्यत्" ३ । १ । १२४ ॥ कौ०पृ०५६२
इति ण्यत्. तद्योग्य कृत्येत्यादिना आविष्यम् कृत्यः.
तत्रित्यासनवाचादि. सुष्ठु बहुव्रीहिः. यण्. उपसर्जन-
ह्रस्वः. स्वास्य इति पाठे आङ् पूर्वान्निष्ठेः.
( ३ ) "आतश्चोपसर्गे" ३ । ३ । १०६ ॥ कौ०पृ०६६०
इति स्त्रियामङ्. आस्थेयः. अन्यत् प्राग्वत्. ❀

नि०—८४८ आसनं शोभनं यस्य स ( स्वास्य ) इति चोच्यते ।

(८४१) प्राग्वंशो,

ॐ प्राग्वंशाय नमः ।

भा०—(प्राग्वंशः).

(१) "यत्र पूर्वे" पु०सू०१ अ० ।

इति श्रुतिः. अनादिमुक्ताः प्राञ्चः तेषां वंशः समुद्भव॰ भूमिः नित्यस्वरूपाविर्भावनिबन्धनभूतः इति सर्वं हि सर्वथा तदिच्छौपाधिकमिति अविवादः. सर्वस्यास्य संग्रहो वैष्णवे,

(२) "तदाष्टगुणमैश्वर्यं नाथ स्वाभाविकं परम् । निरस्तातिशयं यस्य ततस्तोष्यामि किं त्वहम्" इति. ❋

निर्व०—अथ नित्यैश्वर्यादस्य वैलक्षण्यं लक्ष्यते सर्वस्यापि सर्वथा तदिच्छाधीनतया प्राचां पूर्वेषाम् अनाद्यविद्या-नित्ययुक्तानाम् सूरीणां वंशः तत्स्वरूपाविर्भाव-निबन्धनभूततया समुद्भवभूमिरिति—(प्राग्वंशः).

"वन—वन, शब्दे" धा०भ्वादिः कौ०पृ०४०१

(१) "वन-षण, संभक्तौ" वनु च नोच्यते. धा० भ्वादिः कौ० पृ०४०१

(२) "टुवम्, उद्गिरणे" वा. धा०भ्वादिः कौ०पृ०४१९

तत्र वनेर्वमेश्च जनिदाच्युसृवृमदिपमिनमि-भूभ्य इत्वन् त्वन्त्रक्नप्क्निन्शक्स्वडडटाटचः

(३) "अन्येभ्योपि दृश्यन्ते" उणा०पा० ४ कौ०पृ०६३६ उक्ताः प्रत्ययाः. प्रकृत्यन्तरेभ्योपि भवन्ति. अतो वृधातोः

निरु०—८४१ अनादिमुक्ताः प्राञ्चो ये तेषामुद्भवभूमिदः ॥६६४॥

(प्राग्वंश) इति विख्यातः सतार्णो मनुरुत्तमः ।

अन्यवंशः प्रपञ्चः स वंशः प्रागेव नहि पाश्चात्य इति (प्राग्वंशः)

श्लो० ॥ ९१ ॥ (८५१) भारभृत्,

---

ॐ भारभृते नमः ।

---

भा०— वंशम् अनन्तरोक्तं ^१समन्तानभूतं नित्यवर्गसिद्धवर्गं वर्धयतीति यथा,

(१) "भणतोस्म्यन्तमनन्तानम्" इति. ※

मुक्तानां च बन्धस्रंसनस्वरूपाविर्भावस्वप्रातिभारं बिभर्तीति—

(भारभृत्). ※

तत्र प्रमाणयति —

---

निर्व०—(१) "वृधु, वृद्धौ" णिच्. गुणः. रपरः. धा० भ्वादिः कौ० पृ० ४१२

ततोल्युरित्यादि. अनः. णिलोपः. वंश उक्तः. ※

मुक्तानां च भारं बन्धनस्रंसनस्वरूपाविर्भावस्वप्रातिभारम् बिभर्ति भरति वेति—

(भारभृत्).

भृञ उभयस्मादपि क्विपि तुक्. अगुणः. पुनरपि स एव धातुरावर्त्यः.

(१) "अकर्तरि च कारके०" ३।३।१९॥कौ०पृ०६४७

इति कर्मणि घञ्.वृद्धिः. रपरत्वम्. ※

अत्र च प्रमाणसंपत्तिमत्ता प्रख्याप्यते उक्तवक्ष्यमाणगुणकतया सर्वेष्वपि वेदादिषु शास्त्रेषु कथ्यतेस्मायम् प्रगीत इति—

---

निरु०—८५१मुक्तानां बन्धमोक्षादिभारस्य भरणाद्धि सः ।
(भारभृत्) समवर्णः स्यात् कार्यनिर्वाहशक्तिदः ॥ ६६६ ॥

(८५२) कथितो, (८५३) योगी,

ॐ कथिनाय नमः। ॐ योगिने नमः।

भा० — (कथितः).
उक्तदृश्यमानगणवत्तया सर्वशास्त्रेषु यथा.
(१) "वेदेषु स पुराणेषु साङ्गोपाङ्गेषु गीयते"
(२) "वेदे रामायणे पुण्ये भारते भरतर्षभ। आदौ मध्ये तथान्ते च विष्णुः सर्वत्र गीयते"
(३) "वचनां वाच्यम्" १ जि० ७।
इत्यादि. ※
सर्वमेतत् संभावयति इति—
(योगी).

नि० — (कथितः).
(१) "कथ. वाक्यप्रबन्धे" धा० चुरा० कौ० पृ० ४८८
चुरादिः. अदन्तः. णिच्. अतो लोपः. तस्य स्थानिवद्भावात्, नोपधावृद्धिः. ततः कर्मणि क्तः. इट्.
(२) "निष्ठायां सेटि" ६।४।५२॥ कौ० पृ० ५९२
इति णिलोपः. ※
सर्वस्य इदं संभाव्यत इति प्रदर्श्यते.
युज्यतेऽनेन इति योगः अघटितार्थघटनं
महाप्रभावः सोऽतिशयितो नित्ययुक्तश्च अस्यास्ति इति—
(योगी).

---

निरु० — ८५२ उक्तशास्त्रेषु (कथितो) यस्सर्वगुणवत्तया।
योगी ह्यघटितार्थस्य घटनं तेन सर्वथा ॥ ६६७ ॥
८५३ यस्यास्ति नित्यसंबन्धः स (योगी) परिकीर्तितः।

(८५४) योगीशः

ॐ योगीशाय नमः।

भा०—युज्यतेनेन इति योगः. अघटितार्थघटनम् महाप्रभावः सोऽस्यातिशयेन नित्ययोगेन च इति. यथा,

(१) "पश्य मे योगमैश्वरम्" गी०११–८।

(२) "योगेश्वरः कृष्णः" गी०१८–७८।

(३) "योगं योगेश्वरात् कृष्णात्" गी०१८–७५।

(४) "महायोगेश्वरो हरिः" इत्यादि. ※ गी०११–९।

बद्धेष्वपि सहजसमाधिकानां सनकादियोगिनामपि धुर्यः—(योगीशः).

निर्व०—(१) "युजिर्, योगे" धा०रुधा०कौ०पृ०४७१

(२) "हलश्च" ३।३।१२१॥कौ०पृ०६६३

इति करणे घञ्. गुणः.

(३) "चजोः०" ७।३।५२॥ कौ०पृ०५६०

इति कुत्वम् गः. ततः अतिशायने नित्ययोगे च मत्वर्थीयोऽत इनिः.

(४) "यस्येति च" ६।४।१४८॥ कौ०पृ०५६

इति लोपः. इञ्चन्दीर्घः इत्यादि. ※

बद्धेष्वपि योगिनां सहजसमाधिकानां सनकादियोगिनाम् ईशः तद्धुर्यतया स्वामी इति—

(योगीशः).

ईशेः इगुपधात् कः. योगिशब्दश्चोक्तः. नलोपः. दीर्घः. ※

निरु०—८५४ (योगीशः) सनकादीनां योगिनां धुर्य उच्यते॥६६८॥

१ प्रवाह।

## (८५७) श्रमणः

---

ॐ श्रमणाय नमः ।

---

ना०-(१) "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" श्री० गी० ६-४१ ।

इति. ※

योगजन्मन्यायाम् अनुपक्षीणपूर्वसंस्कारैः तत्र समाधिविशेषोऽनायासेन श्रम्यते अभ्यस्यते इति—

(श्रमणः).

(१) "युवोरनाकौ" इत्यनः ७।१।१॥ कौ० पृ० २३३

---

निर्व०-(१) "श्रमु, तपसि खेदे च" धा० दिवा० कौ० पृ० ४५९

आङ्पूर्वः. णिच् वृद्धिः. अमन्तत्वात् मित्त्वे,

(२) "मितां ह्रस्वः" ततः, ६।४।९२ ॥ कौ० पृ० ४८२

(३) "अकर्तरि च कारके०" ३।३।१९ ॥ कौ० पृ० ६४७

इति अनुवृत्तौ,

(४) "एरच्" ३।३।५६॥ कौ० पृ० ६५३

इति करणे अच्. णिलोपः. ※

योगजन्मन्यायाम् अप्यनुपक्षीणपूर्वसंस्कारैः तैः तत्र समाधिविशेषोऽनायासेन श्रम्यते परिश्रम्यतेऽभ्यस्यते विषयभूतेऽस्मिन् अस्मात् अस्मै अनेन इति वा, तैः तत्रसमाधिविशेषेण श्रम्यतेऽभ्यस्यतेऽयम् इति वा, ते श्रम्यन्ते समाधिविशेषाभ्यासे प्राप्यन्तेऽनेन इति वा, श्रमयति तत्र तारतम्यभ्यासयति इति वा—

(श्रमणः).

---

निरु०- ८५७ अक्षीणपूर्वसंस्कारैर्जन्मनानुभवेन च ।
श्रम्यतेऽभ्यस्यतेऽत्रेति (श्रमणः) परिकीर्तितः ॥ ६७१ ॥

## (८५८) क्षामस्,

ॐ क्षामाय नमः ।

भा०— एवं स्वयोगाभिमुख्यमात्रेण ते योगभ्रष्टा अपि दुर्गं तरितुं क्षमन्तेऽस्मात् इति—

(क्षामः).

घञ्.

(१) "नहि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति" गी०६—४०।

इति. ❀

निर्व०— (१३) "लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम्" परि० ।

(१४) "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम्" परि० ।

इति परिभाषाभ्याम्.

श्यतेः शातेश्चोभयोरपि ग्रहणमित्युक्तम्. ह्रस्वः.

ल्युडि "११९" दि. अनः. णिलोपः. णत्वम् प्राग्वत् इतरत्. ❀

इत्थं स्वयोगाभिमुख्यमात्रेण ते योगस्खलिता अपि दुर्गं तरीतुं क्षमन्तेस्मादिति वा ते तथा भवितुं क्षम्यन्ते शक्ताः क्रियन्तेऽनेनेति वा, तान् क्षमयति तत्क्षमान् करोतीति वा—

(क्षामः).

(१) "क्षमूष्, सहने" धा० भ्वादिः कौ० पृ० ३९९

(२) "क्षमू, सहने" वा. धा० दिवा० कौ०पृ० ४५९

आद्यो भ्वादिः. षित्. अपरो दिवादिः. अषित् ततः आद्ये कल्पे उभयतोपि,

(३) "अकर्तरि च कारके०" ३।३।१९ ॥ कौ०पृ०६४७

इति अपादाने घञ्.

निरु०—८५८ योगाभिमुख्यमात्रेण योगभ्रष्टा अपि स्वयम् ।
यस्मात् क्षमन्ते स (क्षामो) भवाब्धितरणाय वै ॥ ६७२ ॥

भा०— एवं प्रत्यापन्नसमाधीन् समाधिविपाकद्वारा. तमसः पारं नयति इति—

---

निर्व०— ( ४ ) " नोदात्त० " ७।३।३४॥ कौ०पृ०५४१ इत्यादिना न वृद्धिः. द्वितीये क्षमणिच्. वृद्धिः.

( ५ ) " नोदात्त० " ७।३।३४॥ कौ०पृ०५४१ इति हि णिचि ञिति णिति कृति च प्रतिषेधः. अतो मित्त्वे ह्रस्वः. ततः कर्तरि,

( ६ ) " एरच् " ३।३।५६॥ कौ०पृ०६५३ इति अच्. णिलोपः. तृतीये क्षमः पचाद्यच् ततः क्षमशब्दात्,

( ७ ) " तत्करोति० " इति णिच्. ३।१।२६॥ कौ०पृ०४९२

( ८ ) " णाविष्ठवत् " वार्ति० ६।४।१५५॥ कौ०पृ०३१०

इति टिलोपः, तस्य स्थानिवत्त्वात् नोपधावृद्धिः. ततः पुनश्च पचाद्यच् णिलोपः. ततस्सर्वत्र,

( ९ ) " प्रज्ञादिभ्यश्च " ५।४।३८॥ कौ०पृ०३५६ इति तस्याकृतिगणत्वात् स्वार्थे अण्. आदिवृद्धिः.

( १० ) " यस्य० " इति लोपः. द्वितीयकल्पे ६।४।१४८॥ कौ०पृ०५६

(११) "वा चित्तविरागे" इत्यतः वेति६।४।९१।कौ०पृ०४९७

( १२ ) " मितां ह्रस्वः " ६।४।९२॥ कौ०पृ०४८२ इति सूत्रे अनुवर्त्य तस्य व्यवस्थितविभाषात्वाश्रयणात् ह्रस्व इति वा बोध्यम्. अत्र च, न तत्र प्रज्ञादित्वं कल्प्यम् विग्रहवाक्येपि दीर्घः पाठ्य इति विशेषः. ❀

एवं प्रत्यापन्नसमाधीन् समाधिविपाकद्वारा मोक्षनिःस्यन्दानुरोधात् सुष्ठु पारं तमसः पारं नयति इति—

(८५९) सुपर्णो,

ॐ सुपर्णाय नमः ।

भा०–( सुपर्णः ).

(१) " स्वपारं भगवान्नयति "

इति मौलाः.

(२) " अनेकजन्मसंसिद्धस्ततो याति परां गतिम् " गी०६–४५।

इति. ❋

तांश्च प्रबलहेतुभिः पतितान् अपि वायुनाऽनुपम-गत्वरेण पतगपतिना वाहयति उत्तारयति इति–

निर्व०–( सुपर्णः ).

नयतेर्डः. टिलोपः.

(१) " पार-तीर, कर्मसमाप्तौ " धा०चुरा०कौ०पृ०४९०

चुरादिः णिच्. ततः कर्तर्यच्. णिलोपः. ततः पृषोदरादिलक्षणो दीर्घस्य ह्रस्वः. ह्रस्वस्य लोपश्च. सुपूर्वः.

(२) " सह सुपा " २ । १ । ४ ॥ कौ०पृ०१२८

इति समासः. असमानपदत्वात्

(३) " रषाभ्याम्० " ८ । ४ । १ ॥ कौ०पृ०३९

इति णत्वाप्राप्तौ,

(४) " पूर्वपदात्० " ८ । ४ । ३ ॥ कौ०पृ०१६७

इति णत्वम्. ❋

तांश्च प्रबलहेतुभिः पतितानपि परमार्षिशापादश्चरं परमभागवतं वसुम् गरुत्मता पुनरुपरिचरीकरणात् वायुना परमगत्वरेण पतगपतिना वाहयति उत्तारयति इति–

निरु०–८५९ प्रत्यासन्नसमाधीन् यः समाधिः परिपाकतः ।
तमसः पारं नयति ( सुपर्णः ) सच कीर्तितः ॥ ६७३ ॥

(८६२) धनुर्वेदो, (८६३) दण्डो,

ॐ धनुर्वेदाय नमः। ॐ दण्डाय नमः।

भा०— अन्येपि सुरनरेन्द्रादयो धनुरादिकं तत्तच्छास्त्रप्रवर्तकेऽस्मिन्विन्दन्तीति— (धनुर्वेदः). ❋ वेदधर्मक्षेमंकरनृपतिमुखेन दण्डनीत्या दुष्टान् दाम्यति इति— (दण्डः).

(१) "समन्ताडुः" ❋ उणा०पा०१कौ०पृ०६१५

निर्व०— (२) "अर्त्तिपृवपियजितनिधनितपिभ्यो नित्" उणा० पा०२कौ०पृ०६२४ इति उसिः नित्. सोरुत्वम्. अन्यच्च वक्तव्यम् प्रागुक्तम्

(३) "मा नाम आर्तशब्दोऽभूत्" इति हि लोकेपि धानुष्कैर्धनुर्धार्यते. ❋ अन्येपि सुरनरेन्द्रादयः धनुरिदमुपलक्षणं धनुरादिकं तत्तच्छास्त्रप्रवर्तकेऽस्मिन् विन्दन्ति लभन्ते इति— (धनुर्वेदः).

(१) "विद्लृ, लाभे" धा०तुदा०कौ०पृ० ४७०

(२) "हलश्च" इत्यधिकरणे घञ्. गुणः३।३।१२१॥कौ०पृ०६६३ धनुरुक्तः. रुत्वं प्राग्वत्. ❋ तथा वेदधर्मक्षेमंकरनरेन्द्रादिमुखेन दण्डनीत्या दुष्टान् दाम्यति उपशमयतीति— (दण्डः).

निरु०—८६२ सुरेन्द्राद्या धनुश्शास्त्रं यस्माद् विन्दन्ति स श्रुतः।
(धनुर्वेदो) ह्यष्टवर्णो धनुर्वेदप्रदायकः॥ ६७६ ॥
८६३ वेदधर्मारिष्टनाशिनृपादिमुखतः खलान्।
दण्डनीत्या दाम्यतीति (दण्डः) स्यात्त्रिवर्णकः॥ ६७७ ॥

(८६४) दमयिता, (८६५) ऽदमः ।

ॐ दमयित्रे नमः । ॐ अदमाय नमः ।

भा०—स्वयञ्च रावणादीन् नाच्छील्येन—
(दमयिता).
न चास्यान्यः कश्चिद्दमितेति—
(अदमः). यथा,
(१) "मम कुर्याज्जगत्सर्वं मननेन जनार्दनः । न तु कृत्स्नं जगच्छस्तं किञ्चित् कर्तुं जनार्दनं" इति. भा० उ० ६९–८।

निर्व०—(१) "दमु, उपशमे" धा० दिवा० कौ० पृ० ४७९
शमनार्थत्वात् सोऽयं परजन्तस्य इदं ग्रहणम्. उपशम इति.
(२) "अमन्ताड्डः" इति डः. उणा० पा० १ कौ० पृ० ६१५
अमू प्रत्याहारः. बाहुलकात् डस्यैत्त्वम्.
(३) "नेड्०" इति नेट्. अनुस्वारपरसवर्णौ. ७।२।८॥ कौ० १२ पृ० ५८१
स्वयं च रावणादीन् नाच्छील्येन दमयतीति—
(दमयिता).
धातुः पूर्ववत्. ततो णिच्. वृद्धिः. अमन्तत्वात् मित्वे "मितां ह्रस्वः." ततः ६।४।९२॥ कौ० पृ० ४८२.
(१) "तृन्" इति ताच्छील्यिकस्तृन्. इट्. ३।२।१३५॥ कौ० पृ० ६०१
गुणः. अय्. अनङादि. ※
कृत्स्नस्यापि परिपन्थिवर्गस्यास्मिन् अकिञ्चित्करतया नास्ति दमः दमकर्मा अन्यः अन्यकर्तृकदमनं वा अस्येति—
(अदमः).

---

निरु०—८६४ नाच्छील्याद्रावणादीनां हन्ता (दमयिता) स्वयम् ।
८६५ कश्चिद्दमयिता नास्ति यस्यासौ (अदमः) स्मृतः ॥ ६७८॥

(८६६) अपराजितः,

ॐ अपराजिताय नमः।

ना०— एवं सर्वतोमुखे प्रशासने क्वचित् कदाचित् कुतश्चिदप्रतिहतः— (अपराजितः). यथा,

(१) "शाखाहमपराजितम्"

(२) "यस्य मन्त्री च गोप्ता च सुहृच्चैव जनार्दनः। हरिस्त्रैलोक्यनाथस्तत् किन्नु तस्य न निर्जितम्" भा०उ०।

इति च. ❋

निर्व०— प्राग्वदेव धातुः. ततो भावे घञ्.

(१) "नोदात्तोपदेशस्य०" ७।३।३४॥कौ०पृ०५४१

इत्यादिना नोपधावृद्धिः. आद्ये ततः,

(२) "तत्करोति०" इति णिचि चुरा०गणसूत्रम् कौ०पृ०४९०

(३) "णाविष्ठवत्" इति टिलोपः. ६।४।१५५॥कौ०पृ०३१०

उक्तयुक्त्या न वृद्धिः. ततः पचाद्यचि णिलोपः. अनुअल्पे तु भावे घञ् नानाधिकमिति विवेकः. नञ्पूर्वो बहुव्रीहिः. नञो नलोपः. नाम्नोऽस्मांहितः अकः सवर्णे दीर्घः. ❋

एवं सर्वतोमुखे प्रशासने क्वचित् कदाचित् कुतश्चिदपि पराजितः प्रतिहतो नेति— (अपराजितः).

(१) "जि. जये" धा०भ्वादिः कौ०पृ०४०५

(२) "जि. अभिभवे च" धा०भ्वादिः कौ०पृ०४२६

परापूर्वः. ततः कर्मणि क्तः. अगुणः. अनिट्. नञ्समासः. नलोपः. ❋

निरु०— ८६६क्वचित् कदाचित् कुतश्चित् सर्वतोमुखशासने। यस्य प्रतिहतिर्नास्ति स वै स्या (दपराजितः)॥ ६७९॥

(८६९) नियमो, (८७०) यमः, ॥

ॐ नियमाय नमः । ॐ यमाय नमः ।

ना०–(१) " यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति " इति. ❋ गी०७–२१ ।
तत्फलं च जात्यायुर्भोगादिकं नियम्यतेऽस्मिन्निति–
(नियमः).
(१) " यमस्समुपनिविषु च " ३ । ३ । ६३ ॥ कौ०पृ०६५४ इत्यप्. यथा,
(२) " लभते च ततः कामान् मयैव विहितान् हि तान्. " इति. ❋ गी०७–२२ ।
तत्तत्फलनियामकान् यमादीनपि यच्छतीति–
(यमः). यथा,

निर्व०–(१) " यम, उपरमे " धा० भ्वादिः कौ०पृ०४३० निपूर्वः. तृच्. अनिट्. अनुस्वारादि, ततोऽनङादि. ❋
तत्फलं च जात्यायुर्भोगादिकं नियम्यते निमित्तभूतेऽस्मिन्निति–
(नियमः).
प्राग्वद्धातुः. उपसृष्टः
(१) " अकर्तरि च कारके० " इत्यनुवृत्तौ ३।३।१९॥ कौ०पृ०६४७
(२) " यमस्समुपनिविषु च " इति अधिकरणे अप्. ❋ ३ । ३ । ६३ ॥ कौ०पृ०६५४
तत्तत्फलनियामकान् यमादीनप्यधिष्ठातृतया यच्छतीति–
(यमः).

निरु०–८६९ भोगादिकं नियम्यास्मिन् लम्भयन् (नियमः) स्मृतः ।
८७० यमादीन् यच्छति (यम) स्तत्तत्फलनियामकान् ॥ ६८२ ॥

( ८७२ ) सात्त्विकः, ( ८७३ ) सत्यः,

ॐ सात्त्विकाय नमः । ॐ सत्याय नमः ।

भा०—धर्मज्ञानवैराग्यैश्वर्यरूपफलनियमनेन च सत्त्वमर्हतीति— ( सात्त्विकः ).
( १ ) " तदर्हति " इति. ठक्. ※ ५ । १।६३॥कौ०पृ०३०१
सात्त्विकशास्त्रप्रतिपाद्यतया यथार्थवैभवः. ( सत्यः ).
( १ ) " सत्ये प्रतिष्ठितः कृष्णस्सत्यमस्मिन् प्रतिष्ठितम् । सत्तासत्ते च गोविन्दस्तस्मात्सत्यस्सतां मतः " भा० उ० ६९–१२–१३ । इति वा–( सत्यः ).

निर्व०–( ३ ) " मादुपधायाश्च मतोर्वोऽयवादिभ्यः " ८ । २ । ९ ॥ कौ०पृ०३२७
इति मतोर्मस्य वः. अत्वन्तदीर्घः. ततो नुमि"त्वा"दि. ※ धर्मज्ञानवैराग्यैश्वर्यरूपफलनियमनेन च सत्त्वमर्हतीति— ( सात्त्विकः ). सत्त्वशब्दः साधितः. ततः
(१) " तदर्हति " इति, ठगादिद्वादशक-५।१।६३॥कौ०पृ०३०१ विधानात् इह ठञधिकारमध्यस्थष्ठक्.
( २ ) " ठस्येकः " इति इकादेशः. आदेशेऽकार उच्चारणार्थः. ७ । ३ । ५० ॥ कौ०पृ०२२१
( ३ ) " किति च " इत्यादिवृद्धिः. ७।२।११८ ॥कौ०पृ०२०४
( ४ ) " यस्य० " इति लोपः. ※ ६ । ४ । १४८ ॥ कौ०पृ०५६
सात्त्विकशास्त्रप्रतिपाद्यतया सत्यो यथार्थवैभव इति वा. वचनात् स्वस्य सत्ये तस्य च स्वस्मिन् प्रतिष्ठिततया सत्यत्वेन सतां मतत्वाद्वा– ( सत्यः ).

निरु०–८७२ विज्ञानैश्वर्यवैराग्यधर्मरूपफलं स्वयम् ।
नियम्यार्हति सत्त्वं यः ( सात्त्विकः ) परिकीर्तितः ॥ ६८४ ॥
८७३ यथार्थवैभवः ( सत्यः ) सर्वशास्त्रेषु विश्रुतः ।

(८७६) प्रियार्हो,

ॐ प्रियार्हाय नमः ।

भा०—एवमैश्वर्यज्ञानिनं प्रियमेवार्हति इति—
(प्रियार्हः).
एकभक्तिषु हि भगवतः स्वत एव प्रावण्यम् आर्तार्थार्थिजिज्ञासुषु औदार्यबलात्करणेन
(१) "तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते" गी०७–१७।
(२) "उदाराः सर्व एवैते" इति. ❀ गी०७–१८।

निर्व०—(१) "इण्. गतौ" धा०अदा०कौ०पृ०४४१
अभि प्रइत्युपसर्गसमुदायपूर्वः. ततः,
(२) "अकर्तरि च कारके०" ३।३।१९॥ कौ०पृ०६४७
इति कर्मणि घञ्. तदनुवृत्तौ,
(३) "एरच्" इति वा तत्राच्. आद्ये ३।३।५६॥कौ०पृ०६५३
(४) "अचः" ७।२।११५॥ कौ०पृ०४२
इति वृद्धिः. आय् अन्यत्र गुणः. अय् इति भेदः. उभयत्रापि सांहितो दीर्घः. ❀
एवं प्रियमैश्वर्यज्ञानिनम् एकभक्तिमेवार्हतीति—
(प्रियार्हः).
(१) "अर्ह. पूजायाम्" धा० भ्वादिः कौ०पृ०४११
(२) "अर्हः" ३।२।१२॥ कौ०पृ०५७२
इति कर्मण्यणोऽपवादोऽच् स्त्रियां विशेषः.
(३) "प्रीञ्. तर्पणे कान्तौ च" धा०क्र्यादिः कौ०पृ०४७४
(४) "इगुपधज्ञाप्रीकिरः कः" ३।१।१३५॥कौ०पृ०५६७
इति कः. अगुणः. संयोगपूर्वत्वात् एकाच्त्वाच्च.

निरु०—८७६ ऐश्वर्यज्ञानिनं यः (प्रियार्हः) प्रियमर्हति ।

(८७९) प्रीतिवर्धनः,॥ श्लो०॥९४॥ (८८०)विहायसगतिर्,

ॐ प्रीतिवर्धनाय नमः । ॐ विहायसगतये नमः ।

भा०— अथोत्तरोत्तरगुणाविष्कारेण तां प्रीतिं वर्धयति इति—
(प्रीतिवर्धनः).
(१) " जगतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तम्" इति. ❀
गी० १०–१ ।
तथा निरूढभक्तिपरकोटिभिः विहायसं पदमेव[1] गम्यतेऽस्मात् इति—
(विहायसगतिः). स खल्वाह.

निर्व०— अथोत्तरोत्तरगुणाविष्कारेण तां प्रीतिं वर्धयतीति—
(प्रीतिवर्धनः).
वृधेर्ण्यन्तात् ल्य्वादौ वर्धन उक्तः. यद्वा,
(१) " वर्ध, छेदनपूरणयोः " धा०चुरा० कौ०पृ०४८३
चुरादिः. पूरणकर्मा चायम्. णिच्. अन्यथाप्युक्तम्
ततो ल्युप्रभृतिः. अनः. णिलोपः.
(२) " प्रीञ्. तर्पणे कान्तौ च" धा०क्र्यादिः कौ०पृ०४७४
भावे स्त्रियां क्तिन्. अनिट्. अगुणः. ❀
अथ निरूढभक्तिकोटिभिः विहायसं परमव्योम गम्यते
प्राप्यतेऽस्मादिति—
(विहायसगतिः).
अर्थकथनमात्रमिदम्. षष्ठीसमासोयम्. गमेः—

निरु०—८७९ गुणाविष्करणान्नित्यमुत्तरोत्तरतोऽधिकम् ।
यस्तु प्रीतिं वर्धयति (प्रीतिवर्धन) ईरितः ॥ ६९० ॥
८८० निरूढभक्तियुक्तैर्हि नित्यं यस्मात्तु गम्यते ।
विहायसं परं व्योम (विहायसगति) स्तु सः ॥ ६९१ ॥

१ परमं व्योम ।

भा०—(१) भुक्त्वा च भोगान् विपुलान् त्वमन्ते मत्प्रसादतः । मतनुस्मरणं प्राप्य मम लोके निवत्स्यसि " ग०गी०।
इति सूत्रं च
(२) " तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया " इति. ❀
शा० ४—२—१६ ।

---

निर्दे०—(१) " अकर्तरि च कारके० " इत्यनुवृत्तौ ३ । ३ । १९॥ कौ०पृ०६४७
(२) "स्त्रियां क्तिन्" इति अपादाने क्तिन्. अनिट्. ३। ३।९४॥ कौ०पृ०६७८
(३) " अनुदात्तोपदेश० " ६।४।३७॥ कौ०पृ०४३५ इत्यादिना अनुनासिकलोपः.
(४) " ओहाक्. त्यागे " धा०जुहो० कौ०पृ०४५०
(५) " ओहाङ्, गतौ " वा. धा०जुहो०कौ०पृ०४५०
विसर्गः. अनुन्प्रकरणे.
(६) " वनणित् " उणा०पा०४ कौ०पृ०६४१
इत्यतो णिदित्यनुवृत्तौ
(७) " वहिहाधाञ्भ्यश्छन्दसि " उणा०पा०४ कौ०पृ०६४१ इत्यसुन णित्. उक्तो हि छन्दोभावः. केचित्त्विदमन्यथा व्याचख्युः
(८) " पचिवचिभ्यां सुट् च " उणा०पा०४ कौ०पृ०६४१ इत्यनस्सुडित्यनुवृत्त्या पुनस्सुडिति उदाजहुश्च. वक्षाः हासाः धासाः इति. तत्तु बाहुलकेनापि सुसमाधम् स्तोमवाहाः विहायाः विश्वधायाः इत्यादिदर्शनादुचितोक्तेव वस्तुनः स्थितिः णित्त्वात्.
(९) " आतो युक्० " ७ । ३ । ३३॥ कौ०पृ०५३९ इति णिति कृति युक्. बाहुलकादकारः. पृषोदरादित्वाद्वा.

(८८१) ज्योतिः,

---

ॐ ज्योतिषे नमः ।

---

भा०— तदारोहणनिश्रेण्याः अर्चिरादिगतेः प्रथमं पदमर्चिराह—
( ज्योतिः ).

---

निरु०— अथवा द्युतधातोः
( १० ) " अत्यविचमितमिनमिरमिलजिनभिनविषतिपनिपणिमहिभ्योऽसच् " इत्यसच्. उणा०पा०३ कौ०पृ०६३०
( ११ ) " वहिशुभ्यां णित् " उणा०पा०३ कौ०पृ०६३०
इत्यसचो णित्वं न बाहुलकात् अन्यतोपीत्यसच् णित्
( १२ ) " हि गतौ वृद्धौ च " धा०स्वादिः कौ०पृ०४६२
इत्यतो वा द्युधातोर्वा विपूर्वात् युक् हिनोतेस्तु तादृशाद्रूपस्याद्यादेशाविल्यलम्.
अथ तदारोहणनिश्रेणिकाऽर्चिरादिगतिः प्रतिपाद्यते उपासनप्रसङ्गेन भगवता उपासकानामतिवाहे गन्तॄणां गमयितृत्वलक्षणेऽतिवहने नियुक्ततया हि आतिवाहिकाः अर्चिरादयो देवताविशेषाः वहेरतिपूर्वाद्भावे घञन्तात्
( १ ) " तत्र नियुक्तः " ४ । ४ । ६९ ॥ कौ०पृ०२८६
इति ठक्. सर्वमिदं ब्रह्ममीमांसायां स्पष्टम् तत्क्रमगमनिका च तत्रैव स्फुटतरं द्रष्टव्या तद्द्वारा च तन्नियोजकस्य भगवतोऽत्राभिधानम्
तत्र प्रथमं पदमर्चिरुच्यते द्योत्यतेऽयमस्मादिति—
( ज्योतिः ).

---

निरु०—८८१ स्वप्रभैः साधनत्वाद्यः स्वयं नित्यं विशेषतः ।
अर्चिरादिगते ( ज्योतिः ) प्रथमं पर्व कथ्यते ॥ ६९२ ॥

( ८८२ ) सुरुचिर्,

ॐ सुरुच्ये नमः ।

भा०—ओोत्यनऽस्मादिति श्रुतेरिसन् आदेशश्च यथा.
( १ ) " तेऽर्चिषमभिसंभवन्ति " छा०५–१०–१ ।
इति उपासनप्रसंगेन भगवता उपासकानिवहन् नियुक्तत्वेनातिवाहिका ह्यर्चिरादयः
( २ ) " अर्चिरादिना तत्प्रथितेः " शा०४–३–१ ।
( ३ ) " आतिवाहिकास्तल्लिङ्गात् " शा०४–३–४ ।
इत्यादौ चिन्तिताः. ॐ
सूर्योदयाद्रोचत इति रुचिरहः साऽस्य शोभनेति—
( सुरुचिः ).
(१) " इगुपधात् कित् " इति इन् कित्. उणा०पा०४कौ०पृ०६३७
( २ ) " अर्चिषोऽहः " इति. ॐ छा०५–१०–१ ।

निर्व०—रुचेर्दीप्तिकर्मणो बाहुलकात्,
( २ ) " ताभ्यामन्यत्रोणादयः " ३।४।७५॥ कौ०पृ०६४५
इति बाधित्वा अपादान इह इमनि ओदेर्जकारे गुणे च
ज्योतिष्केन करणे वार्थे व्युत्पाद्यः रुच्यम् अवसाने तु
विसर्गः. आविष्टलिङ्गोऽयमित्यादि. ॐ
अथाहः सुशोभना रुचिः सूर्योदयाद्रोचमानमहरस्येति—
( सुरुचिः ).
( १ ) " रुच. दीप्तौ " इनप्रकरणे. धा०भ्वादिः कौ०पृ०४११
( २ ) " इगुपधात् कित् " उणा०पा०४कौ०पृ०६३७

निरु०—८८२ अहः शुभं यस्य स वै ( सुरुचिः ) परिकीर्तितः ।

(८८३) हुतभुग्विभुः ।

ॐ हुतभुग्विभवे नमः ।

ना०— अमृतपरिणामं हुतं भुञ्जानः सोमः यस्मिन् शुक्लपक्षद्वारा विभुः पूर्णो भवति सः—
(हुतभुग्विभुः).
(१) " अथ आपूर्यमाणः पक्षः " इति. ❋ छा०५-१०-१।

निर्व०—इति कर्तरि इन् कित्. ततो न गुणः. सुपूर्वो बहुव्रीहिः. नाम्नोः सांहितो विसर्जनीयस्य षः. ❋
अथापूर्यमाणपक्षः प्रकरणात् हुतभुक् अमृतपरिणामं हुतं भुञ्जानस्सोमः विभुः व्यापी शुक्लपक्षद्वारा पूर्णोऽस्मिन्निति—
(हुतभुग्विभुः).
एकनाम. भवतेर्विपूर्वाड्डुः. विभुरुक्तः. अन्यच्च प्रागेव प्रव्यक्तम्.
(१) " भुज. पालनाभ्यवहारयोः " धा० रुधा० कौ०पृ०४७१
इहाभ्यवहारक्रियोयम् क्विप्. अगुणः. कुत्वम् गः. वा चर्त्वम्.
(२) " हु, दानादानयोः " धा० जुहो०कौ०पृ०४४९
कर्मणि क्तः. अगुणः. बहुव्रीहिः. आवसानिकस्य चर्त्वम्. सांहितिकं जश्त्वम्. ❋
अथ षडुदङ्मासाः उत्थानकालतया हूयन्ते शब्द्यन्ते उदगयनद्वारा प्रशस्यत इति—

निरु०—८८३ सुधापरीणामहुतं भुञ्जानश्चन्द्रमास्तथा ॥ ६९३ ॥
विभुः पूर्णो भवेद्यस्मिन् स वै स्याद् (हुतभुग्विभुः)।

(८८४) रविर्, (८८५) विरोचनः,

ॐ रवये नमः । ॐ विरोचनाय नमः ।

गा०—उत्थानकालतया उदगयनद्वारा रूयते प्रशस्यत इति—
(रविः).
(१) " आपूर्यमाणपक्षाद् यान् पडुदङ्ङेति मासान् " छा०५—१०—१ ।
इति. ❀
द्वाभ्यामयनगतिभ्यां संवत्सरः रथेनादित्यं विरोचयतीति—
(विरोचनः).
(१) " मासेभ्यस्संवत्सरम् " छा०५—१०—२ ।
(२) " संवत्सरोऽसावादित्यः " तै०६ न्यासविद्या. ❀

निरु०—(रविः).
(१) " रु शब्दे " धा०अदा०कौ०पृ०४३९
(२) " अच इः " उणा०पा०४कौ०पृ०६३८
इति कर्मणि इः. गुणः. अव्. ❀
अथ संवत्सरः द्वाभ्यामयनगतिभ्यां संवत्सरो रथेन आदित्यं विरोचयति विद्योतयतीति—
(विरोचनः).
(१) " रुच, दीप्तौ " विपूर्वः. धा०भ्वादिः कौ०पृ०४११
णिच्. गुणः. ल्युटि र्योरिति. अनः. णिलोपः. ❀

निरु०—८८४ यश्चोत्तरायणद्वारा रूयतेऽत्र प्रकाश्यते ॥ ६२४ ॥
स वै (रविः) समाख्यातः प्राशस्त्यफलदो मनुः ।
८८५ अयनद्वयगत्यार्कं यो विरोचयति स्वयम् ॥ ६२५॥
(विरोचन) इति ख्यातः प्रकाशफलदो मनुः ।

## (८८६) सूर्यः,

ॐ सूर्याय नमः।

भा०—वायुस्सदा सरत्यस्मादिति—(सूर्यः).

(१) "राजसूयसूर्य०" ३।१।११४॥ कौ०पृ०७६१ इत्यादिना निपातितः. बहुलवचनादस्येति कृतः प्रायमर्थं व्यभिचरन्ति इति कृत्प्रत्ययानां सर्वत्रेष्टार्थत्वं द्रष्टव्यम्.

(२) "न वायुर्लोकम्" कौषी० १—३। इति. ❀

निर्व०—अथ वायुः सदा वायुस्सरति पवतेस्मादिति एवं सुवति प्रेरयति वा—(सूर्यः). आद्ये,

(१) "सृ. गतौ" अन्यत्र. धा०१वादिः कौ०पृ०४२७

(२) "षू. प्रेरणे" तुदादिः. धा०तुदा०कौ०पृ०४६८ परस्मै. उभयत्रापि. क्यप् प्रकरणे,

(३) "राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः" ३।१।११४॥ कौ०पृ०७६१ इति क्यबन्तो निपातः. तत्र

(४) "ऋदोरप्०" ३।४।७०॥ कौ०पृ०७५५ इति बाधित्वा सर्त्तेरपादाने क्यप् ऋत उत्वम्. सुवतेस्तु कर्तरि क्यप्. तस्य रुट् च निपात्यते. यद्वा प्रत्ययमुत्वं रुटं वा निपात्य

(५) "कृत्यल्युटः०" ३।३।११३॥ कौ०पृ०६६२ इति बाहुलकात् कृत्यस्यास्य उभयत्रोक्तार्थकत्वोपपत्तिः. पूर्ववत् स्वरत्वम्.

निरु०—८८६ वायुस्सरति यस्माद्धि तस्मात् (सूर्यः) षडक्षरः॥६१६॥

{८८७ / ९६३} सविता,

ॐ सवित्रे नमः ।

भा०— सूर्यद्वारा वृष्टिसस्यादिकं सूते इति—
( सविता ).
( १ ) " संवत्सरादादित्यम् " छा०५-१०-२।
( २ ) " वायुमव्यादविशेषविशेषाभ्याम् " इति, शा०४-३-२।
न्याय्यं व्यवधानम्. ※
रविरश्मिसंक्रान्त्यादिमुखेन चन्द्रविद्युद्वरुणान् लोचयतीति—

निर्व०— ( ३ ) " हलि च " ८।२।७७॥ कौ०पृ०६३
इति दीर्घः. उभयत्रापि अगुणः. प्रतिषेधात् यथा-
यथं प्रवृत्तेः. ※
अथान्वयः सूर्यद्वारा सस्यादिकं सूते प्रसूते
इति--
( सविता ).
( १ ) " षूङ् प्राणिगर्भविमोचने " धा०अदा०कौ०पृ०४३८
अदादिकः तृच्.
(२) " स्वरतिसूतिसूयतिधूञूदितो वा " ७।२।४४॥ कौ०पृ०३८७
इति पाक्षिक इट्, गुणः, अय्, अनङादि. ※
अथ चन्द्रमाः अमानवापरनामाविद्युद्वरुणश्च रविणा
सूर्येण तद्रूपलब्ध्य तद्रश्मिसंक्रान्त्यादिमुखेन चन्द्र-
विद्युद्वरुणान् लोचयति दर्शयतीति—

निरु०—८८७ वृष्टिसस्यादिकं सूत ( सविते ) ति रवेर्मुख्यात् ।

(८८८)रविलोचनः,॥श्लो०॥९५॥(८८९)अनन्तहुतभुग्भोक्ता,

ॐ रविलोचनाय नमः । ॐ अनन्तहुतभुग्भोक्त्रे नमः ।

भा०— ( रविलोचनः ).

( १ ) "आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्" छा०५—१०—२।

( ३ ) "स वरुणलोकम्" इति, ❀ कौषी० १—३ ।

सततन्तुषु हुतं भुङ्क्ते इति इन्द्रो हुतभुक् प्रजाः भुनक्ति पालयतीति प्रजापतिः भोक्ता तौ महान्तावस्येति—

( अनन्तहुतभुग्भोक्ता ).

( १ ) "स इन्द्रलोकं स प्रजापतिलोकम्" ❀ कौषी० १—३।

निर्व०— ( रविलोचनः ).

( १ ) "लोचृ. दर्शने" धा०भ्वादिः कौ०पृ०३८९

णिच्. ल्युरि "ल्योः" इ. अनः. णिलोपः. रातेरिप्रत्यये रविरुक्तः. ❀

अथेन्द्रः प्रजापतिश्च. अनन्तौ अनवधिकमाहात्म्यतया महान्तौ हुतभुग्भोक्तारौ प्रकरणात् सततन्तुषु हुतं भुङ्क्ते इति हुतभुक् इन्द्रः सच भुनक्ति प्रजाः पालयतीति भोक्ता प्रजापति· सच इति द्वन्द्वः तावस्येति—

( अनन्तहुतभुग्भोक्ता ). एकं नाम.

( १ ) "भुज, पालनाभ्यवहारयोः" धा०रुधा०कौ०पृ०४७१

पालनकर्मेहायम. तृच्. गुणः. अनिट्. कुत्वं ❀

तस्य चर्त्वम् क्तः.

निरु०—८८८सूर्यस्य रश्मिसंबन्धाद् विद्युद्वरुणचन्द्रकान् ॥ ६९७॥

निरन्तरं लोचयति ( रविलोचन ) ईरितः ।

८८९ मरुत्वान् हुतभुग्भोक्ता भुनक्तीति प्रजा विधिः ॥ ६९८ ॥

सो ( ऽनन्तहुतभुग्भोक्ता ) महान्तौ यस्य तौ सदा ।

१ रविरोचनः ।

निर्व०– पुनश्चायं धातुरावर्त्यः अन्यग्रहणक्रियश्चेहायम्.
क्विप्. आगुणः. कुत्वम् गः. वा चर्त्वम् संहितायाम्.
(२) "झलां जशः" ८।२।३९॥ कौ०पृ०१४
इति जश्त्वम्. गुहोतेः के हुन उक्तः. आपित्.
(३) "अश. गत्यादिषु" गतः धा०।वादिः कौ०पृ०४०१
(४) "हसिमृग्रिण्वामिदमि०" उणा०पा०३ कौ०पृ०६२८
इत्यादिना तन्.
(५) "तितुत्र०" इति इट्, ७।२।९॥ कौ०पृ०६०८
इण्निषेधे अनुस्वारादौ च अन्तशब्दोऽप्यवादि. नञ्पूर्वो बहुव्रीहिः
नलोपः. नुट्. ततो बहुव्रीहिरुत्तरपदः पूर्वबहुव्रीहिः अच्.
(६) "नद्यृतश्च" ५।४।१५३॥ कौ०पृ०१६१
इति न कप्. समासान्तो विधिरनित्यः तद्योगे च
(७) "अनर्थावव्ययसालुक्वे" ६।२।११६॥ कौ०पृ०७७१
इत्यन्तोदात्तार्थोऽयमाकिप् गणपाठः.
(८) "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ" ६।२।१९७॥ कौ०पृ०७७२
इति पूर्वोऽन्तोदात्तान्तस्य निर्दिष्टस्य पाक्षिकान्त-
स्वरविधानं च इत्यादि. तत्र हि पूर्वत्र निर्दिष्टम्.
(९) "गणाद्दस्यम्भिध्यच्" ५।४।९१॥ कौ०पृ०१५२
इति गगनशब्दात् टचि,
(१०) "चितः" ६।१।१६३॥ कौ०पृ०७३३
इत्येव न स्वरसिद्धः. ततः तदभावेऽपि स्वरार्थं तद्ग्रहणमिति
वक्तव्यम्. तथा च तस्यानित्यत्वमिति उत्तरत्रापि.
(११) "द्वित्रिभ्यां षमूर्धः" ५।४।११५॥ कौ०पृ०१६६

{८९० / ९६१} सुखदो,

---

ॐ सुखदाय नमः ।

---

भा० – अमानवमुखेन स्पृष्ट्वा सवासनं संसारमुत्सार्य स्वाप्ति-सुखं ददातीति–
( सुखदः ).
( १ ) "ततुरूपोऽमानवस्स एतान् ब्रह्म गमयति" छा०५–१०–२। इति. ※

---

निर्व०–इति समासान्तमकृत्वैव तस्य तत्स्वरविधानात् तस्याप्यनित्यत्वमिति ज्ञापकं चेदं सामान्यापेक्षम् अत उक्ता युक्तिमती वाचो युक्तिः अनङ्वाहि, अनन्तो हुतभुक्शोक्तेति व्यस्तपाठे तु हुतभुक्शोक्ता इति कर्मधारयः सविशेषणत्वेके नाम नच न क्विपः प्रसक्तिरिति "स्त्र्यां" दि. अन्यत् प्राग्वत्. संहिताकार्यम्. पूर्व एव तु, मुख्यः पाठः. ※
एवं द्वादशापि सन्नियोज्याः, आतिवाहिका उक्ताः.
एतानमानवमुखेन स्पृष्ट्वा सवासनं संसारमुत्सार्य
अमीषां सुखं स्वप्राप्तिसुखं ददातीति–
( सुखदः ). ददातेः,
(१) "आतोनुपसर्गे०" इति कः. आल्लोपः ३।२।३।कौ०पृ०५७०
( २ ) "खनु, अवदारणे" सुपूर्वः धा०भ्वादिः कौ०पृ०४२१
(३) "अन्येष्व०" इति डः टिलोपः. ※ ३।२।१०१।।कौ०पृ०५८५

---

निरु०–८९० अमानवकरस्पर्शाद्भवमुत्सार्य सत्वरम् ।। ६९९।।
स्वप्राप्तिलक्षणसुखं ददाति ( सुखद ) श्च सः ।

(८९१) नैकदो,

ॐ नैकदाय नमः ।

शा०—एकं ददातीति एकदाः तद्विरुद्धा नैकदाः असंख्येयमालाञ्जनवासःप्रभृतिवस्त्रालंकारदायिन्यो मुक्ताभ्युत्थानविदो दिव्याप्सरसोऽस्येति—
(नैकदः).
(१) " तं पञ्च शतान्यप्सरसां उपधावन्ति शतं मालाहस्ताः शतमञ्जनहस्ताः " इत्यादि. कौ० १—४ ।
कौषीतकिनस्समामनन्ति.
(२) "तं ब्रह्मालंकारेणालंकुर्वन्ति" इत्यादि. च ॐ कौ० १—४।

निरु०—तथा तेषां नैकान्यनेकानि मालाञ्जनवासःप्रभृतीनि ब्रह्मालंकरणानि ददातीति नैकदाः वासोलंकरणहस्ताः तथा नैका बह्व्यो जायन्ते प्रादुर्भवन्तीति नैकजाः वा मुक्ताभ्युत्थानकोविदाः पञ्चशतसंख्याकाः दिव्याप्सरसः ताः अस्य सन्ति इति—
(नैकदः).
नैकजा वा—एकत्र प्राग्वद्दातेः कः, आल्लोपः. अन्यत्र,
(१) " जनी, प्रादुर्भावे " धा० दिवा० कौ० पृ० ४५४
(२) " अन्येष्वपि० " ३ । २ । १०१ ॥ कौ० पृ० ५८५
इति डः. टिलोपः. इणः कनि एक उक्तः. नञो नशब्दस्य वा समासः. नञो नलोपाभावोपि. इति चोपपादितम्. वृद्धिः.

निरु०—८९१ ब्रह्मालंकारदायिन्यो मुक्तेभ्यश्च परे पदे ॥ ७०० ॥
दिव्याश्चाप्सरसो यस्य (नैकद) स्स च कथ्यते ।

(८९२) ऽग्रजः,।

ॐ अग्रजाय नमः।

भा०—एवं प्राप्तानां मुक्तानामग्रे सह सर्वैश्वर्यश्रिया यथापर्यङ्कविद्यं परमभोग्या जायत इति—

(अग्रजः).

(१) "स आगच्छत्यमितौजसं पर्यङ्कम्" इतिप्रभृति. कौ० १–५।

(२) "उपश्रीरुपबर्हणं तस्मिन् ब्रह्मास्ते तमित्थंवित्पादेनैवाग्र आरोहति तं ब्रह्माह कोऽसीति" कौ० १–५। इतिप्रभृति च.

(३) "सा या ब्रह्मणि चितिर्या व्यष्टिः तां चितिं जयति तां व्यष्टिं व्यश्नुते" इति. इत्येवमन्ता हि पर्यङ्कविद्या. ❋ कौ० १–६।

निरु०—अनुकूलेनष्टाबादौ स्त्रियाः पुंवच्च. ततः स्त्रियामतष्टाप् दीर्घ इत्यादि. ततो नैकदाशब्दान्नैकजाशब्दाच्च मत्वर्थीयोऽर्श आद्यच्.

(३) "यस्य०" इत्यालोपः. ❋ ६।४।१४८॥कौ०पृ०५६

एवं प्राप्तानां मुक्तानामग्रे सह सर्वैश्वर्यश्रिया यथापर्यङ्कविद्यं परमभोग्यो जायते प्रादुर्भवति इति—

(अग्रजः).

(१) " जनी, प्रादुर्भावे " धा०दिवा०कौ०पृ०४५४

(२) "सप्तम्यां जनेर्डः" ३।२।९७॥ कौ०पृ०५८५

इति डः. टिलोपः. अङ्गेर्गत्यर्थात्

निरु०—८९२ स्वस्याग्रे प्राप्तमुक्तानां सर्वैश्वर्यश्रिया सह ॥ ७०१ ॥
यथापर्यङ्कविद्यं च करुणाविष्टचेतसा।
तद्भोग्यो जायते यश्च सो (ऽग्रजः) परिकीर्तितः ॥ ७०२ ॥

१ सर्वैश्वर्या।

{८९३} {४३७} अनिर्विण्णः,

ॐ अनिर्विण्णाय नमः।

ना०—एवमाश्रितं महता प्रणिधानेन संसारगर्तादुत्तार्य आत्मानं प्राप्य च तमशोच्यं पश्यन्—
(अनिर्विण्णः).
(१) "कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह" रा०सुं०८७।
इतिवत्. ❊

निर्व०—(३) "ऋज्रेन्द्राग्र०" उणा०पा०२कौ०पृ०६२० इत्यादिना रकि इदित्त्वान्नुमो निपातनाल्लोपे
(४) "नेट्० " ७।२।८॥ कौ० पृ० ५८१
इतीट्प्रतिषेधे च अग्रशब्द उक्तः. ❊
एवमाश्रितं महता प्रणिधानेन संसारगर्तादुत्तार्य आत्मानं प्राप्य च तमशोच्यं पश्यन् कृतकृत्यतया निर्विण्णो निर्वेदवान्नेति—
(अनिर्विण्णः).
(१) "विद, सत्तायाम्" दिवादिः. धा०दिवा०कौ०पृ०४५६
(२) "विद, विचारणे" वा.धा०रुधा०कौ०पृ०४७१
रुधादिः. निर्पूर्वः. निसस्तु सोरुत्त्वम्. ततः कर्तरि क्तः. अनिट्. अगुणः.
(३) "रदाभ्यां निष्ठातः०" ८।२।४२॥ कौ०पृ०५८६ इत्यादिना निष्ठातस्य नः. पूर्वस्य च दस्य नः.

निरु०—८९३ महता प्रणिधानेन ह्युत्तार्य भवगर्ततः।
प्राप्य च तमात्मानं कृतकृत्यश्च विज्वरः॥ ७०३॥
पश्यन्नशोच्यमेनं यो (ह्यनिर्विण्णः) स ईरितः।

(८९४) सदामर्षी,

ॐ सदामर्षिणे नमः ।

भा०—ततः प्रभृति सर्वकालं तेन कृतप्रतिकृतं मर्षितुं निर्वोढुं शीलमस्येति—
(सदामर्षी).
(१) " सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता "
इत्यादि. ॐ तै० २–१ ।
(२) " अनुत्तमेषूत्तमेषु लोकेषु " छा० ३–२ ।

निर्व०—(४) " कृत्यचः " ८।४।२९ ॥कौ०पृ०५५६
इत्यचः परत्वाभावान् णत्वाभावो,
(५) " निर्विण्णस्योपसंख्यानम् " ८।४।२९॥कौ०पृ०५५६
इति परस्य णत्वम् पूर्वस्य ष्टुत्वेन णः. नञ्समासः.
नलोपः. ॐ
ततःप्रभृति सर्वदा सर्वकालं मर्षितुं सोढुं तेन सह कृतप्रतिकृतं निर्वोढुं शीलमस्य इति—
(सदामर्षी).
(१) " मृष तितिक्षायाम् " धा०दिवा०कौ०पृ०४५५
अर्थादत्र निर्वहणक्रियोऽयम्.
(२) " सुप्यजातौ० " ३।२।७८ ॥ कौ०पृ०५८२
इत्यादिना ताच्छील्ये णिनिः. गुणो रपरः. तदन्तपाठे तु ताच्छील्यवर्जमुक्त एवार्थः. कापवादः. कर्तरि पचाद्यच्. अन्यत् प्राग्वत्. निष्पादितात् सर्वशब्दात्.

निरु०—८९४ सर्वकालं तत्प्रभृति कृतप्रतिकृतं च सः ॥ ७०४ ॥
मर्षितुं शीलमस्येति (सदामर्षी) ति कीर्तितः ।

(८९५) लोकाधिष्ठानम्,

---

ॐ लोकाधिष्ठानाय नमः।

---

गा०— इति श्रुतानां मुक्तभोग्यानां नित्याश्रयः—
(लोकाधिष्ठानम्). ❀
तत्र च—

---

नि०—(३) "सर्वैकान्य०" ५।३।१५॥ कौ०पृ०३३६
इत्यादिना दाप्रत्यये,
(४) "सर्वस्य सः०" ५।३।६॥कौ०पृ०३३४
इति सादेशे च सदाशब्द उक्तः. इत्यन्तर्दीर्घादि. ❀
मुक्तभोग्यानामत्युत्तमानां श्रुतानाम् लोकानाम् अधि—
ष्ठानं नित्याश्रयः इति—
(लोकाधिष्ठानम्).
(१) "ष्ठा. गतिनिवृत्तौ" धा०भ्वादिः कौ०पृ०४२४
अधिपूर्वः. परगः. तोष्टुः. अधिकरणे ल्युट्. अनः दीर्घः.
(२) "आदेशप्रत्यययोः" इत्यस्य ८।३।५९॥कौ०पृ०३४
(३) "नात्०" इति निषेधे प्राप्ते ८।३।१११॥कौ०पृ०३५८
(४) "उपसर्गात् सुनोति०" ८।३।६५॥कौ०पृ०३८४
इत्यादिना षः. ष्टुत्वम्. लोक उक्तः. दीर्घः.
(५) "लिङ्गमशिष्यम्" इत्यादि. ❀ ॥ महाभाष्यम् ॥
तत्र च सदा सर्वस्सर्वथानुभवेपि अद्भुतः अतिविस्मय-
नीयो भवति इति—

---

## ( ८९६ ) अद्भुतः,॥ श्लो० ॥ ९६ ॥ ( ८९७ ) सनात्,

ॐ अद्भुताय नमः ॐ सनाते नमः ।

भा०—( अद्भुतः ).
( १ ) " अदिभुवो डुतच् " उणा० पा० ५ कौ० पृ० ६४२
सर्वदा सर्वैः सर्वथाऽनुभवेप्यपूर्ववदतिविस्मयनीयः. ❀
तेषां संभजनात्—
( सनात् ).
सनत्सनादिति गणे निपातितः.

निर्व०—( अद्भुतः ).
( १ ) " भू, सत्तायाम् " धा० भ्वादिः कौ० पृ० ३६८
अतपूर्वः.
( २ ) " अदिभुवो डुतच् " उणा० पा० ५ कौ० पृ० ६४२
इति विस्मयार्थे स्वरादेराकृतिगणत्वात् अव्यये दान्ते उपपदे डुतच्. टिलोपः. क्लीवपाठेपि प्राग्वदेव.
( ३ ) " लिङ्गमशिष्यम् " इत्यादि. ❀ कौ० ३२९—१ द्भा० ।
तन्नित्यसंभजनभागयमखण्डनिर्देशेन सनादिति वा सनम् उक्तसंभजनम्. अनति गच्छतीति वा, तमयते प्राप्नोति इति वा—
( सनात् ).
( १ ) " वन- षण, संभक्तौ " धा० भ्वादिः कौ० पृ० ४०१
परस्मैः. आद्ये स्वरादौ सनादिति पाठादव्ययत्वम्.

निरु०—८९६ तत्सदा सर्वथा सर्वैर्भुज्यमानोप्यपूर्ववत् ।
स्मयनीयो ( ऽद्भुतः )—
८९७ प्रोक्तस्तेषां संभजनात् ( सनात् ) ॥ ७०६ ॥

---

१ अद्भुतम् ।

(८९९) कपिलः,

ॐ कपिलाय नमः।

ना०–(कपिलः). ❀

निर्व०—ऽ भावः. पुरा पूर्वानुवर्तेः ङ्श्च वा निपात्यते. आद्ये, निपातनात् आकारस्य नलोपः. पक्षद्वयेपि यथासंख्यम्.

(२) "अट्कुप्वाङ्०" ८।४।२।। कौ०पृ०३२ इति वा संज्ञात्वात् निपातनाद्वा णत्वम्. "अबाधकान्यपि निपातनानि भवन्ति" इति पुरातनशब्दस्यापि संभव इत्यलम्. सनेत्यव्ययादुक्तार्थकात्.

(३) "सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च" इति ट्युट्युलौ शैषिकौ तयोस्तुट् च.४।३।२३।। कौ०पृ०२७६ अनः नच कृते तुटश्चयमादेशः. येन टिदाद्यवयवः इति तस्यापि युग्रहणेन ग्रहणात्

(४) "युवोः०" ७।१।१।।कौ०पृ०२३३ इत्यनादेशेन तकारोप्यपहियेत. यद्वा अनुनासिकस्य योरनादेशविधानेन मृत्युरित्यादावपि स एव वा न स्यात् परंतु तुटः प्रागेव चायमादेशः.

(५) "घकालतनेषु कालनाम्नः" ६।३।१७।। कौ०पृ० १८८ इत्यादिनिर्देशात् तन आतिशायनिकस्तमप्. ❀

स किंरूपः तत्रोच्यते मध्यस्थनीलतोयदविद्युल्लेखोज्ज्वलवर्णतया कपिलः पिङ्गल इति–

(कपिलः).

निरु०—८९९ विद्युन्मण्डलमध्यस्थनीलमेघवदुज्ज्वलः ।। ७०७ ।।

(कपिलः) स समाख्यातः सत्रवर्णो महामनुः।

(९००) कपिरव्ययः ।

ॐ कपये अव्ययाय नमः ।

ना०—स्वयमपि तदनुभवसुखनिर्वृतिं पाति पिबति वा—(कपिरव्ययः). ❀

(१) "इन् सर्वधातुभ्यः" आतो लोपः. उणा०पा०४कौ०पृ०६३७

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः-
श्रीरङ्गराजदिव्याज्ञालब्ध-श्रीपराशरभट्टापरनामधेयस्य
श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुनामसहस्रविवरणे
भगवद्गुणदर्पणे
नवमं शतकं समाप्तम् ।

नि०—(१) "कबृ, काम्नौ" धा०भ्वादिः कौ०पृ०३११
(२) "कबृ. वर्णे" वा. धा०भ्वादिः कौ०पृ०३१६
अनुभवरूपे.
(३) "कबेः पश्च" उणा०पा०१कौ०पृ०६१३
(४) "कपेः" इति वा पाठः.
इति कबृ, सस्य पाठान्तरे बस्य च वा पकारः. ❀
स्वयमव्ययः.अव्ययो वानुपक्षीणः. कपृ इहा-यं सुखार्थः.तदनुभवसुखनिर्वृतिं पिबति पाति रक्षतीति इति वा--(कपिरव्ययः).
अव्ययो वा सविशेषणमेकन्नाम.
(१) "पा, पाने" धा०भ्वादिः कौ०पृ०४२४
(२) "पा. रक्षणे" च धा०अदा० कौ०पृ०४४३
(३) "इन् सर्वधातुभ्यः" इति इन्. उणा० पा०४कौ०पृ०६३७

नि०—९०० अनश्वरसुखं पाति स उक्तः (कपिरव्ययः) ॥७०८॥

निर्व०–(४) "अच इः" वा. पूर्वत्र बाहुलकात्, उणा०पा०४ कौ०पृ०६३८

(५) "इगुपधात् कित्" इति. उणा०पा०४कौ०पृ०६३७

इनः कित्त्वमन्यतोपि भवति अपरत्र अकृतस्त्यमपि इनप्रत्ययस्य कित्त्वं बाहुलकात्कल्प्यते तस्य हि महान् प्रभावः. इयांस्तु विशेषः. इनः कित्त्वं श्रुतं क्वचिदन्यतोपि एतु अश्रुतमेव कुत्रचित् कल्प्यते इति ऐदमर्थ्येन हि अच इरित्येव वक्तव्ये इनोपि ग्रहणम् कित्त्वादातो लोपः.

(६) "कै, शब्दे" धा०भ्वादिः कौ०पृ०४२४

(७) "कु, शब्दे" धा०तुदादिः कौ०पृ०४६८

(८) "कनी, दीप्तिकान्तिगतिषु" वा. धा०भ्वादिः कौ०पृ०४०१ कायतेरात्वम्. त्रिष्वपि

(९) "अन्येष्वपि०" इति डः. टिलोपः. ३।२।१०१॥कौ०पृ०५८५

(१०) "इण्. गतौ" धा०अदा०कौ०पृ०४४१

(११) "एरच्" ३।३।५६॥ कौ०पृ०६५३

इति भावे अच्. गुणः. अय्. विपूर्वः. पाठान्तरे तु, अयमेवापिपूर्वः. तत्र

(१२) "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" कौ०पृ०८८

इति भागुरीष्टयाऽपेरल्लोपः. शेषं प्राग्वत्. उभयत्रापि यण् वकारः. नञ्पूर्वो बहुव्रीहिः. नञो नलोपः. संहितायां पूर्वस्य रोरावसानिको विसर्गः.

इति कुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज-
वरददेशिकतनयवरदगुरुवरसूनु-वरदाचार्यसूरिविरचिते

श्रीपराशरभट्टार्यभाषित-
श्रीमद्विष्णुसहस्रनामभाष्यानुगे भगवन्नामसहस्रनिर्वचने
नवमं शतकं समाप्तम्।

# अथ दशमशतकम् ।

(९०१) स्वस्तिदः,

ॐ स्वस्तिदाय नमः ।

भा०— एवं महत् मङ्गलं ददातीति—

(स्वस्तिदः). ॐ

स्वगुणैः स्वभोगाशिषं करोतीति-

विव०— एवं स्वस्ति महत् मङ्गलं ददाति इति—

(स्वस्तिदः).

(१) "डुदाञ्, दाने" धा०जुहो०कौ०पृ०४५१

(२) "आतोनुपसर्गे०" इति कः. आलोपः. ३।२।३॥कौ०पृ०५७०

(३) "अस, भुवि" पूर्वः. धा०अदा०कौ०पृ०४४४

(४) "वसेस्तिः" उणा०पा०४ कौ०पृ०६४०

इति वर्तमाने "सावसेः शित" उणा०पा०४कौ०पृ०६४०

इति सावुपपदे असेस्तिः शित. शित्त्वात्

(५) "तिङ्शित्०" ३।४।११३॥कौ०पृ०३६८

इति सार्वधातुकत्वेन आर्धधातुकविषयोऽस्तेर्भूभावो न अनार्धधातुकत्वात् नेट्. बाहुलकात् श्नसोरल्लोपः. शिदित्यपाठेपि बाहुलकात्तदभावः. इह,

(६) "तितुत्र०" इति नेट्. ७।२।९॥ कौ०पृ०६०८

(७) "इको यणचि" इति यण् वः. ६।१।७७॥कौ०पृ०८

स्वरादिपाठादव्ययत्वम्. सति प्रयोगेऽनन्यथा सिद्धेऽनव्ययमपि एवमुत्तरत्रापि. ॐ

स्वगुणैः स्वस्ति स्वभोगाशिषं करोतीति—

निरु०—९०१ भक्तायो मङ्गलं स्वस्ति तद्दानात्(स्वस्तिदः)स्मृतः।

१ जग।

(१०२)स्वस्तिकृत्,(१०३)स्वस्ति,(१०४)स्वस्तिभुक्.

ॐ स्वस्तिकृते नमः।ॐ स्वस्तिने नमः।ॐ स्वस्तिभुजे नमः।

भा०—(स्वस्तिकृत्). ※
स्वयमेव महन्मङ्गलम्—
(स्वस्ति).
(१) "स्वस्ति शिवाशिषोः" उदा०।
(२) "सावसेशिल्" उणा०पा०४ को०पृ०६४०
इति तिप्रत्ययः. शित्वात् गुणाभावः. ※
सर्वमेतत् स्वस्ति भुनक्ति पालयतीति—
(स्वस्तिभुक्).

निर्व०—(स्वस्तिकृत्).
(१) "डुकृञ् करणे" धा० तना०को०पृ०४७३
कृञः क्विप् तुगित्यादि. ※
स्वयमेव स्वस्ति महत् मङ्गलमिति—
(स्वस्ति).
अव्ययात् सुपो लुक्. अनव्ययात्तु लिङ्गमशिष्यमित्यादि. ※
स्वस्ति भुनक्ति सदा पालयतीति—
(स्वस्तिभुक्).
(१) "भुज पालनाभ्यवहारयोः" धा० रुधा०को०पृ०४७१
पालनक्रिय इहायम्. क्विप्. अगुणः. चोः कुः. चर्त्वम्. ※

निरु०—१०२ स्वस्ति स्वयोगाशिषं यः करोति (स्वस्तिकृत्) च सः॥ ७०९॥
१०३ महामङ्गलरूपत्वात् स्वयं (स्वस्ती)ति कथ्यते।
१०४ पालनान्मङ्गलस्यैव (स्वस्तिभुक्) चेति गम्यते॥ ७१०॥

(९०७) कुण्डली,

ॐ कुण्डलिने नमः ।

ना०—यथोचितनित्यदिव्यभूषणः—
(कुण्डली).

निर्व०—लुका लुप्ते प्रत्ययलक्षणाभावान्न गुणः एतदर्थो हि
(४) "णेरनिटि" ६।४।५१ ॥ कौ०पृ०३९९
इत्येव सिद्धे लोपे लुक आरम्भः. यदि त्वत्रापि लोप इत्येव पाठः तदा तेनैव उक्तेन सिद्धे लोपे प्रत्ययलक्षणबाधनार्थः. पुनरारम्भः. ततश्च न लघूपधगुणः. इत्यवधेयम् प्रागपि इदमवोचाम. ततः रुद्रशब्दात् रौद्ररसस्य तद्दैवत्यतया
(५) "सास्य देवता" इत्यण् आदिवृद्धिः.४।२।२४॥कौ०पृ०२३०
(६) "यस्य०" ६।४।१४८॥कौ०पृ०५६
इति लोपः. ततो मत्वर्थीयोऽर्श आद्यच्. प्राग्वदेव.
(७) "यस्य०" इति लोपः. ६।४।१४८ ॥कौ०पृ०५६
नञ्समासो नलोपः. ❋
यथोक्तनित्यदिव्यभूषणतया कुण्डलं तदुपलक्ष्यं दिव्यभूषणजातं नित्यमस्य इति—
(कुण्डली).
(१) "कुडि, दाहे" धा०भ्वादिः कौ०पृ०३९०
(२) "कुडि, रक्षणे" धा. चुरा०कौ०पृ०४८१
इदित्वान्नुम्.
(३) "कलस्तृपश्च" उणा०पा० १कौ०पृ०६१५
(४) "इति प्राक् प्रत्ययनिर्देशाच्चकारात् बाहुलकाच्च अन्यतोपि" इति कलप्रत्ययः.

निरु०—९०७दिव्यभूषणवान् योसौ(कुण्डली) ति प्रकथ्यते॥७१२॥

(१०८) चक्री.

ॐ चक्रिणे नमः ।

भा०—तादृशदिव्यायुधः—
(चक्री).

निर्व०—इदित्त्वान्नलोपः. अन्यत्र तु न तत्प्रसङ्गः. तत्रणेर्लोपः. तदनित्यतायां तु प्रागुक्तैव गतिः उभयत्र अनुस्वारपरसवर्णौ. ततः कुण्डलशब्दात् नित्ययोगे मत्वर्थे अत इनिः.
(५) "यस्य०" ६।४।१४८॥ कौ०पृ०५६
इति लोपः. इत्यन्तदीर्घ "इत्यादि. ※
तथा चक्रं तदुपलक्ष्यं तादृशदिव्यायुधजातं नित्यमस्य इति-(चक्री).
(१) "चक. तृप्तौ प्रतिघाते च" धा० भ्वादिः कौ०पृ०३८८
स्तम्भकरणं.
(२) "चकिरम्योरुच्चोपधायाः" उणा०पा०२कौ०पृ०६२०
इति रक्. बाहुलकादिह नोत्त्वम्.
(३) "नेड्०" इति नेट्. यद्वा. ७।२।८॥कौ०पृ०५८१
(४) "कृञः कः" इत्यनुवृत्तौ
(५) "करोतेर्द्वे च"
इति कः. द्वित्वं च बाहुलकादभ्याससंज्ञा उरदत्त्वादि.
अगुणः. यण् रः. तत एव बाहुलकात्
(६) "चिचेः कोऽन्यत्रापि द्वित्वं च" उणा०पा०५कौ०पृ०६४४
इत्यादि प्रागपि इदं विशदमुदरिराम. ततश्चक्रशब्दात् प्राग्वत् अत इनिः.
(७)"यस्य०"इति लोपः.दीर्घादि. ※ ६।४।१४८॥कौ०पृ०५६

निरु०—१०८ नित्यदिव्यायुध (चक्री)—

(१०९) विक्रमी, (११०) ऊर्जितशासनः, ।

ॐ विक्रमिणे नमः । ॐ ऊर्जितशासनाय नमः ।

भा०— गाम्भीर्यानुकूलविलासः—
(विक्रमी). ❀
विरिञ्चिपुरन्दराद्यलङ्घ्याज्ञः—
(ऊर्जितशासनः). ❀

निर्व०— तथा विक्रमो गाम्भीर्यानुरूपो विलासोऽस्य इति— (विक्रमी).

(१) "क्रमु, पादविक्षेपे" विपूर्वः. भावे घञ्. धा०भ्वादिः कौ०पृ०४०१

(२) "नोदात्त०" ७।३।३४॥ कौ०पृ०५४१

इत्यादिना वृद्धिः. ततः.

(३) "संज्ञायां मन्माभ्याम्" इति. ५।२।१३६॥कौ०पृ०३३३ ठनो बाधनार्थं नियमितो मत्वर्थीय उक्तार्थ इनिः. लोपदीर्घादि. ❀

तथा विरिञ्च्याद्यलङ्घ्यतया ऊर्जितं बलवच्छासनमाज्ञास्य इति— (ऊर्जितशासनः).

(१) "शासु, अनुशिष्टौ" भावे ल्युट्. अनः. धा०अदा०कौ०पृ०४४७

(२) "ऊर्ज, बलप्राणनयोः" धा०चुरा०कौ०पृ०४८०

चुरादिः. ततो णिचि. तथा बहुलमेतन्निदर्शनमिति अनित्यण्यन्ता हि चुरादयः, ततस्तदभावे च अकर्मकात् कर्तरि क्तः. इट् आद्ये.

(३) "निष्ठायां सेटि" ६।४।५२॥ कौ०पृ०५९२

निरु०—१०९स्याद्विलासी तु (विक्रमी)।
११०ब्रह्माद्यलङ्घ्यस्वाज्ञो यः स स्या (दूर्जितशासनः) ॥ ७१३॥

१ रूप

(९११) शब्दातिगः,

ॐ शब्दातिगाय नमः ।

भा०—अनन्तजिह्वेनानन्तेन अनन्तशाखैराम्नायैस्साक्षात् सरस्वत्या च दुरुदाहरमहिमा— (शब्दातिगः). ॐ

निर्व०—इति णिलोपः. अन्यत्र तु निष्ठायां न कोऽपि विशेषः.
तत्र ऊर्जा संजाता अस्येति विग्रहे तु ततः.
(४) "गुरोश्च हलः" ३।३।१०३॥ कौ०पृ०६६०
इति स्त्रियामकारप्रत्यये,
टाबादौ च सिद्धादूर्जाशब्दात् संजातोपाधिकात्
(५) "तदस्य संजातम्०" ५।२।३६॥ कौ०पृ०३१८
इत्यादिना तारकादिराकृतिगणत्वात् इतच्.
(६) "यस्य०" ६।४।१४८॥ कौ०पृ०५६
इत्यालोपः. एतच्च प्रागेव प्रव्यञ्जितम् बहुव्रीहिः. ॐ
अनन्तजिह्वेनानन्तेन अनन्तशाखैराम्नायैः साक्षात् सरस्वत्या च दुरुदाहरणमहिमतया शब्दं वाचम् अतिगच्छति अतिक्रामति इति—
(शब्दातिगः).
(१) "गमॢ. गतौ" धा०भ्वादिः कौ०पृ०४३०
अतिपूर्वः. गमेर्डप्रकरणे,
(२) "अन्यत्रापि दृश्यत इति वक्तव्यम्" ३।२।१०१॥ कौ०पृ०५८५
इति डः. टिलोपः.
(३) "शप. आक्रोशे" भ्वादिः दिवादिश्च. धा०भ्वादिः कौ०पृ०४३२

निरु०—९११ अनन्तशाखैराम्नायैर्वाग्देव्यानन्तभोगिना ।
यन्नु दुराख्यमहिमा यस्य (शब्दातिगो) स्ति सः ॥ ७१४॥

## (९१२) शब्दसहः, (९१३) शिशिरः,

ॐ शब्दसहाय नमः। ॐ शिशिराय नमः।

भा०— अथ गजेन्द्रमोक्षणम् अस्पष्टशब्दानां तिरश्चामपि आर्तशब्दम् अतिभारमिव सहते इति--
(शब्दसहः).
(१) "यस्किं तस्यानुचिन्त्येति" ॐ
आर्तशब्दश्रवणानन्तरम् अतित्वरया गतः—
(शिशिरः).

निर्व०—(४) "शशतिभ्यां ददतौ" उणा०पा०४ कौ०पृ०६३६ इति दन्. अनिट्.
(५) "झलां जश् झशि" ८।४।५३।।कौ०पृ०९ इति जश्त्वम्. पस्य बः. दीर्घः ॐ
अथ प्रासङ्गिकनिदर्शनं गजेन्द्रमोक्षणं प्रस्तूयते.
अस्पष्टशब्दानां तिरश्चामपि शब्दमार्तनादं सहते भारमिव वहति इति—
(शब्दसहः).
(१) "षह मर्षणे" धा० भ्वादिः कौ०पृ०४१९
षस्सः. पचाद्यच्. शब्द उक्तः. ॐ
आर्तशब्दश्रवणसमनन्तरमतित्वरया तत्र गमनात्,
शशाति प्लुवते इति—
(शिशिरः).

निरु०—९१२ अतिभारमिवास्पष्टं तिरश्चां शब्दमार्तिजम्।
सहते यः (शब्दसहो) वस्वर्णो मनुरुत्तमः॥ ७१५॥
९१३ गजेन्द्रपालनार्थं यः (शिशिर) स्त्वरया गतः।

(९१४) शर्वरीकरः, ॥

ॐ शर्वरीकराय नमः ।

मा०—(१) "शश, प्लुतगतौ" धा०भ्वादिः कौ०पृ०४१०
(२) "अजिरशिशिर०" इत्यादिना रक्प्रत्ययान्तो निपातितः.
उणा०पा० १ कौ०पृ०६१२
(३) "श्रुत्वा चक्रगदाधरः । सान्निध्यं कल्पयामास तस्मिन् मार्गे" इति. ॐ
(शर्वरीकरः).
(१) "शृणातेः कृगॄशॄवृञ्चतिभ्यः ष्वरच्" उणा०पा० २ १०
कौ०पृ०६२४
ष्वरच्. षित्त्वात् ङीष्. शर्वरी हिंस्रापरविदारिणी
पश्चायुधी तदाकरे अस्येति— ॐ

निरु०—(१) "शश, प्लुतगतौ" धा०भ्वादिः कौ०पृ०४१०
किरच्प्रकरणे,
(२) "अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः" उणा०
पा०१ कौ०पृ०६१२
इति किरच्. धातोरुपधाया इत्वं च निपात्यते. कित्त्वान्न गुणः. ॐ
तथा शर्वरी हिंस्रापरविदारिणी पश्चायुधी करे अस्येति—
(शर्वरीकरः). कृञः पचाद्यच्.
(१) "कॄ, विक्षेपे" वा, धा०तुदा०कौ०पृ०४६८
(२) "अकर्तरि च०" इत्यनुवृत्तौ ३।३।१९॥कौ०पृ०६४७
(३) "ऋदोरप्" इति अप्. ३।३।५७॥ कौ०पृ० ६५३
उभयथापि गुणो रपरः. नच कित्त्वेः,

निरु०—९१४ उत्पन्ने शर्वरीशब्दाद्धिंस्रापरविदारिणी ॥७१६॥
पश्चायुधी करे चास्यत्युदितः (शर्वरीकरः) ।

१ वरद इति पाठे हिंस्रातः ईत् ।

श्लो० ॥ ९८ ॥ ( ९१५ ) अक्रूरः,

ॐ अक्रूराय नमः।

ना०—गजपरिजिहीर्षया करस्थैरप्यायुधैर्ग्राहमपि अहिंस्य- कृतवान्—

( अक्रूरः ).

निर्व०—( ४ ) " कृत इद्धातोः " ७।१।१००॥ कौ० पृ० ४२७

इत्यत्त्वं शङ्कायम् इत्योत्वाभ्यां हि गुणवृद्धी विप्रतिषेधेन भवतः

( ५ ) " कृ. हिंसायाम् " धा० क्र्यादिः कौ० पृ० ४७६

( ६ ) " कृगृशृवृचतिभ्यः ष्वरच् " उणा० पा० ३ कौ० पृ० ६८

इति ष्वरच्.

( ७ ) " षः प्रत्ययस्य " इति ष इत्. गुणो रपरः १। ३। ६॥ कौ० पृ० ९३

(८) " नेट्० " इति नेट्. स्त्रियां षित्वात् ७।२।८॥ कौ० पृ० ७८

( ९ ) " षिद्गौरादिभ्यश्च " ४।१।४१ ॥ कौ० पृ० ९८

इति षिल्लक्षणो ङीष्. वरच्. इति पाठे,

( १० ) " टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः " ४।१।१५॥ कौ० पृ० ९३

इति टित्वात् ङीप्. स्वर भेदः. गते,

(११) "यस्येति च " इति अकारलोपः. ६।४।१४८॥ कौ० पृ० ७३

पञ्चायुधी प्राधान्यविवक्षया चायं स्त्रिया निर्देशः. ॐ

वचनात् प्रथमं जलाशयात् केवलं ग्राहमुद्धरता च अनेन गजपरिजिहीर्षया करस्थैरप्यायुधैः हातिति तदकर्तनात् कृन्ततीति क्रूरः स नेति—

( अक्रूरः )

---

निरु०—९१५योऽसौ धृतायुधैर्ग्राहं ( मक्रूरो ) मङ्क्ष्व कृतवान् ॥ ७१७ ॥

{ ९१७ / ४२४ } दक्षः, (९१८) दक्षिणः,

---

ॐ दक्षाय नमः । ॐ दक्षिणाय नमः ।

---

भा०—क्षिप्रमागन्ता—
( दक्षः ). ❋
तथाऽऽगत्य धिङ् मां दूरगतोऽहं त्वामिति सान्त्वनैर्गजेन्द्रस्यानुकूलः—
( दक्षिणः ).
( १ ) " दक्ष, वृद्धौ " धा०भ्वादिः कौ० पृ०४०६
( २ ) " द्रुदक्षिभ्याम् ० " उणा०पा०२ कौ०पृ०६२१
इतीनन् यथा,

---

निर्व०—( ३ ) " दा, आदाने " धा०अदा० कौ०पृ०४४३
( ४ ) " आतोनुपसर्गे० " ३।२।३॥ कौ०पृ०५७०
इति कः, आल्लोपः, निशिरुक्तः, ततो भावे घञ्, गुणः, ❋
तदानीं तत्र आगमने दक्षते शीघ्रो भवतीति—
( दक्षः ).
( १ ) " दक्ष, वृद्धौ शीघ्रार्थे च " धा०भ्वादिः कौ०पृ०४०६
इहायं शीघ्रार्थः, पचाद्यच्, ❋
तथा तत्र चागत्य स्वदूरवासादिगर्हणमुखेन अतिसमर्थो गजेन्द्रं सान्त्वयन् तस्यानुकूलो दक्षते वर्धते इति—
( दक्षिणः ).

---

निरु०—९१७ ( दक्षो ) यो द्रुतमागन्ता रक्षणाय स उच्यते ।
९१८ गजेन्द्रस्य प्रपन्नस्य यः प्रीतो ( दक्षिण ) स्तु सः ॥ ७१९ ॥

(९१९) क्षमिणां वरः।

ॐ क्षमिणां वराय नमः।

भा०—(३) " प्रीतिमान् पुण्डरीकाक्षः शरणागतवत्सलः।
गजन्तं गजराजानं मधुरं मधुसूदनः "
इत्यादि. ॐ
तद्दर्शनेन धृतात्मा—
(क्षमिणां वरः),
(१) " अभवत्तत्र वै देवः " इति. ॐ

निर्व०—प्रागुक्तैव धातुः. इह वृद्ध्यर्थः.
(१) " हृदक्षिभ्यामितन् " उणा०पा०२कौ०पृ०६२१
इति इतन्. णत्वम्. एतच्च प्रागेव प्रव्यक्तम्. ॐ
तद्दर्शनेन धृतात्मनया क्षमिणां तितिक्षूणां वरः
श्रेष्ठः इति—
(क्षमिणां वरः).
(१) " वृञ्. वरणे " धा० स्वादिः कौ०पृ०४६२
(२) " ग्रहवृदृनिश्चिगमश्च " ३।३।५८॥कौ०पृ०६५३
इति अप्. गुणो रपरः.
(३) " क्षमू, सहने " दिवादिः. धा०दिवा०कौ०पृ०४५९
ततः " शमित्यष्टाभ्यो घिनुण् " ३।२।१४१॥कौ०पृ०६०२
इति शमादित्वात् घिनुण् ताच्छीलिकः.
(४) " नोदात्त० " ७।३।३४॥कौ०पृ०५४१
इत्यादिना न वृद्धिः. स्वादेस्तु पितः
(५) " पिद्भिदादिभ्योऽङ् " ३।३।१०४॥कौ०पृ०९८

निरु०—९१९ गजेन्द्रदर्शनेनात्तो धृतात्मा (क्षमिणां वरः)।

(९२०) विद्वत्तमो :

ॐ विद्वत्तमाय नमः।

भा०— तच्चिकित्सायाम्—

(विद्वत्तमः).

(१) " एवमुक्त्वा कुरुश्रेष्ठ गजेन्द्रं मधुसूदनः। स्पर्शयामास हस्तेन " इत्यादि. ❁

निर्व०—इति श्रियामङ्कि यावादौ च क्षमाशब्दात् व्रीह्यादिलक्षणो मत्वर्थीय इनिः.

(६) " यस्य० " ६।४।१४८॥ कौ० पृ० ७६

इति लोपे च क्षमिन्शब्दनिष्पत्तिरित्यन्येतत् स ह्याकृतिगणः. तत आम्. णत्वम्. अनुस्वारादिः नांहितः. ❁

स्वहस्तसंस्पर्शादिना तच्चिकित्सायाम् अयमतिशयेन विद्वान् ज्ञाता इति— विद्वत्तमः

(१) " विद, ज्ञाने " ततो वर्तमाने लट् धा० अदा० कौ० पृ० ४४३

(२) " लटः शतृशानचावप्रथमासमानाधिकरणे " ३।२।१२४॥ कौ० पृ० ५९९

इति लटः शता शित्वात् सार्वधातुकत्वे कर्तरि शप्. तस्य आदादिको लुक्. शतुश्च.

(३) " सार्वधातुकमपित् " १।२।४॥ कौ० पृ० ३७६

इति ङित्वान्न गुणः.

(४) " विदेश्शतुर्वसुः " ७।१।३६॥ कौ० पृ० ६००

इति शतुः, वसुरादेशः. पाक्षिकः

(५) " नेट्० " ७।२।८॥ कौ० पृ० ५८१

इति नेट्. आतिशायनिकस्तमप्.

(९२१) वीतभयः,

ॐ वीतभयाय नमः।

भा०— तत्समागमतुमुलोपलम्भात् वीतं भयं गजेन्द्रस्य इति—
(वीतभयः). ※
" श्रुतेन हि कुरुश्रेष्ठ स्मृतेन कथितेन वा। गजेन्द्रमोक्षणे-
नैव सद्यः पाशात् प्रमुच्यते " इति—

नि०—(६) "स्वादिषु०" १।४।१७॥कौ०पृ०३८
इति पदत्वे,
(७) "झलां जशः०" ८।२।३९॥ कौ०पृ०१४
इति जश्त्वम्. आन्तरतम्यात् सस्य दः. तस्य.
(८) "खरि च" ८।४।५५॥कौ०पृ०२०
इति चर्त्वम्. ※
तत्समागमतुमुलोपलम्भात् गजेन्द्रस्य निर्भयतया
वीतमपगतं भयमस्मात् इति—
(वीतभयः).
(१) "ञिभी, भये" अनुविधौ धा०जुहो०कौ०पृ०४४९
(२) "भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्"
इत्यच् गुणः. अय्, ३।३।५६॥ कौ०पृ०६५३
(३) "वी, गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" धा०अदा०
कौ०पृ०४४२
ततो गत्यर्थात् कर्तरि क्तः. अनिट्. अगुणः. ※
श्रवणात् पुण्ये पावने तथाकरणेन शुभकर्मणी, तान् शुभ-
कर्मणः कुर्वाणे वा, गजेन्द्रमोक्षणगोचरे श्रवणकीर्तने
श्रवणम् आकर्णनं च कीर्तनं कथनं चेति द्वन्द्वः ते अस्मात् इति—

नि०—९२१ वीतं भयं गजेन्द्रस्य यस्मात् (वीतभय) असः।

(९२२) पुण्यश्रवणकीर्तनः ॥

ॐ पुण्यश्रवणकीर्तनाय नमः ।

भा०–( पुण्यश्रवणकीर्तनः ). ❋

निर्व०–( पुण्यश्रवणकीर्तनः ).
(१) " कृत, संशब्दने " चुरादिः. धा०चुरा०कौ०पृ०४८३
णिच्. " उपधायाश्च " ७।१।१०१॥ कौ०पृ०४८३
इति कृत इत्त्वम्. रपरत्वम्.
(२) " उपधायां च " ८।२।७८॥ कौ०पृ०३८३
इति दीर्घः. ततो भावे ल्युट्. अनः. णिलोपः.
(३) " श्रु, श्रवणे " धा०भ्वादिः कौ०पृ०४२६
भावे ल्युट्. अनः. गुणः. अप् णत्वम्.
(४) " पूञ्, पवने " धा०क्र्यादिः कौ०पृ० ४७५
(५) " पुण, कर्मणि शुभे " वा आद्ये, धा०तुदा०कौ०पृ० ४६६
(६) " पूञो यण् णुट् ह्रस्वश्च " उणा०पा०५कौ०पृ०६४३
इति यत्. तस्य णुट्. धातोर्ह्रस्वश्च. ह्रस्वविधान-
सामर्थ्यान्न गुणः.
(७) " नेट्० " ७।२।८॥कौ०पृ०५८१
इति नेट्. यद्वा यण्णुक् धातोः कित्. ह्रस्वः प्राग्वत्.
तत्सामर्थ्यात् एव न लघूपधगुणः. अन्यथा हि ओदि-
त्येव विदध्यात्. यद्वा बाहुलकात् संज्ञापूर्वकस्य विधे-
रनित्यतया न गुणः. धातुभक्तत्वात् णुको नेटः प्राप्तिः द्वितीये,
(८) " अघ्न्यादयश्च " उणा०पा०४कौ०पृ०६३७

निरु०–९२२गजेन्द्रमोक्षणं श्रुत्वा सद्यः पापात् प्रमुच्यते ॥७२१॥
यस्मात् तत्कीर्तनं पुण्यं श्रवणं चेति स स्मृतः ।
द्वादशार्णो मनुश्रेष्ठः ( पुण्यश्रवणकीर्तनः ) ॥ ७२२ ॥

(९२५)पुण्यो, (९२६)दुःस्वप्ननाशनः, ।

ॐ पुण्याय नमः । ॐ दुःस्वप्ननाशनाय नमः ।

भा०—अनया कीर्त्या अस्मदादीनपि पुनातीति—
(पुण्यः). ❀

क एवम्—
(दुःस्वप्ननाशनः).
यथा,

(१) "ये मां त्वां च सरश्चैव" वि०ध०६९ ।

निर्व०—मत्वर्थीय इनिः.
(३) "यस्य०" ६।४।१४८॥कौ०पृ०५६
इति लोपः. ततो नलोपः. हृन्नन्तदीर्घ "इत्यादि. ❀

अनया कीर्त्या अस्मदादीनपि पुनाति स्वयमेतानेवं कारयित्वा शुभकर्मा भवति तान् पुण्ययति स्वपावितत्व-लक्षणपुण्यवतः करोति इति वा—
(पुण्यः).

पूञः पुणतेर्वा त्रेत्वपि हि कल्पेषु न्यरूप्यनावं प्रागेव. ❀

क एवं वचनात् दुःस्वप्नोपशमनतया स्वात्मानं गजेन्द्रं तच्च सरः स्मरतां भाव्यनिष्टसूचनं दुःस्वप्नं नाशयति अपनोदयतीति—
(दुःस्वप्ननाशनः).

निरु०—९२५ कीर्त्यास्मदादीनपि यो गजेन्द्रत्राणरूपया ।
(पुण्यः) स स्यात् पुनातीति पडर्णः पावनत्वतः ॥ ७२४ ॥
९२६गजेन्द्रमोक्षणाध्यायजपाद्दुःस्वप्नजं फलम् ।
नाशयत्यञ्जसा योऽसाविति (दुःस्वप्ननाशनः) ॥ ७२५ ॥

{ १६८ / ७२७ } (९२७) वीरहा, (९२८) रक्षणः,

ॐ वीरघ्ने नमः । ॐ रक्षणाय नमः ।

भा०—( २ ) " इत्युपक्रम्य दुःस्वप्नो नश्यते तेषाम् " इति.
( ३ ) " दुःस्वप्नोपशमायालम् " इति च. ❋ वि० ध० ।
वीरं तद्बाधकं हतवान्—
( वीरहा ).
(१) "मोक्षयामास नागेन्द्रं पाशेभ्यः शरणागतम्" इति. ❋ वि०ध०६९।
तं स्पर्शनपरिरम्भणसान्त्वनादिभिः रक्षितवान्—
( रक्षणः ).

निर्व०—( १ ) " णश, अदर्शने " धा० दिवा० कौ०पृ०४५८
णो नः. णिच् वृद्धिः. ल्युरित्यादि. अनः णिलोपः.
( २ ) " ञिष्वप्, शये " दुष्पूर्वः. धा० अदा० कौ०पृ०४४९
(३) " स्वपो नन् " इति नन्. ❋ ३।३।९१॥कौ०पृ० ६५८
शरणागतं गजेन्द्रं पाशेभ्यो मोक्षयंश्च अयं वीरं
तद्बाधकं हन्ति स्मेति—
( वीरहा ). हनः क्विबुक्तः.
( १ ) " अज, गतिक्षेपणयोः " धा० भ्वादिः कौ०पृ०३९१
(२) "स्फायितञ्चि०" इत्यादिना रक्. उणा०पा०२कौ०पृ०६१९०
(३) "अजेर्वी०" गुणः. अनिट्. वीरयतेः२।४।५६॥कौ०पृ०३९१
पचाद्यचि णिलोपो वा. हन्नन्तदीर्घादि. ❋
तं स्पर्शनपरिरम्भसान्त्वनादिभी रक्षतीति—
( रक्षणः ).

निरु०—९२७ वीरं तद्बाधकं मृत्युं हतवान् यस्स ( वीरहा ) ।
९२८ स्पर्शसंश्लेषणाद्यैस्तं रक्षतीति स ( रक्षणः ) ॥ ७२६ ॥

(९२९) सन्तो,

ॐ सन्ताय नमः ।

भा०—(१) "स्पर्शयामास हस्तेन" "इत्यादि. ❀ वि०ध०६९।

एवमाश्रितान् सन्तनोतीति—

(सन्तः).

(१) "अन्येष्वपि दृश्यते" ३।२।१०१ ॥ कौ०पृ०५८५

इति डः. तेषामस्तीति वा सन्तः. वचनव्यत्ययः. तेभ्यः इष्टं दत्तवान् सनोतेर्निष्ठा.

(२) "जनसन०" इत्यादिना आत्त्वविकल्पः. ❀ ६।४।४२॥कौ० पृ० ४५२

निर्व०—(१) "रक्ष, पालने" नन्द्यादिल्युः.धा०भ्यादिःकौ०पृ०४०९

(२) "कृत्यल्युटः०" ३।३।११३ ॥ कौ०पृ०६६३

इति बाहुलकात् कर्तरि ल्युट्.

(३) "बहुलमन्यत्रापि" उणा० पा० २ कौ० पृ० ६२४

(४) "इति युज् वा" अनः. "अट्कुप्वाङ्०" ८।४।२॥कौ०पृ०३२

इति णत्वम्. ❀

एवमाश्रितान् तदिष्टं वासं तनोतीति वा तेषामयमस्तीति सन्निति वा तेभ्य इष्टं सनोति ददातीति वा—

(सन्तः). आद्ये,

(१) "तनु, विस्तारे" धा० तना०कौ०पृ०४७२

संपूर्वः. अनुस्वारादि.

(२) "अन्येष्वपि०" ३।२।१०१ ॥कौ०पृ०५८५

निरु०—९२९ यः स्वाश्रितान् संतनोति स (सन्त) इति कथ्यते ।

तेषामस्तीति वा सन्तो वचनव्यत्ययः स्मृतः ॥ ७२७ ॥

तेभ्य इष्टं दत्तवान् वा सनोतेस्सन्त उच्यते ।

(९३०) जीवनः,

ॐ जीवनाय नमः।

शा०—स्वहस्तेन हननात् ग्राहमपि गन्धर्वत्वेन जीवयन्—(जीवनः).

(१) "स हि देवलशापेन हूहूर्गन्धर्वसत्तमः। ग्राहत्वमगमत् कृष्णात् वधं प्राप्य दिवं गतः" इति. ❀ वि०भ०६९।

निर्व०—इति डः. टिलोपः. अन्यत्रास्तेश्शतरि व्युत्पादितात् सच्छब्दात् जस् एकत्व एव.

(३) "व्यत्ययो बहुलम्" ३।१।८५॥ कौ०पृ०६८५ इति सुब्व्यत्ययः. छान्दसः. उक्तो हि छन्दोभावः. तत्र च बहुवचनमिह जस्. शतुरुगित्त्वात्

(४) "उगिदचाम्०" ७।१।७०॥ कौ०पृ०६५ इति नुम्. अनुस्वारपरसवर्णौ. सोरुत्वम्. अन्यत्र,

(५) "षणु, दाने" तानादिकः. भा०ना० कौ०पृ०४७२ षत्सः. ततोऽविवक्षितकर्मकतया अकर्मकात् कर्तरि क्तः.

(६) "उदितो वा" ७।२।५६॥ कौ०पृ०६६८ इति क्त्वायामिड्विकल्पान्निष्ठायां नेट्. तत एव प्रागुक्तन्यायादिह,

(७) "जनसनखनां सन्झलोः" ६।४।४२॥ कौ०पृ०४५२ इति नात्वम् न चान्यत्.

अनुस्वारपरसवर्णौ. ❀

स्वहस्तेन हननात् ग्राहमपि गन्धर्वत्वेन जीवयतीति—(जीवनः).

निरु०—९३० स्वहस्तेन हतं ग्राहं गन्धर्वत्वेन जीवयन्॥७२८॥ पूर्वशापं निरस्याथ यस्तिष्ठति स (जीवनः)।

१ जीवनम्।

(९३१) पर्यवस्थितः ॥ श्लो० ॥१००॥ (९३२)अनन्तरूपः

ॐ पर्यवस्थिताय नमः । ॐ अनन्तरूपाय नमः ।

भा०—वात्सल्यात् गजेंद्रं परिपरितोऽवस्थित इति— ( पर्यवस्थितः ).

( १ ) " प्रीतिमान् पुण्डरीकाक्षः शरणागतवत्सलः " वि०ध० । इति. ❋

ईदृशि सद्यः संपाद्यानि रूपाण्यस्येति— ( अनन्तरूपः ). ❋

निर्व०—( १ ) " जीव, प्राणधारणे " धा० भ्वादिः कौ०पृ०४०५ णिच् ल्युटि "२१३" त्यो" दि. अनः. णेर्लोपः. क्लीबपाठे तु लिङ्गमशिष्यमि "२१८" त्यो" दि. हूहूर्नामगन्धर्वः देवलशापात् ग्राहरूपी पुरुषोत्तमात् वधं प्राप्य पुनर्दिवमगमदिति हि प्रथा? ❋

शरणागतवत्सलश्चायं वात्सल्यात् गजेन्द्रं परितोऽवस्थित इति— ( पर्यवस्थितः ).

तिष्ठतिः पर्यवपूर्वः. सत्वं तोः ष्टुः परेर्यण् ततः कर्तरि क्तः. अनिट्.

( १ ) " द्यतिस्यति० " ७।४।४०॥ कौ०पृ०५९४ इत्यात इत्त्वम्. अगुणः. ❋

ईदृशि सद्यः संपाद्यानि चानन्तानि बहूनि रूपाण्यस्येति— ( अनन्तरूपः ).

निरु०—९३१वात्सल्याद्यो गजेन्द्रं तु परितो वसनाच्च सः ॥ ७२९ ॥
( पर्यवस्थित ) आख्यातो नवार्णो ह्यमितप्रदः ।
९३२( अनन्तरूपः ) स स्याद्वै यस्यासंख्येयविग्रहाः ॥ ७३० ॥

(९३३) ऽनन्तश्रीः

ॐ अनन्तश्रिये नमः ।

शा०—तेभ्यो देयाः स्वप्राप्तिपर्यन्ताः अनन्ताः श्रियोऽप्यस्येति—(अनन्तश्रीः).

(१) "ततो दिव्यवपुर्भूत्वा हस्तिराट् परमं पदम् । जगाम" इति. ❋ वि० ध० ६९ ।

यः शरणागतगजेन्द्रद्वेषिणे जलकीटाय क्रोधः स इदानीं जितः इति—

निरु०—(१) "ऋ. शब्दे" धा० अदा० कौ० पृ० ४३९

(२) "खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः" उणा० पा० ३ कौ० पृ० ६२६

इति पः. इडभावः. धातोर्दीर्घश्च निपात्यते. अमतेस्तनि अन्त उक्तः.

(३) "तितुत्र०" ७।२।९॥ कौ० पृ० ६०८

इति नेट्. नञ्समासः. नलोपः. नुट् बहुव्रीहिः. तद्वर्गः. ❋

ततो गजेन्द्रमस्मात् कलेवराद्विप्रमोक्षद्दिव्यं च वपुः प्रापय्य तस्य स्वसायुज्यप्रदानात् तेभ्यो देयाः ऐहिकायाः स्वप्राप्तिपर्यन्ताः अनन्ता बह्व्यः श्रियस्संपदोऽप्यस्येति—(अनन्तश्रीः). श्रिञः.

(१) "क्विब्वचि०" उणा० पा० २ कौ० पृ० ६२१

इत्यादिना क्विपि दीर्घे च श्रीशब्द ऊचे. अनन्तशब्दश्चानुपदमेवोक्तः. बहुव्रीहिः. प्राग्वत्.

(२) "नद्यृतश्च" ५।४।१५३॥ कौ० पृ० १६१ इति न कप्. यतः

(३) "नेयङुवङ्०" इति नदीसंज्ञानिषेधात् इत्युक्तम्. ❋ १।४।४॥ कौ० पृ० ५४

तथा पूर्वं प्ररूढोपि इदानीं जितः निर्जितः मन्युः शरणागतविद्वेषिजलकीटगोचरः क्रोधोऽनेनेति—

निरु०—९३३ देयाः स्वप्राप्तिपर्यन्ताः श्रियोऽनन्ताश्च नित्यशः ।
मपमेभ्यो यस्य सन्ति सो (ऽनन्तश्री) रिति स्मृतः ॥ ७३१ ॥

(९३४) जितमन्युः, (९३५) भयापहः,।

---

ॐ जितमन्यवे नमः। ॐ भयापहाय नमः।

---

भा०—(जितमन्युः). ❋

अस्मदादीनामपि स्ववात्सल्येन तादृशानाथत्वभयं वध्यादित्याशंसनार्हः—

(भयापहः).

(१) "आशिषि हनः" इति डः. ३।२।४९॥कौ०पृ०५७९

(२) "भये महति मग्नांश्च त्राति नित्यं जनार्दनः" इति. ❋

---

निर्व०—(जितमन्युः).

(१) "मन, ज्ञाने" भा० दिवा० कौ०पृ० ४५६

(२) "मनु, अवबोधने" वा. धा० तना०कौ०पृ०४७३

(३) "यजिमनिशुन्धिदसिजनिभ्यो युच्" उणा०पा०३कौ०पृ०६२६ इति युच्. अननुनासिकत्वात् न योरनः.

(४) "जि, जये" कर्मणि क्तः. धा०भ्वादिः कौ०पृ०४०५ अगुणः. अनिट्. बहुव्रीहिः. ❋

अस्मदादीनामपि स्ववात्सल्यात् तत्रैव तादृशानाथत्वभयापनोदनाशंसनार्हतया भयम् अनाथत्वभयम् अपवध्यादिति—

(भयापहः).

(१) "हन, हिंसागत्योः" अपपूर्वः. धा०अदा०कौ० पृ०४३५

---

निरु०—९३४ गजेन्द्रद्रोहिणो ये च कीटाद्या जलवासिनः।
यस्तेषु मन्युं जितवान् (जितमन्युः) स कथ्यते॥ ७३२॥
९३५ अनाथत्वभयं हन्ति वात्सल्येनैव मादृशाम्।
(भयापहः) समाख्यातः वर्ण्यो मनुरुत्तमः॥७३३॥

(९३६) चतुरश्रो.

ॐ चतुरश्राय नमः ।

भा०—यद्यपि स्वमहिमोचितं गर्जते गजाय श्लथाम्बराभरणमालं जगाम यद्यपि क्षुद्रजलकीटाय चुकोप, तथापि—
( चतुरश्रः ).
समवेतकारी आश्रितार्थः संभ्रमो हि साम्प्रतम्. ॐ

निरु०—डप्रकरणे,
(१) "आशिषि हनः" इति ३।२।४९॥ कौ०पृ०५७९
आशीर्विषये डः, टिलोपः, विभेनेरचि स प्रशब्द उक्तः, दीर्घः. ॐ
स्वमहिमोचितं गर्जते गजाय श्लथाम्बराभरणमालं गमनेऽपि क्षुद्रकीटाय ग्राहाय कोपेपि आश्रितार्थसंभ्रमस्साम्प्रतमिति समवेतकारितया चतस्रोऽश्रयोऽस्येति
चतुरश्रः युक्तकारीति—
( चतुरश्रः ).
विग्रहदर्शनमात्रमेतत् नानाविधयथार्थेऽपि निवेश्यम्,
(१) "अशू, व्याप्तौ" धा०स्वादिः कौ०पृ०४६३
(२) "अश, भोजने" धा. ततः क्तिन्प्रकरणे, धा०क्र्यादिः कौ०पृ०४७८
(३) "वङ्क्र्यादयश्च" उणा०पा०४ कौ०पृ०६३५
इति तस्याकृतिगणत्वात् क्तिन्नन्तोयमश्रिशब्दो निपात्यते.
(४) "चते-चदे, याचने" धा०भ्वादिः कौ०पृ०४२१
(५) "चतेरुरन्" उणा०पा०५ कौ०पृ०६४४
इत्युरनि साधितोऽयं चतुश्शब्दः. प्रागेव बहुव्रीहिः. पूर्वस्य पूर्ववत्.

निरु०—समवेतकारी यः स्याद् ( चतुरश्रः ) स कीर्तितः ।

१ नां ।

( ९३७ ) गभीरात्मा, ( ९३८ ) विदिशो,

ॐ गभीरात्मने नमः । ॐ विदिशाय नमः ।

---

भा०—अन्येषां चतुर्मुखमुखानाम् अप्रधृष्यगाम्भीर्यः— ( गभीरात्मा ). तेषां विनयगद्गदस्तुतिगिरामस्य दूरे विविधाः दिशा देशा इति— ( विदिशः ).

---

निर्व०— ( ६ ) " सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः " ५।४।१२० ॥ कौ०पृ० १३७ इति बहुव्रीहौ अच्प्रत्ययान्तोऽयं निपातितः. ( ७ ) " यस्य० " इति लोपः. ❀ ६।४।१४८॥कौ०पृ०५६ चतुर्मुखमुखान्यदेवतादुराधर्षगाम्भीर्यतया गभीरो गम्भीरः आत्मा अस्येति—( गभीरात्मा ). आत्मा व्युदपादि. " गम्लृ, गतौ " धा०भ्वादिः कौ०पृ०४३० ईरन्प्रकरणे, " गभीरगम्भीरौ " उणा०पा०४कौ०पृ०६३३ इतीरन् गमेर्मस्य भः. पक्षे धातोर्नुम् च निपात्यते इति. इति ईरन्. मस्य भश्च. इह नुंवर्जम् बहुव्रीहिः. सांहितो दीर्घः. ततो नान्तदीर्घादि. ❀ तेषां विनयगद्गदस्तुतिगिरां दूरीभूताः विविधाः दिशाः अनवधिकातिशयस्वरूपरूपगुणविभवानन्तमाहात्म्यसीमाः अस्येति— ( विदिशः ).

---

निरु०—९३७ धात्रादीनामप्रधृष्यं गाम्भीर्यं यस्य विद्यते॥ ७३४ ॥
( गभीरात्मा ) स विज्ञेयो वरवर्णो मनुरुत्तमः।
९३८ विनयाद्गद्गदस्तोत्रधात्रादीनां विशेषतः ॥ ७३५ ॥
दूरस्य विविधा देशा ( विदिशः ) स तु कीर्तितः ।

(९३९) व्यादिशो, (९४०) दिशः, ॥

ॐ व्यादिशाय नमः। ॐ दिशाय नमः।

भा०—तेषाम् अभिमतं तत्तत् पदम् अतिसृजतीति—
(व्यादिशः).
इगुपधत्वात् कः. ❁
न तान् गजेन्द्रवदन्तरङ्गीकरोति किंतु आज्ञापयतीति—
(दिशः). पूर्ववत् कः.

निर्व०—(१) "दिश, अतिसर्जने" धा० तुदा० कौ० पृ० ४६४
क्विप्. अगुणः.
(२) "आपं चैव हलन्तानाम्०" कौ० पृ० ८८
इति भागुरिरीत्या हलन्तात् टाप्. विपूर्वो बहुव्रीहिः.
उपसर्जनह्रस्वः. ❁
तेषामभिमतं तत्तत् पदं व्यादिशति अतिसृजति ददातीति—
(व्यादिशः). इहापि.
(१) "दिश, अतिसर्जने" धा० तुदा० कौ० पृ० ४६४
इत्येव धातुः. व्याङ्पूर्वः. अतिसर्जनम् दानं देर्यण्.
इगुपधलक्षणः कः. अगुणः. ❁
वचनात् गजेन्द्रमोक्षणं दृष्ट्वा विस्मितांस्तान् ब्रह्मादीन्
प्राञ्जलीन् वन्दमानांश्च गजेन्द्रवदन्तरङ्गीकरोति परंतु दिशति
तानाज्ञापयतीति—
(दिशः).

निरु०-९३९ ब्रह्मादीनां तत्तत्स्थानसर्जनाद्(व्यादिशः)च सः। ७३६;
९४० धात्रादीन् सर्वकृत्येषु ह्याज्ञापयति यस्सदा।
(दिशः) स तु समाख्यातः षड्वर्णो मनुरुत्तमः॥ ७३७॥

श्लो० ॥ १०१ ॥ ( ९४१ ) अनादिर्,

ॐ अनादये नमः ।

भा०—( १ ) " गजेन्द्रमोक्षणं दृष्ट्वा सर्वे सेन्द्रपुरोगमाः । ब्रह्माणमग्रतः कृत्वा देवाः प्राञ्जलयस्तदा । ववन्दिरे महात्मानं प्रभुं नारायणं हरिम् । विस्मयोत्फुल्लनयनाः प्रजापतिपुरस्सराः " इति. वि०ध०६९ ।

श्रीपौष्करे,

( २ ) " गजेन्द्रग्राहमोक्षी च संसारोत्तारलक्षणः " इति. ※

एवं तिर्यक्ष्वपि भक्तेषु विवशो ब्रह्मादिषु फल्गुफलमेव प्रयच्छति यस्मात्—

( अनादिः ).

तैरन्यपरैर्न स्वामित्वेनादीयत इति. ※

निर्व०—प्राग्वदेव धातुः. इहाज्ञापनक्रियः. अनेकार्था हि धातवः कः. अगुणः. ※

कुतोऽयमेवं तिर्यक्ष्वपि भक्तेषु विवशो ब्रह्मादिषु फल्गुपदमेव प्रयच्छति तत्रोच्यते यतस्तैरन्यपरैः स्वामित्वेनायमादीयते उपादीयते इति-

आदिः स नेति—

( अनादिः ).

( १ ) " डुदाञ्, दाने " धा०जुहो०कौ०पृ०४५१

आङ्पूर्वः. घत्वे,

( २ ) " उपसर्गे घोः किः " ३।३।९२॥कौ०पृ०३५८

निरु०—९४१. देवतान्तरभक्तैर्यः कुत्सितैश्चापि सर्वदा । नादीयते स्वामिमत ( मनादिः ) परिकीर्तितः ॥ ७३८ ॥

{ ९४२ / ७३९ } भूर्भुवो,

ॐ भुवो भुवे नमः ।

भा०—भवतीति भूः स्वदास्यज्ञानेनात्मलाभवान् तस्य भुवः स्वयमेव भूः पदं भवतीति—

( भूर्भुवः ).

( १ ) " निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः" ❀

निर्व०—इति कर्मणि क्तः. आल्लोपः. नञ्समासः. नञो नलोपः. नुट्. ❀

भगवित्रादर्शितस्य च अस्य तदाधारत्वकथनात्

भुवः स्वदास्यज्ञानेनात्मलाभवान् भवतीति भूः. तस्य स्वयमेव भूः पदम् अतो भुवो भूरिति—

( भूर्भुवः ).

एकस्थान. भवतेर्धातोः.

( १ ) " अकर्तरि च कारके० " इत्यनुवृत्तौ, ३।३।१९॥ कौ०पृ० ६४७

( २ ) " संपदादिभ्यः क्विप् " ३।३।९४॥ कौ०पृ०६७८

इति स्त्रियां क्तिनोऽपवादोऽधिकरणे क्विप्.

( ३ ) " भुवस्संज्ञान्तरयोः" ३।२।१७९॥ कौ०पृ०६०७

इति कर्तरि वा. पुनरपि स एव आवर्तते.

( ४ ) " क्विप् च " ३।२।७६॥ कौ०पृ०५८१

इति क्विप्. ततो ङस्.

( ५ ) " अचि श्नुधातु०" ६।४।७७॥ कौ०पृ०४५

निरु०—९४२तद्यस्वदास्यज्ञानेन ह्यात्मलाभवतः पदम् । भवति स्वयमेवेति ( भूर्भुवः ) स च कथ्यते ॥ ७३९ ॥

(९४३) लक्ष्मीः, (९४४) सुवीरो,

ॐ लक्ष्म्यै नमः। ॐ सुवीराय नमः।

भा०—इति तेषाम्—
(लक्ष्मीः). सर्वा संपच्च.
(१) "भवद्दत्तं मे राज्यं च जीवितं च सुखानि च" इति. ❋
रा० यु०१६—६।
(२) "कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः।
कृष्णः परायणं तेषां ज्योतिषामिव चन्द्रमाः" ❋
भा०द्रो०१८३—२४।
तेषां विनिपातप्रतीकारः—
(सुवीरः). ❋

निर्व०—इत्यादिना ओरुबङ्. सोरुत्वादि. आविष्टलिङ्गोयमि"त्यादि.
तेषामयं लक्ष्मीस्सर्वा संपत् इति—
(लक्ष्मीः).
(१) "लक्ष, दर्शनाङ्कनयोः" धा०चुरा० कौ०पृ०४७९
चुरादिः णिच्. ईरिति वर्तमाने.
(२) "लक्षेर्मुट् च" उणा०पा०३ कौ०पृ०६३२
इति ईः. तस्य मुट् च. णिलोपः "नेट् ०"७।२।८॥कौ०पृ०५८१
इति नेट्. अयं चाविष्टलिङ्ग"इत्यादि. संहितायां रुत्वोत्व-
गुणाः. ❋
तेषां विनिपातप्रतीकारपरतया सुतरां वीर इति—(सुवीरः).

निर्व०—९४३ आत्मलाभवतां सर्वसंपत् (लक्ष्मीः) स यत् स्मृतः।
९४४ तेषां यो विनिपातस्य प्रतीकारं करोति सः॥ ७४०॥
(सुवीर) इति विख्यातः सतार्णो मनुरुत्तमः।

(९४६) रुचिराङ्गदः, ।

ॐ रुचिराङ्गदाय नमः ।

---

भा०—भोग्यत्वं रुचिरम् अतिमनोहरमनुभवयोग्यं अङ्गं ददातीति—
(रुचिराङ्गदः). यथा,
(१) "न ते रूपम्" इत्यादि. जितन्ते ।
अथ सर्वभगवद्व्यापाराणां प्रयोजनं
तदनुभवक्षमकरणयुक्तानन्यानपि जनयतीति—

---

निर्व०—अजेः वीरयतेश्च वीर उक्तः.
सुष्ठु भक्तेभ्यो रुचिरमतिमनोहरम् अङ्गं दिव्यरूपं
ददाति अनुभवयोग्यं वितरतीति—
(रुचिराङ्गदः). ददातेः.
(१) "आतोऽनुपसर्गे०" ३।२।३॥कौ०पृ०५७०
इति कः. आल्लोपः. अङ्गेर्गतिकर्मण इदित्वान्नुम्. अनुस्वार-
परसवर्णौ. पचाद्यच्.
(२) "रुच, दीप्तौ अभिप्रीतौ च" धा० भ्वादिः कौ०पृ०४११
(३) "इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहि-
मुचिरुचिरुधिबन्धिशुषिभ्यः किरच्" उणा०पा०१कौ०पृ०६१२
इति किरच्. अगुणः. दीर्घः.
अथ सर्वभगवद्व्यापाराणां प्रयोजनमभिधीयते तदनु-
भवक्षमकरणयुक्तानन्यानपि जनयतीति—

---

निरु०—९४५प्रपन्नेभ्यः स्वानुभवयोग्यमङ्गं मनोहरम् ॥ ७४१ ॥
अप्राकृतं सदा दत्ते योऽसौ स्याद् (रुचिराङ्गदः) ।

(९४६) जननो, (९४७) जनजन्मादिः.

ॐ जननाय नमः । ॐ जनजन्मादये नमः ।

भा०—(जननः). ❀
तेषां जनानां जन्मनः आदिर्निमित्तं प्रयोजनमिति—
(जनजन्मादिः). यथा,
(१) "अद्य मे सफलं जन्म" वि०पु०५-१-७३।
(२) "जन्मन्यविफला सैका या गोविन्दाश्रया क्रिया। सुजन्म देहमत्यन्तं तदेवाशेषजन्तुषु । यदेव पुलकोद्भासि विष्णुनामनि कीर्तिते । अद्य जन्म यथार्थं मे" इत्यादि. ❀

निर्व०—(जननः).
(१) "जनी, प्रादुर्भावे" णिच्. धा०दिवा०कौ०पृ० ४५४
(२) "जनिवध्योश्च" ७।३।३५॥कौ०पृ०४५५
इति प्रतिषेधात् नोपधावृद्धिः. ल्युरित्या"दि. अनः णिलोपः. ❀
तेषां जनानां जन्मनः आदिः निमित्तं प्रयोजनमिति—
(जनजन्मादिः).
ददातेराङ्पूर्वात् उपसर्गे घोः किः, आल्लोपः. ततश्चादिशब्द इत्युक्तम्.
(१) "जनी, प्रादुर्भावे" धा०दिवा०कौ०पृ०४५४
(२)"सर्वधातुभ्यो मनिन्"इति मनिन्. उणा०पा०४कौ०पृ०६३९
(३) "नेड्०" ७।२।८॥कौ०पृ०५८१
इति नेट्. नलोपः, स एव धातुरावर्तते. पचाद्यच्. दीर्घः.

निरु०—९४६अथोच्यतेऽत्र भगवद्व्यापाराणां प्रयोजनम् ॥७४२॥
९४७( जननो ) ( जनजन्मादि ) र्देवार्णो जन्मनाशकः ।

{९४८ / ३५९} भीमो,

ॐ भीमाय नमः ।

ना०—एवंविधमहानुग्रहविमुखानाम्—
( भीमः ).
गर्भनरकादिहेतुः स ह्यनात्मनीनान् हितबुध्या शत्रुवद्भावयते
( १ ) "तानहं द्विषतः" इति. ✿ भ० गी० ।
अन्येष्वपि जगदहितनिरतेषु हिरण्यादिषु—

निर्व०—नाहितः इदमेव हि जन्मनः फलम् यदस्य नामश्रवणादि-
मात्रेण सपुलकीभवनम्. ✿
एवंविधमहानुग्रहविमुखानाम् अनात्मनीनानां
गर्भनरकादिहेतुत्वेन शत्रुवद्भीषणतया भी बिभ्य-
त्यस्मादिति—
( भीमः ).
(१) "ञिभी. भये" सकर्मकरणे. धा० जुहो० कौ०पृ०४४९
( २ ) "भियष्पुग्वा" उणा०पा०१ कौ०पृ०६१७
इति मक्. पाक्षिको धातोष्षुक्. चेति इह केवलो मक्. अगुणः.
अनिट्.
( ३ ) "भीमादयोऽपादाने" ३।४।७४॥ कौ०पृ०६४५
इति अपादानेयं साधुः. ✿
अन्येष्वपि जगदहितनिरतेषु हिरण्यादिषु भीमः पराक्रमः
अस्येति—

निरु०—९४८एवंविधानुग्रहस्य विमुखानान्निरन्तरम् ॥ ७४३ ॥
गर्भजन्मादिहेतुत्वाद् ( भीम ) इत्युच्यते बुधैः ।

( ९४९ ) भीमपराक्रमः, ॥ श्लो० ॥ १०२ ॥
( ९५० ) आधारनिलयो,

ॐ भीमपराक्रमाय नमः । ॐ आधारनिलयाय नमः ।

भा०—( भीमपराक्रमः ).
भयमप्यनुग्रह एव यथोन्मादिनो निगलादिनिग्रहस्तस्य तद्बान्धवानां चानुग्रहः. ❋
धार्मिकतया जगदाधाराः प्रह्लादविभीषणपाण्डवादयः तेषां निलयः-( आधारनिलयः ).
ते ह्याधाराः यथा, श्रीविष्णुस्मृतौ,
( १ ) " वर्णाश्रमाचारपराः सन्तः शास्त्रैकतत्पराः । त्वां धरे ! धारयिष्यन्ति तेषु त्वद्भारमाहितम् " इति. ❋ वि० स्मृ० ।

निर्व०—( भीमपराक्रमः ).
क्रमेः परापूर्वात् भावे घञ्.
( १ ) " नोदात्त० " ७।३।३४॥ कौ० पृ० ७४१
इत्यादिना न वृद्धिः. तथा चायं न्यक्कृपि हि पराक्रमः अनुपदमेव च भीम उक्तः. भयमपि ह्यनुग्रहः ? यथोन्मादिनो निगलादिनिग्रहोऽपि तस्य तद्बान्धवानां चानुग्रहः. ❋ वचनात् धार्मिकाः प्रह्लादविभीषणपाण्डवादयो जगतामाधाराः तेषां निलयः आस्पदमिति—
( आधारनिलयः ).
( १ ) " लीङ् श्लेषणे " धा० दिवा० कौ० पृ० ४५४

निरु०—९४९ लोकाहितेषु नितरां हिरण्यादिषु सर्वदा ॥ ७४४ ॥
भीमः पराक्रमो यस्य स स्याद् ( भीमपराक्रमः ) ।
९५० धार्मिका जगदाधाराः प्रह्लादाद्या विशेषतः ॥ ७४५ ॥
तेषां तु निलयं स्थान ( माधारनिलय ) श्च सः ।

{ ९५१ / ४३ } धाता,

ॐ धात्रे नमः ।

ना०—स्वयं च धर्माचार्यकेण—
(धाता).
(१) " न मे पार्थास्ति कर्तव्यम् " "इत्यादि. ॐ गी०३—२१।
एवं निष्पादितस्वानुभवशक्तीनां सायमिव पुष्पस्य ह्रासो
भोग्यतोल्लासोऽस्येति—

निर्व०—(२) " ली. श्लेषणे " धा०:निपूर्वः. ततः, धा०क्र्यादिः
कौ०पृ०४७६
(३) " एरच् " इत्यधिकरणे अच्. ३।३।५६॥कौ०पृ०६५३
(४) " विभाषा लीयतेः " ६।१।५१॥कौ०पृ०४५४
इत्यात्वे वैकल्पिके प्राप्ते,
(५ " निमिमीलियां खलचोरात्वं नेति वक्तव्यम् "
इति तत्प्रतिषेधः. गुणः अय्.
(६) " धृञ्. धारणे " आङ्पूर्वः. धा०भ्वादिः कौ०पृ०४२३
(७) " अकर्तरि च कारके० " ३।३।१९॥ कौ०पृ०६४७
इत्यधिकरणे घञ्. वृद्धिः. रपरत्वम्. ॐ
स्वयं च धर्माचार्यकेण दधातीति—
(धाता)
(१) " डुधाञ्, धारणपोषणयोः " धा०जुहो०कौ०पृ०४५१
तृच्. अनिट्. अनङादि. ॐ
एवं निष्पादितस्वानुभवशक्तीनां सायंपुष्पस्येव ह्रासः
भोग्यतोल्लासोऽस्येति—

निरु०—२.५.१स्वयं च धर्माचार्यत्वाद्(धाते)ति परिकीर्त्यते७४६

(९५२) पुष्पहासः, (९५३) प्रजागरः, ।

ॐ पुष्पहासाय नमः । ॐ प्रजागराय नमः ।

भा०—(पुष्पहासः). ❀
सस्येष्विव कृषीवलः तेषु रात्रिंदिवं प्रजागर्तीति—
(प्रजागरः).
(१) " य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः "
इति. ❀

निरु०—(पुष्पहासः).
(१) " हसे, हसने " धा०भ्वादिः कौ०पृ०४१०
भावे घञ्. वृद्धिः.
(२) " पुष्प. विकसने " धा०दिवा०कौ०पृ०४५३
दिवादिः. पचाद्यच्. बहुव्रीहिः. व्यधिकरणानामप्यस्ति हि सः.
(३) " सप्तमीविशेषणे बहुव्रीहौ " २।२।३५॥कौ०पृ०१७३
इत्यत्र सप्तमीग्रहणात् ज्ञापकात् इत्युक्तम्. ❀
तेषु सस्येष्विव कृषीवलो रात्रिंदिवं प्रकर्षेण जागर्ति क्षीणनिद्रो भवतीति—
(प्रजागरः).
(१) " जागृ, निद्राक्षये " धा०अदा०कौ०पृ०४४६
प्रपूर्वः. पचाद्यच्. गुणो रपरः. ❀

निरु०—९५२ स्वात्मानुभवशक्तीनां सार्वपुष्पवदस्य वै ।
हासोस्ति भोग्यतोल्लासः (पुष्पहास) इति स्मृतः ॥ ७४७ ॥
९५३रात्रिंदिवं प्रजागर्ति सस्येष्विव कृषीवलः ।
भक्तेषु नितरां योऽसौ (प्रजागर) इहोच्यते ॥ ७४८ ॥

(९५४) ऊर्ध्वगः,

---

ॐ ऊर्ध्वगाय नमः।

---

भा०—कुतस्तदर्थमनिद्रो यतः—
(ऊर्ध्वगः).
स्वभावतुङ्गः. यथा,
(१) " महात्मनां संश्रयमभ्युपेतो नैवावसीदत्यतिदुर्गतोपि "
इति. ❀
तन्महत्त्वफलम् तदर्थे स्वाभाविकदास्यमार्गे आचरणं
तेषां प्रवर्तनमस्येति—

---

निर्व०—तदर्थं कुतोयमनिद्रस्तत्रोच्यते. अतिदुर्गततदनवसाद-फलकस्वभावतुङ्गताकतया ऊर्ध्वं गच्छति महान् भवतीति—
(ऊर्ध्वगः). गमेः,
(१) " अन्यत्रापि दृश्यते " ३।२।४८॥कौ०पृ०५७८
इति वक्तव्याड्डः. टिलोपः.
(२) " उर्द, माने क्रीडायां च " धा०भ्वादिः कौ०पृ०३८३
(३) " इण्शीभ्यां वन् " उणा०पा०१कौ०पृ०६१७
(४) " कृगृशॄदृभ्यो वः " उणा०पा०१ कौ०पृ०६१८
इत्ययं विधिर्बाहुलकादन्यतोपि भवतीति वन्. वो वा.
(५) " उपधायां च " ८।२।७८॥कौ०पृ०३८३
इति दीर्घः. बाहुलकात् पृषोदरादित्वाद्वा दस्य धः.
(६) " नेड्० " इति नेट्. ❀ ७।२।८॥कौ०पृ०५८१
तथा तेषां तदर्थे सन्मार्गे स्वाभाविकसात्त्विकदास्यमार्गे
आचारः आचरणम् अन्तर्भावितण्यर्थोयम् ण्यन्तो वा
उभयथापि प्रवर्तनमस्येति—

---

निरु०—९५४योऽसौ स्वभावतस्तुङ्ग (ऊर्ध्वगः) परिकीर्तितः।

## (९५५) सत्पथाचारः,

ॐ सत्पथाचाराय नमः।

भा०—( सत्पथाचारः ). यथा,

( १ ) " अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् " ॥३२॥ इत्यादि. ❋

एवं विषयविषमूर्छितनष्टात्मभ्यः आत्मोज्जीवनं ददातीति—

निर्व०—( सत्पथाचारः ).

( १ ) " चर, गतिभक्षणयोः" धा०भ्वादिः कौ०पृ०४०५ आङ्पूर्वः. एकत्र भावे घञ्. वृद्धिः. अन्यत्र णिच्. वृद्धिः.

( २ ) " एरच् " ३।३।५६॥कौ०पृ०६५३

इति भावे अच्. णिलोपः.

( ३ ) " पत्लृ, गतौ " धा०भ्वादिः कौ०पृ०४११

इनिः इत्यनुवृत्तौ,

( ४ ) " पतस्थ च " उणा०पा०४कौ०पृ० ६३२

इति, इनिः. तस्य थश्च. अस्तेश्शतरि सच्छब्द उक्तः. कर्मधारयः. जश्त्वचर्त्वे.

( ५ ) " ऋक्पूरब्धूः पथामानक्षे" ५।४।७४॥कौ०पृ०१८२

इति अप्रत्ययः समासान्तः. तस्य,

( ६ ) " तद्धिताः " इति तद्धितत्वात्, ४।१।७६॥कौ०पृ०१०६

( ७ ) " नस्तद्धिते " ६।४।१४४॥कौ०पृ०१३३

इति नान्तस्य भस्य टेर्लोपः. बहुव्रीहिः. दीर्घः. ❋

एवं विषयविषमूर्छितेभ्यः आत्मभ्यः प्राणम् आत्मोज्जीवनम् ददाति इति—

निरु०—९५५ ( सत्पथाचार) इत्युक्तः सन्मार्गे तत्प्रवर्तनात्॥७४९॥

{ ६६–३२३ / ४०१–९५६ } प्राणदः,

ॐ प्राणदाय नमः ।

ना०–( प्राणदः ). ❀

प्रणवेन ईदृशसंबन्धमुद्बोध्य,

( १ ) "मां नमस्कुरु" ❀ गी० १८–६५ ।

इति स्वचरणारविन्दयोः तान् प्रणमयतीति–

निर्व०–( प्राणदः ). ददातेः,

( १ ) "आतोनुपसर्गे०" ३।२।३॥ कौ०पृ०५७०

इति कः. आल्लोपः. अनितेः प्रपूर्वात्.

( २ ) "अकर्तरि च कारके०" इति अपादाने ३।३।१९॥ कौ०पृ०६४७

( ३ ) "हलश्च" ३।३।१२१॥ कौ०पृ०६६३

इति करणे वा घञ्. वृद्धौ दीर्घे संज्ञायां णत्वे च प्राण उक्तः. समुदायस्य संज्ञात्वे तु,

( ४ ) "अनितेः" ८।४।१९॥ कौ०पृ०४४६

इति णत्वे विशेषः. ❀

तेषां स्वस्वामिभावलक्षणसंबन्धमुद्बोध्य तान् अथर्वशिरःप्रोक्तरीत्या प्रणौति प्रणमयतीति वा, ईदृशसंबन्धशक्तिप्रतिपादकत्र्यक्षरमात्रप्रणवोऽस्य अस्तीति वा, तथा प्रणम्रीकृतैः तैः प्रणूयते प्रकर्षेण स्तूयते तोष्टूयत इति वा–

निरु०–९५६ कान्तादिविषयव्याप्त्या नष्टात्मभ्यः कृपावशात् ।
सदात्मोज्जीवनं योऽसौ ददाति ( प्राणदः ) स्मृतः ॥ ७५० ॥

(९५७) प्रणवः,

---

ॐ प्रणवाय नमः ।

---

ना०—( प्रणवः ).

(१) " प्राणान् सर्वान् परमात्मनि प्रणामयति एतस्मात् प्रणव इति" इति अथर्वशिरसि १ । ꙮ

---

निर्व०—( प्रणवः ).

(१) " णु. स्तुतौ " प्रपूर्वः. णो नः. धा०अदा०कौ०पृ०४३९

(२) " उपसर्गादसमासेपि" ८।४।१४॥ कौ०पृ०३८६

इत्यादिना णत्वम्. आद्ये णौतिरयं अन्तर्भावितण्यर्थस्य नमेरर्थे वर्तते. पचाद्यच्. गुणः. अव. द्वितीये,

(३) " पुंसि संज्ञायाम्०" ३।३।११८॥ कौ०पृ०६६३

इति करणे घः. अन्यत् सर्वं प्राग्वत्. ततः प्रणवशब्दात् मत्वर्थीयोर्श आद्यच्.

(४) " यस्य०" इति लोपः. तृतीये. ६।४।१४८॥ कौ०पृ०५६

(५) "अकर्तरि च कारके०" इत्यनुवृत्तौ ३।३।१९॥कौ०पृ०६४७

(६) " ऋदोरप् " ३।३।५७॥ कौ०पृ०६५३

इति कर्मण्यप्. अन्यत्तु प्राग्वदेव सर्वम् अजूवर्जम् प्रणम इति चेत् पाठः. तर्हि स्पष्ट एव प्राथमिकोर्थः. तत्र.

(७) " णम्. प्रह्वत्वे शब्दे " धा०भ्वादिः कौ०पृ०४३०

प्रपूर्वः. प्राग्वदेव नत्वणत्वे. णिच्. वृद्धिः. अमन्ततया नित्यं मित्त्वम्. उपसृष्टतया,

(८) "ज्वलह्वलह्मलनमामनुपसर्गाद्वा" ग०गणसूत्रम्. कौ०पृ०४१७

---

निरु०—९५७ आत्मोज्जीवनसंबन्धमुद्बोध्य प्रणवेन वै ।
पादारविन्दयोस्तान् यः प्रणामयति नित्यशः ॥ ७५१ ॥
( प्रणवः ) स समाख्यातः सनातो मोक्षदो मनुः ।

(९५८) पणः ॥ श्लो० ॥ १०३ ॥ {९५९ / ४३०}-प्रमाणं,

ॐ पणाय नमः । ॐ प्रमाणाय नमः ।

ना०—एवं तेषां स्वाम्यदास्यव्यतिहारेण व्यवहरति इति—
(पणः).
(१) " पण, व्यवहारे " ❀ धा०भ्वादिः कौ०पृ०३९८
एवं निस्संशयनिर्णयवेदरहस्यपरमार्थप्रत्यायकत्वात्—
(प्रमाणम्). ❀

निर्व०—इति विकल्पाप्रवृत्तेः ततो मितां ह्रस्वः.अथ पचाद्यच्. णि-लोपः, इदं च प्रागप्युक्तम्. प्रणव इत्येव तु मुख्यः पाठः. ❀
इत्थं तैस्सह स्वाम्यदास्यव्यतीहारेण पणते व्यवहरतीति—
(पणः).
(१) " पण. व्यवहारे स्तुतौ च " धा०भ्वादिः कौ०पृ०३९८
इह व्यवहारार्थोऽयम्. पचाद्यच्. ❀
एवं निस्संशयविपर्ययवेदरहस्यपरमार्थप्रत्यायकतया
सोऽर्थः प्रमीयतेऽनेनेति—
(प्रमाणम्).
(१) " माङ्, माने " धा०जुहो०कौ०पृ०४५०
प्रपूर्वः. करणे ल्युट्. अनः. दीर्घः.
(२) " कृत्यचः " इति णत्वम्. ८।४।२९॥ कौ०पृ०५५६
(३) " लिङ्गमशिष्यम् " इत्यादि. ❀ ॥ महाभाष्ये ॥

निरु०—९५८स्वाम्यदास्यव्यतीहारव्यवहारात्(पणः) स्मृतः ७५२
९५९ परमार्थत्रयीसारप्रत्यायकतया स्वयम् ।
(प्रमाण) मिति विख्यातः सतां मनुरुत्तमः ॥ ७५३ ॥

(९६०) प्राणनि

ॐ प्राणनिलयाय नमः ।

ना०—प्राणन्तीति प्राणाः अन्ये हि जीवाः ते स्वनीड इव शकुन्ताः तस्मिन् लीयन्ते इति—

(प्राणनिलयः).

(१) "पुंसि संज्ञायाम्०" इत्यादिना घः. ※ ३ । ३ । ११८॥ कौ०पृ०६६३

निर्व०—तथा प्राणाः अन्येपि जीवाः ते स्वनीड इव शकुन्ताः निलीयन्ते श्लिष्टा भवन्त्यस्मिन्निति—

(प्राणनिलयः).

लीयतेः लीनातेर्वा निपूर्वात्.

(१) "पुंसि संज्ञायाम्०" इति अधिकरणे घः ३।३।११८॥ कौ०पृ०६६३

(२) "विभाषा लीयतेः" ६।१।५१॥कौ०पृ०४५४

इति व्यवस्थितविभाषाविज्ञानान्नात्वम्. लीयतेरिति यका निर्देशो नतु श्यना अत उभयोरपि ग्रहणम्. गुणः. अय्.

यद्वा अयमेरजधिकरणे.

(३) तत्र च "निमिमीलियां खल्चोरात्वं न" कौ०वा० इति वक्तव्यात् तद्विप्रतिषिद्धम् शेषं प्राग्वत्. अनितिः प्रपूर्वः. पचाद्यच्. दीर्घः. संज्ञायाम् णत्वम् असंज्ञायां तु

(१) "अनितेः" ८।४।१९॥ कौ०पृ०४४६

इति वा. एवमुत्तरत्रापि. उभयत्र कर्तरि व्युत्पाद्योयम् प्राणशब्दः. षष्ठीसमासश्चायम्. प्रदर्शितं तु विग्रहमात्रम्. ※

निरु०—९६०यस्मिन्नित्यं प्रलीयन्ते प्राणा जीवाः सदाऽब्जजे ।
शकुन्ता इव नीडे स्वे स (प्राणनिलयः) स्मृतः ॥ ७५४ ॥

(९६१) प्राणभृत्, (९६२) प्राणजीवनः, । (९६३) तत्त्वं,

ॐ प्राणभृते नमः। ॐ प्राणजीवनाय नमः। ॐ तत्त्वाय नमः।

भा०—तान् मातृवद्धारयति चेति—
(प्राणभृत्). ❁
तान् अन्नपानीयादिवज्जीवयतीति—
(प्राणजीवनः). ❁
दधिदुग्धयोरिव दधिसारः चिदचितोर्व्याप्तिप्रयोजनाभ्यां
सारांशः—
(तत्त्वम्). यथा.

निर्व०—तान् प्राणान् मातृवद्धरति चेति—
(प्राणभृत्).
भृञः क्विपि तुक्. अगुणः. जश्त्वचर्त्वे. भृग् इति पाठे-
पि उक्तैव गतिः. ❁
तान् प्राणान् अन्नपानादिवज्जीवयति प्राणान्
धारयति इति—
(प्राणजीवनः).
(१) "जीव, प्राणधारणे" धा० भ्वादिः कौ० पृ० ४०५
णिच् ल्युरि "ल्यो" दि. अनः. णिलोपः. ❁
दधिदुग्धयोरिव दधिसारः चिदचितोः व्याप्तिप्रयोजनाभ्याम्
अयं सारांशतया तत्त्वं परमार्थभूत इति—(तत्त्वम्).

निरु०—९६१ तान् मातृवद्धारयति (प्राणभृत्) स स्मृतो बुधैः।
९६२ जीवयत्यन्नवज्जीवान् स उक्तः (प्राणजीवनः) ॥७७७॥
९६३ सारांशभूतो जगतो योऽसौ (तत्त्व) मिति स्मृतः।

(९६४) तत्त्ववित्,

ॐ तत्त्वविदे नमः।

भा०—(१) "परमार्थमशेषस्य जगतः प्रभवाप्ययम्। शरण्यं शरणं गच्छन् गोविन्दं नावसीदति"

(२) "एकतो वा जगत् कृत्स्नं एकतो वा जनार्दनः। सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः" इति. ❀

तथा तत्त्वमात्मनो वेत्तीति—

(तत्त्ववित्).

(१) "त्वमेव त्वां वेत्थ" इति.

(२) "स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम" इति. ❀

सर्वस्य चिदचिद्वर्गस्य अयमेक एव शेषी भोक्ता अभिमानी चेति—

निर्व०—(१) "तनु विस्तारे" अदिः इत्यनुवृत्तौ, धा० तना० कौ० पृ० ४७२

(२) "त्यजितनियजिभ्यो डित्" उणा० पा० १ कौ० पृ० ६१६ इति अदिः डित् टिलोपः. ततः;

(३) "तस्य भावस्त्वतलौ" ५।१।११९॥ कौ० पृ० ३०९ इति भावे त्वः.

(४) "खरि च" इति चर्त्वम् ८।४।५५॥ कौ० पृ० २० दस्य तः. आविष्टलिङ्गोयम् "इत्यादि. ❀

तथा श्रुत्युपबृंहणाभ्यां तत्त्वं स्वात्मतत्त्वम् स्वयमेव वेत्तीति—

(तत्त्ववित्).

वेत्तेः क्विप्. अगुणः. आवसानिकं चर्त्वम् निरूढे हि तत्त्वशब्दः. ❀

निरु०—९६४ वेत्ति यः स्वात्मनस्तत्त्वं (तत्त्ववित्) स च कथ्यते ७५६

